त्त्वादनित्यत्वाच्च न विशेषोऽपि। नापि सम-
वायः। सम्बन्धत्वेनाऽनवगमादनित्यत्वाच्च॥

नापि गुणः चतुर्विंशतावनन्तर्भावात्। नीलरूप एवास्यान्तर्भाव इति चेत्। न। नीलं

---

मान्यत्वादिति विवक्षितत्वात्। अतिरिक्तवृत्तिसामान्यत्वप्रत्यवस्थानस्यापि तथैव वाच्यत्वेन तन्निराकरणस्यापि तथैवोचितत्वात्। न च व्याघातोऽपि षष्ठ्योर्व्यधिकरणत्वेन सामान्यवत्पदस्य भावपरत्वेनान्यस्य सामान्यवत्त्वाभावादित्यर्थात्। प्रत्यक्षत्वादिति। लौकिकप्रत्यक्षत्वादित्यर्थः। अनित्यत्वादिति। ननु परिशेषस्याभाववादिना यावत्तेजःसंसर्गाभावरूपे तमसि हेत्वप्रसिद्धिः। ध्वंसात्यन्ताभावयोस्तदयोगात्। प्रागभावमात्रस्य वा तमस्त्वादिति चेत्। न समानकालीनतेजोविशेषासमानाधिकरणतेजःप्रागभावस्तदित्यभ्युपगमेनाभिधानात्॥

नापि गुण इति। गुणत्वावच्छिन्नप्रतियोगिकान्योन्याभाववदित्यर्थः। यद्यप्युत्तरत्रिकस्येव पूर्वत्रिकस्यापि निराकरणं युक्तम्। सूचीकटाहन्यायेनाल्पनिरूपणस्य कर्मणो वा प्रथमं तथापि सतोऽन्यथाक्रमस्य पुरुषाभिसन्धिवैचित्र्यमेव शरणम्। दृष्ट्वा चेदमल्पायाससाध्यं यदा कदापि सेत्स्यतीत्यभिसन्धिना पुंसामायाससाध्येपि प्रथमं प्रवृत्तिरिति। चतुर्विंशतावनन्तर्भावादिति। रूपादियावद्विशेषान्यत्वादित्यर्थः। रूपं गुणो रसो गुण इत्यादौ तादात्म्यव्यवस्थापकतया दृष्टस्य सामानाधिकरण्यस्य नीलरूपतमसोरपि दर्शनात् तमसो नीलरूपतादात्म्यसिद्धेर्द्रव्यत्वसिद्धिरिति नीलपदे जातिशब्दत्वभ्रमवान् शङ्कते। नील-

रूपं तम इति प्रत्ययाभावात् । एतेनारोपितं नीलं रूपं तम इति तदपि[1] परास्तम् । अन्यत्रापि नीलीद्रव्योपरक्तेषु वस्त्रचर्मकम्बलादिषु[2] तमोव्यवहारप्रसङ्गात् । गुणे शुक्लादयः पुंसीति

---

रूप एवेति । सत्यमेतत् । तादात्म्यनियतसामानाधिकरण्यमिति तदेव तु तमसो नीलरूपेणासिद्धम् । तद्धि सामान्योपक्रमे प्रयोगे विशेषोपक्रमे वा तृतीयप्रकारासम्भवात् । तत्र न तावदाद्य इत्याह । नीलं रूपं तम इति । रूपसामान्योपक्रमेण विधीयमानं तमस्त्वं मातिप्रसङ्गीदिति सामान्यस्य विवक्षितविशेषे विश्रान्त्यै नीलपदोपादाने नीलं रूपं तम इति स्यात् न च तथास्ति कथञ्चिदिति भावः । अत्रान्तरे दूषणातिदेशसौकर्यादारोपितं नीलं रूपं तम इति कन्दलोकारमतं दूषयिष्यन्नालोकाभावे यत्र क्वचिद्वारोपितं तत् तम इति विकल्प्याद्ये दूषणमाह । एतेनेति । नीलं रूपं तम इति प्रत्ययाभावेनेत्यर्थः । द्वितीय आह । अन्यत्रापीति । इह वस्त्रादिषु तम इति व्यवहारप्रसङ्गादित्यर्थः । अस्तु तर्हि विशेषोपक्रम इति द्वितीयः पक्षः । न चात्रापि स एव दोषः । नीलेन विशेषेणाक्षेपादेव रूपत्वसामान्यप्रतीत्युपपत्तेस्तद्वाचकरूपपदात् प्रयोगोपपत्तेरित्याशङ्क्य तथापि नीलं तम इतीष्यमाणः प्रयोगो न स्यादेवेत्याह । गुणे शुक्लादय इति । गुणे रूपादौ विशेष्ये वर्तमानाः शुक्लत्वादिजात्यवच्छिन्नविशेष्यताके रूपादौ वर्तमाना इति यावत् । शुक्लादयः शुक्ल-

---

(१) आरोपितं रूपं तदिति-पा॰ १ पु॰ ।

(२) पटादिषु-पा १ पु॰ ।

कृत्वा नीलस्तम इति प्रयोगप्रसङ्गाच्च । किं चायमन्धकारोऽसमवेतो वा द्रव्यान्यसमवेतो वा द्रव्यसमवेतो वा[1] असमवेतोऽपि जातिमान्न वा। आद्ये द्रव्यं स्यात् न गुणः। द्वितीये समवायाभा-

शुभ्रशुचिश्वेतेत्युपक्रान्ताः शब्दाः पुंसि काकस्य कृष्णो घनस्य नील इति यथेत्यर्थः। तेन शुक्लं रूपमित्यादौ नातिप्रसङ्गः। शुक्लशब्दस्य गुणोपस्थापकत्वे ऽपि शुक्लत्वस्य विशेष्यतानवच्छेदकत्वात्। न च पटस्य शुक्लं रूपमित्यादौ पटाद्यपेक्षया विशेष्यतायाः शुक्लत्वेनावच्छेदाच्छुक्लपदे पुंस्त्वप्रसङ्ग इति वाच्यम्। तत्र पटान्वितरूपं प्रति विशेषणताया एव शुक्लत्वेनावच्छेदाच्छुक्लत्वावच्छिन्नविशेष्यताके गुणे शुक्लपदप्रवृत्तेरभावात् भावे त्विष्टापत्तिरिति । नन्वत्रापि नीलस्य तमोविशेषणत्वादनुक्तलिङ्गविशेषणपदानां च विशेष्यलिङ्गताया औत्सर्गिकत्वात् नीलं रूपमितिवन्नपुंसकलिङ्गोपपत्तिरिति चेत् । न नीलस्य सामान्यस्य तमोलक्षणविशेषाव्यवच्छेदकतया नीलपदस्य विशेषणपदत्वाभावात्। विशेषणविशेष्यभावे कामचाराभिधानस्य परस्परव्यभिचारितदुभयविषयत्वात्। क्वचित् तथाभूतस्थले विशेषणसमासस्य च बहुलवचनैकसाध्यताया अभियुक्तैरेवाभिधानात्। न च सहप्रयोगानुपपत्तिः सामान्योपक्रमे प्रयोगे नीलरूपस्य सामान्यस्यातिप्रसक्ततया तमसः तद्विशेषणत्वेन सहप्रयोगसम्भवात् । विशेषोपक्रमे च तस्यैवाभावादिति भावः। अन्ये तु पर्यायत्वेन विशेषण-

(१) स्यात्–इत्यधिकं १ पु० ।

बयोरन्यतरत्वप्रसङ्गात् । तथापि गुणत्वव्याघातः । नापि द्वितीयः । गुणत्वव्याघातात् । नापि तृतीयः । पृथिव्यादिषु नवस्वसमवेतत्वात्[1] । तथाहि नायं दिक्कालमनसां गुणः प्रत्यक्षत्वात् । नाप्यात्मसमवेतः चाक्षुषत्वात् । अत एव न नभोनभस्वतोः । नापि तेजसः तेन समं

विशेष्यभावानुपपत्तिमुक्त्वा वृक्षः पादप इतिवदर्थप्रकाशनपरत्वेन सह प्रयोगोपपत्तिमाहुः । आद्ये ऽसमवेतत्वे सति जातिमत्त्वे । द्वितीये असमवेतत्वे सति जातिशून्यत्वे । अस्तु तर्हि समवाय इत्यत आह । तथापीति । तथा च तव प्रतिज्ञासंन्यास इति भावः । द्वितीये द्रव्यान्यसमवेतत्वे । तृतीयः द्रव्यसमवेतत्वपक्षः । प्रत्यक्षत्वादिति । लौकिकप्रत्यक्षत्वादित्यर्थः । एवं चाक्षुषत्वादित्यत्रापि । अत एवेति । लौकिकचाक्षुषधीविषयत्वादेवेत्यर्थः । यद्यपि परनये नभोनीलिम्नि व्यभिचारस्तथापि स्वसिद्धान्तदार्ढ्याभिमानेनेदम् । तेन समं विरोधादिति । स्वसमानकालीनप्रौढप्रकाशकतेजोऽध्यधिकरणत्वादित्यर्थः । प्रौढप्रकाशकेति विशेषणाच्छायायां सुवर्णसंवलितान्धकारे च नासिद्धिः । न चासिद्धिवारकविशेषणवैयर्थ्यं विशिष्टतेजोधिकरणाधिकरणकभिन्नत्वस्य तेजोधिकरणाधिकरणकभिन्नत्वादन्यत्वात् । न च तेजोऽधिकरणभूतलाद्यनधिकरणतयाऽव्यासज्यवृत्तितद्गुणेषु व्यभिचारः । तेजोधिकरणस्य परम्परया तेजोगुणानामप्यधिकरणत्वात् । गेहे केतकीगन्ध

(१) नवस्वनवकाशात्—पा० १ पु० ।

विरोधात् । तेजोरूपाविषयकचाक्षुषप्रतीतिवि-

इत्यादेर्गुणस्याश्रये ऽपि गुणप्रतीतेर्बहुलमुपलम्भात् । ईदृशते-जोधिकरणाधिकरणकभिन्नस्यैव चात्र विवक्षितत्वात् असिद्धिनिवृत्त्यै स्वसमानकालीनेति । तेजोरूपाविषयेति । उक्तस्पर्शे व्यभिचारनिरासाय चाक्षुषेति । प्रभात्मनि तेजो-रूपे व्यभिचारनिरासाय रूपपदम् । तमःप्रतीत्या नीलरूप-स्यापि विषयीकरणादसिद्धिमप्रसिद्धिं वा वारयितुं तेजः-पदम् । प्रभातेजस्त्वपक्षे रूपपदं स्वरूपार्थकमिति कश्चित् । तन्न । उत्तरग्रन्थस्वरसविरोधात् । अखण्डाभावेन वैयर्थ्य-मिति सम्प्रदायविदः । वयं तु ब्रूमः । परिशेषकर्तुस्तार्किकस्य मते तमःप्रतीतेः तत्प्रतियोगिभूतरूपवत्तेजोविशेषविषय-त्वेनासिद्धिः स्यादित्यविषयत्वमजन्यत्वमेव इति स्थिते ऽस-ति रूपपदे तेजोऽजन्यचाक्षुषसाक्षात्कारविषयत्वस्य पर्यव-सितस्य हेतोरप्रसिद्धिः स्याच्चक्षुषैव तेजसा तज्जननादिति तद्वारणाय रूपपदम् । न च व्यञ्जकतेजोरूपत्वेन चक्षूरूप-स्यापि जनकत्वात् तदजन्यचाक्षुषसाक्षात्काराप्रसिद्धिता-दवस्थ्यम् । उद्भूतरूपतेजस्त्वेन तेजस इव तेजोगतोद्भूतरू-पत्वेन तेजोरूपस्य व्यञ्जकत्वात् । अथ गौरवादत्रोद्भूतत्व-त्यागः । न चोष्मणापि तमसि चाक्षुषत्वापत्तिः । व्यञ्जक-स्योद्भूतरूपतेजसोऽभावादिति चेत् । हन्तैवं तेजोव्यञ्जक-तायामेवोद्भूतत्वत्यागः तेजोगतोद्भूतरूपत्वमेव रूपस्य व्य-ञ्जकतावच्छेदकमास्तामिति विपरीतमपि सुवचम् । न चैवं तमसि प्रत्यक्षतापत्तिः । व्यञ्जकस्य तेजोगतोद्भूतरूपस्या-भावादित्यस्य सुवचत्वात् । किं चैवं व्यञ्जकरूपत्वमेव रूप-स्य व्यञ्जकतावच्छेदकमास्तां कृतं गुरुणा तेजोभागेनापीति

षयत्वाच्च। न च तेजोरूपमेव तमः शुक्लभास्वरत्वानाश्रयत्वात्। इन्द्रनीलप्रभावदाश्रयसम्पर्कवन्नीलबुद्धिरत्रेति चेत्। न। तथाभूताश्रयस्याननुविधानात् तद्वत्परप्रकाशकत्वप्रसङ्गाच्च। नापि पृथिवीजलयोः तद्रूपे ऽन्धकारव्यवहाराभावात्।

---

शरीरगोलकादिरूपस्यापि व्यञ्जकतापत्तिः। तस्मात् विनिगमकाभावादुभयत्रोद्भूतत्वप्रवेशावश्यकतया चक्षूरूपस्याव्यञ्जकत्वादिति। ननु तेजसोरूपमेव तम इत्यसिद्धो हेतुरित्याशङ्क्याह। न चेति। शुक्लत्वानाश्रयत्वात् भास्वरत्वानाश्रयत्वादिति हेतुद्वयं तेन न व्यर्थविशेषणतेति द्रष्टव्यम्। इन्द्रे नीलनीलात्मकबलवत्सजातीयसम्बन्धात् प्रभारूपे शुक्लत्वाग्रहे नीलत्वारोपवत्तमोलक्षणे तेजोरूपे सत एव शुक्लत्वस्याभिभवादग्रहे नीलत्वारोप इति हेत्वसिद्धिं शङ्कते। इन्द्रनीलेति। वैधर्म्येण परिहरति। तथाभूतेति। आवरकत्वाभिमतस्याधिकरणस्य वा नीलत्वानियमादिति भावः। किं च कल्प्यमानोऽप्यभिभवः सुवर्णवद्रूपस्यैव वा तदनभिभवे ऽपि वह्नाविव शुक्लत्वस्यैव वा। नाद्यः। तमस एवानुपलम्भप्रसङ्गादित्यभिप्रेत्य न द्वितीय इत्याह। तद्वदिति। उद्भूतानभिभूततेजोरूपत्वस्यैव व्यञ्जकताप्रयोजकत्वादिति भावः। तेजोगुणत्वं निराकृत्य पृथिवीजलगुणत्वं निराकरोति। नापि पृथिवीजलयोरिति। पृथिव्या जलस्य चेत्यर्थः। गुण इत्यनुषज्यते। न रूपमिति समासस्यैकदेशत्वात्। तद्गुणो भवन्नयं रूपमेवेति शङ्कते गुणमात्रमिति वेति विकल्प्याद्ये तमो न पृथिवीरूपमन्धकारतया प्रमीयमाणत्वादिति विवक्षिते हेतावपेक्षितं यत्तद्रूपं

**न चोपलभ्यमानरूपातिरिक्तमेव पृथिव्या जलस्य वा रूपम् एकत्रैकदा रूपद्वयासमावेशात् । आलोकं विना तद्रूपचाक्षुषताविरोधाच्च । तेजो-**

न तदन्धकारतया प्रमीयते यथा पटादिरूपमिति व्यतिरेकव्याप्तिमाह । तद्रूपेति । न चासाधारण्यं शब्दोऽनित्यः शब्दत्वादितिवददोषत्वादिति भावः । अस्तु तर्ह्यभग्नवादिसिद्धपृथिवीरूपान्यरूपवती पृथिवीत्याशङ्क्याह । न चोपलभ्यमानेति । अत्र विवक्षितस्य पृथिवीत्वहेतोर्विशेषदर्शनेनासाधारण्यं निरसितुं तदुपपादकमाह । एकत्रेति । पाकक्रमेण रूपद्वयसमावेशदर्शनादाह । एकदेति । न द्वितीयः । आलोकाजन्यलौकिकचाक्षुषज्ञानविशेष्यकत्वादित्याह । आलोकं विनेति । तद्रूपे पृथिवीजलगुणस्वरूपे प्रत्यक्षत्वसामान्यपरित्यागेन चाक्षुषतोपादानादयं तद्गुणत्वनिषेध एव हेतुर्विवक्षित इति गम्यते । तत्रैव गन्धादिव्यभिचारनिरासाय तदुपादानस्यावश्यकत्वात् । अन्ये त्वर्थैकदृपृथक्चाक्षुषत्वजातेरखण्डत्वादविशेषं मन्यमाना नापीति प्रभृत्येतदन्तं पृथिवीजलरूपत्वनिराकरणमेवेत्याहुः । घटादिरूपव्युदासायाह । आलोकं विनेति । आरोप्यनीले व्यभिचारनिरासाय विशेष्यत्वम् । न च तमसि नीलिमेति प्रत्ययमादाय दोषतादवस्थ्यम् । तस्य मानसत्वात् । प्रमेयत्वादिप्रकारकतमःसाक्षात्कारविशेष्ये घटादिरूपे व्यभिचारनिरासाय लौकिकेति । न च पेचकबिडालतस्करादिचाक्षुषसाक्षात्कारविशेष्ये तद्गुणे व्यभिचारः । तेषामपि चक्षुःसहकार्यालोककल्पनात् । भावचाक्षुषज्ञानत्वावच्छिन्ने आलोकत्वेन कारणत्वावधारणात् । न चास्या-

ऽभावग्रहे तेजोपेक्षया विरोधेन परिहृतत्वात् ॥

नापि कर्म । चलनात्मकतयानुपलम्भात् । अन्धकारवति गेहादौ चलतीति प्रत्ययप्रसङ्गाच्च ॥

नापि द्रव्यं पृथिव्यादिनवकबहिर्भूतत्वात् । ननु नीलरूपवत्त्वेन पृथिव्यामेवासावन्तर्भवतु । उद्भूतरूपस्य पार्थिवस्योद्भूतस्पर्शाव-

---

नुद्भूतरूपत्वेन व्यञ्जकता उद्भूतरूपत्वे तमादायान्येनाप्यन्धतमसे वस्तुग्रहापत्तिरिति वाच्यम् । फलबलेन प्रतिनियतसहकारित्वस्यैव कल्पनात् । अनीदृशमेव तद्विवक्षितमित्यप्याहुः । नन्वेवं घटाद्यभावग्रहे ऽपि बाह्यालोकसहकृतस्यैव चक्षुषः सामर्थ्यावधारणादभावत्वे ऽपि तमसः कथं तदनपेक्षेण चक्षुषा ग्रहः स्यादित्याशङ्कयाह । तेजोभावेति । तथा च व्याघातभयेन गर्भैव व्याप्तिरेषृव्येति भावः ॥

अन्धकारवतीति । यद्यपि पुरुषादिकर्मवति गेहे गेहं चलतीति प्रत्ययाभावस्तुल्यस्तथापि तमःकर्मत्वे तत्समवायि नातीन्द्रियं किञ्चिद्वाच्यं तमसोप्यतीन्द्रियत्वप्रसङ्गात् । किं तु तदधिकरणतया सम्प्रतिपन्नं गृहादिकमेव । यच्च तत्समवायि तच्चलतीति प्रतीयते यथा घटादीत्यतो गेहं चलतीतिधीः स्यादिति भावः ॥

पृथिव्यादीति । अतिरिक्तस्य च द्रव्यत्वे प्रमाणाभावादिति भावः । हेत्वसिद्धिं शङ्कते । ननु नीलेति । ननु तमो न पृथिवी यावत्पृथिवीविशेषान्यत्वात् । तथाहि न तावदियमनुद्भूतरूपा पृथिवी चाक्षुषत्वात् । नाप्युद्भूतरूपा अनु-

स्वनियमो[1]ऽसिद्ध एव । इन्द्रनीलप्रभासहचरितनीलभागेन व्यभिचारात् । तदीयस्पर्शस्यायोग्यत्वे ऽपि नीलरूपस्य योग्यत्वात् । न चोद्भूतस्पर्शेन्द्रनीलमणिरूपमेव प्रभायामारोप्यत इति युक्तम् । इन्द्रनीलग्रहव्यतिरेके ऽपि तत्प्रभायां नीलप्रत्ययदर्शनादिति । मैवम् । एवम्भूतोदाह-

---

द्भूतस्पर्शत्वात् । न चोद्भूतपीतरूपे पित्तधातौ व्यभिचारः । रूपपदेन नीलस्यैव ग्रहणादित्याशङ्क्याह । उद्भूतरूपेति । प्रभावारणाय पार्थिवपदम् । परमाणुवारणायोद्भूतेति । पित्तवारणाय रूपपदं नीलपरम् । अत एव स्थलान्तरे व्यभिचारमाह । इन्द्रनीलेति । तमेव स्फुटयति । तदीयेति । अयोग्यत्वे ऽनुद्भूतत्वे । योग्यत्वादुद्भूतत्वात् । यदत्रोद्भूतरूपपार्थिवमिन्द्रनीलं तदुद्भूतस्पर्शमेवेति न व्यभिचार इति मन्वानं प्रत्याह । न चेति । इन्द्रनीलाग्रहणे तद्रूपप्रत्यक्षासम्भवेनानुभूयमानारोपानुपपत्तेस्तज्जन्मन्यपरिचितेन्द्रनीलतद्रूपस्य स्मर्यमाणारोपस्याप्यनुपपत्तेर्नीलभागकल्पनमावश्यकमिति तत्र व्यभिचारात् पूर्वोक्तनियमासिद्धौ युक्तः पृथिव्यामन्तर्भाव इत्याशयेनाह । इन्द्रनीलग्रहेति । इन्द्रनीलाग्रहकालीनस्य तत्प्रभानीलप्रत्ययस्यैवासम्प्रतिपत्तेः क्व तन्निर्वाहकनीलभागकल्पना क्व तरां तत्र व्यभिचार इत्याह । एवम्भूतेति । कुड्यादिव्यवहितस्य दीपस्येवेन्द्र-

---

(१) स्पर्शवत्तानियमो-पा० १ । २ पु० ।

णासिद्धेः। सिद्धावपीन्द्रनीलस्यान्यस्य वा स्मर्यमाणस्यैव रूपस्यारोपेणान्यथासिद्धौ तत्सहचरतथाभूतनीलभागाकल्पनात्। न च जालान्तर्गतमरीचिस्थोद्भूतरूपसूक्ष्मपार्थिवेन व्यभिचारः। वस्त्रपाटनानन्तरमुपलभ्यमानजालमरीचिस्थसूक्ष्मभागवत् तस्याप्युद्भूतस्पर्शवत्त्वानुमानात्। तर्हि त्रसरेणुस्पर्शः किमिति नोपलभ्यते। मह-

---

नीलस्याप्युपरिभागे प्रभादर्शनसम्भवान्न तत्र नीलप्रत्ययी सम्प्रतिपत्तिरित्यत आह। सिद्धौ वेति। तथा च व्यभिचाराभावान्नियमसिद्धौ न तमोनुद्भूतस्पर्शा पृथिवीति भावः। जालमरीचिस्थोद्भूतनीलरूपसूक्ष्मभागे व्यभिचारमाशङ्क्य निराचष्टे। न च जालान्तर्गतेति। जालान्तर्गतमुपलभ्यमाननीलं सूक्ष्मम् उद्भूतस्पर्शम् उद्भूतनीलरूपात् जालमरीचिस्थपाटितनीलपटसूक्ष्मावयववत्। न च दृष्टान्ते साध्यवैकल्यम्। उद्भूतस्पर्शवस्त्रारम्भानुपपत्त्या तन्निरासादित्याशयेनाह। वस्त्रपाटनेति। उभयवादिसिद्धयावत्स्वसाक्षात्कारकारणसमवहितस्तत्स्पर्शः किञ्चित्समवधानव्यतिरेकप्रयुक्तसाक्षात्कारविषयताव्यतिरेकः लौकिकप्रत्यक्षाविषयत्वाद् अन्धकारस्थघटवदिति प्रयोगमभिप्रेत्य तत्राप्रयोजकत्वं निरस्यति। तर्हीति। यद्वा व्यापकानुपलम्भबाधं शङ्कते। तर्हीति। ननूद्भूतोपि परमाणुस्पर्शवदयोग्यत्वान्नोपलभ्यत इत्यत आह। महत्त्वेति। अत्र प्राचां मतमाश्रित्य पूर्वानुमानेऽसिद्धिं व्यापकानुपलम्भासिद्धिं

त्वसमानाधिकरणोद्भूतस्पर्शस्य योग्यत्वादिति चेत् । न गृह्यत एव विविच्य तु न गृह्यते सूक्ष्मत्वादिति प्राञ्चः । अनेन रूपेण स्पार्शन-योग्यतैव नास्ति किं तु महत्त्वविशेषसामा-नाधिकरण्येन स च विशेषः कार्यैकोन्नेयः ।

चाह । गृह्यत एवेति । तर्हि त्रसरेणुं स्पृशामीति कदाचिद्धीः स्यादत आह । विविच्येति । प्रमाणाभावादत्रापरितुष्यता-मर्वाचां मतेन पक्षविशेषणासिद्धं सिद्धसाधनं चाह । अने-नेति । यद्वोपलम्भस्योद्भूतत्वव्यापकत्वमेवासिद्धमित्याह । अनेनेति । कोऽसौ विशेष इत्यत आह । स चेति । शृङ्गग्राहि-कयाख्यातुमशक्यत्वे ऽपि प्रत्याख्यातुमशक्य इति भावः । ननु तथाप्यप्रयोजकमिदम् उद्भूतरूपस्यानुद्भूतस्पर्शत्वे बाध-काभावात् सहचारमात्रात् तथात्वे प्रभापि नानुद्भूत-स्पर्शा स्यात् । पृथिव्यां तथा नियम इति चेत् । न पित्ते व्यभिचारात् । उद्भूतनीलरूपस्य तथा नियम इति चेत् । न पित्तस्येव नीलस्यापि पक्षे व्यभिचारे बाधकाभावात् । अन्यथोद्भूतरूपपृथिवीमात्रे तथा नियमकल्पने पित्तमपि न पृथिवी स्यात् । उद्भवानुद्भवयोः कार्योन्नेयनिमित्तभेदो-पाधिकतया पित्ते पीतरूपोद्भवे ऽपि स्पर्शानुद्भवेन विरोध इति चेत् । नीले ऽपि तुल्यम् । यच्च जालमरीचिस्थनीलभागे व्यभिचारनिरासायोद्भूतस्पर्शानुमानं तदपि दृष्टान्तास-म्प्रतिपत्तेरयुक्तम् । पाटितपटावयवानामनुद्भूतस्पर्शानामेव निमित्तभेदसंसर्गादुद्भूतस्पर्शपटारम्भकतासम्भवात् । तप्त-तैलस्थादनुद्भूतरूपादपि वह्नेरुद्भूतरूपवह्न्यारम्भस्वीका-रात् । न चोद्भूतरूपभागान्तराकर्षणपक्षे तदसम्प्रतिप-

अत एव हि त्रसरेणुस्पर्शस्यायोग्यत्वात् त्रसरेणुर्न स्पार्शन इति केचित् । जलादित्रिकव्यतिरेकस्तु स्फुट एव। न च तेजोविशेष एव तमः सूर्यादितेजसा सह विरोधात्। तद्विरोधितेजोन्तर-

त्तिः । तस्यैव निःप्रमाणकत्वात् । साक्षात्कारप्रतिबन्धकतयानुद्भवजातिकल्पनपक्षे परमाणौ महत्त्वाभावादेव साक्षात्काराप्रसक्तेस्तत्प्रतिबन्धकतया नानुद्भवकल्पनमिति सर्वपरमाणूनामुद्भूतगुणत्वे तदारभ्य कार्यमात्रे गुणानुद्भवस्य निमित्तभेदादन्येनोपपादयितुमशक्यत्वात् तदभ्युपगमे वास्य वैयर्थ्यात्। साक्षात्कारप्रयोजकतयोद्भवजातिकल्पनपक्षेऽपि परमाणुगुणेष्वतीन्द्रियेषु तत्कल्पने मानाभावेन तेषामनुद्भवेन तत्कार्यपरम्परायां गुणोद्भवस्य निमित्तभेदैकोपपाद्यत्वात् । अस्तु वोद्भूत एवाभिभूतस्तमःस्पर्शः यथाऽर्थं जलतेजोनिलस्पर्शसम्बन्धादेव तदग्रहोपपत्तेरतः पृथिव्येव तम इति चेत् । न आलोकानपेक्षचक्षुर्ग्राह्यतानुपपत्तेरेव मूलबाधकत्वात् तस्याश्चोपपादयिष्यमाणत्वात् । जलादित्रिकेति। नीलत्वादिति भावः। ननु तमस्तेजोऽव्यक्तालोकनिरपेक्षचाक्षुषनीलज्ञानविशेष्यत्वादिन्द्रनीलप्रभावदिति शङ्कमानं प्रति किमिदं सौरादितेजोरूपमुत तदतिरिक्तमेवेति विकल्प्य नाद्य इत्याह। न च तेजोविशेष एवेति। सौरादितेज एवेत्यर्थः। तथा च तमो न सौरं तेजः समानकालीनतदनधिकरणत्वात्[1] सौरालोकवदिति व्यतिरेकितस्तत्तद्विशेषान्यत्वसिद्धिरिति भावः । द्वितीयं शङ्कते। तद्विरोधीति। अनन्यगतिकतया तथा कल्पनादिति

(१) समानकालीनतदधिकरणाधिकरणाऽभिन्नत्वात्–पा० ६ पु० ।

मेवेदमिति चेत्। न सप्रभेषु रत्नादिषु छायारूपं तमो न स्यात् । रत्नादिप्रभया समं विरोधात् । अनभिभूतया तया सह विरोधः सा चाभिभूतेति चेत् । न पृथिव्यादिना तेजसोऽनभिभवात् । तेजोन्तरस्य तदभिभावक[1]स्यानुपलम्भात् । न च छाययैव तदभिभवः[2]। बहलतमे तमसि तद-

भावः। किमिदं तेजोमात्रविरोधि उतानभिभूततद्विरोधीति विकल्प्याद्यं दूषयति। सप्रभेष्विति। न हि निःप्रभतैव रत्नादीनां रात्रौ तदुपलम्भात् । न वा दिवान्यत्र गमनं प्रभाया अन्यत्र तदनुपलम्भात् । न च नाशः । तत्सामग्र्यभावात् । रात्रौ पुनरुपलम्भाय पुनरुत्पादकल्पनागौरवाच्चेति भावः । न स्यादिति । अनुभूयते च दिवेति भावः । द्वितीयं शङ्कते । अनभिभूतयेति । फलबलेन तथा कल्पनादिति भावः । अभिभवोधिकरणत्वाभिमतेन पृथिव्यादिना तेजोन्तरेण वाच्छाययैव वेति विकल्प्याद्ये दोषमाह[3] । पृथिव्यादिनेति । व्यङ्ग्यस्य व्यञ्जकाभिभावकत्वे नित्यमनुपलम्भप्रसङ्गाद्रात्रौ तत्रैव प्रभाप्रतीतेश्चेति भावः । न द्वितीय इत्याह । तेजोन्तरस्येति । बलवत्तेजोजातीयोपलम्भकृतानुपलम्भ एवेहाभिभवो वाच्यः । न चेह तेजोजातीयोपलम्भ इति भावः । तृतीयं प्रत्याह । न च छाययैवेति ।

(१) अभिभावुक–पा॰ १ पु॰ ।

(२) प्रभाभिभवः–पा॰ १ पु॰ ।

(३) विकल्प्य नाद्य इत्याहि–पा॰ ६ पु॰ ।

ग्रहप्रसङ्गात्। न च तेजोन्तरमेव तस्याभिभावकम् तस्यानुपलम्भात्। तेजोऽभिभावकस्य छायाभिभावकत्वापातात्च॥

तस्यास्तेजोन्तरत्वपक्षे प्रभातुल्यन्यायतया यावदिन्द्रनीलसन्निहितत्वात् तया प्रभाभिभवे कदाचिदपि न सा गृह्येतेत्यर्थः। छायायामिष्टापत्तिवारणायाह। बहलतम(1) इति। न चानभिभूतया छाययाभिभवः। सा च बहलतमेन तमसाभिभूतैवेति वाच्यम्। अभिभावकाभिभावकेन तेनैव छायाया इव प्रभाया अप्यभिभवापत्तेरिति भावः। ननु बलवत्सजातीयसम्बन्ध एवाभिभवः लाघवात् स च तेजोन्तरस्यानुपलम्भे ऽपि नात्रानुपपन्न इत्याशङ्कमानं प्रत्याह। न चेति। न ह्यतीन्द्रियसूक्ष्मचक्षुरादि तदभिभावकं किं तु योग्यं यच्च योग्यानुपलब्धिबाधितमिति क्व तत्सम्बन्धरूपोप्यभिभव इति भावः। अपरे तु दोषान्तरविवक्षयां पूर्वोक्तमेव दूष्यं पुनः स्मारयति न चेतीत्याहुः। तन्न। तस्यानुपलम्भादित्यस्य वैयर्थ्यात। ननु छायासहचरसौरादितेजस एवान्वयव्यतिरेकसिद्धप्रभाभिभावकस्योपलम्भादनुपलम्भासिद्धिरित्यत आह। तेजोभिभावकस्येति। उपरितनतरणिकिरणेषु प्रभाच्छायोभयाभिभावकतया दर्शनाच्छायासहचरसौरप्रभाया अपि पद्मरागप्रभाभिभाविकायाश्छायाभिभावकत्वप्रसङ्गादित्यः। नन्वभावत्वे ऽपि कथं छायायाः प्रभासमानदेत्वं तेजोविरोधित्वाविशेषात्। अथ तेजोविशेषेण तस्याविरोधो न

(१) बहुलतमे–पा॰ ६ पु॰। एवमग्रे ऽपि।

नापि विभुचतुष्कम्। अव्यापकत्वादनित्यत्वाच्च। न मनः प्रत्यक्षत्वात्। तस्माद्यावद्विशेषबाधाद्भावत्वमेवास्य बाधितमिति। मैवम् रूपवत्त्वक्रियावत्त्वपरिमाणवत्त्वादिना द्रव्यत्वस्यैवोचितत्वात्। न च पृथिव्यादिनवकानन्तर्भावात् बाधितमस्य द्रव्यत्वमिति वाच्यम्। अन्यथानुपपत्त्या दशमद्रव्यपरिकल्पनात्। अ-

तेजोमात्रेण तर्हि मत्पक्षे ऽपि यस्यावरणे छाया तेनैव तेजोविशेषेण तस्याविरोध इति तुल्यमिति चेत्। न अनुद्भूतरूपत्वे ऽचाक्षुषत्वप्रसङ्गात्। उद्भूताभिभूतरूपत्वे सत्यालोके प्रकाशानुपपत्तेः। रूपवृत्तिशुक्लत्वस्यैवाभिभवे वह्निवत्परप्रकाशकतापत्तेरिति भावः॥

अव्यापकत्वादिति। यावन्मूर्तासंयोगित्वादित्यर्थः। प्रत्यक्षत्वादिति। लौकिकप्रत्यक्षत्वादित्यर्थः। भावभेदसाधनं निगमयति। तस्मादिति। न चैवेतिनियमस्यानन्यथासिद्धावध्यक्षेण बाधाद्यावद्विशेषबाधः स्वरूपासिद्ध इति भेदः परिहरति। मैवमित्यादिना। उचितत्वादिति। तावत्प्रत्यक्षभ्रान्तत्वकल्पनापेक्षया द्रव्यत्वकल्पनायामेव लाघवादिति भावः। ननु यावद्द्रव्यविशेषबाधाद्बाधितं तमसः द्रव्यत्वमित्याशङ्क्याह। न चेति। द्रव्यत्वेन शङ्क्यमानात् स तस्मादेवानन्यतमयावद्द्रव्यविशेषान्यत्वासिद्धेरित्याशयेनाह। अन्यथानुपपत्त्येति। ननु परिनिष्ठितद्रव्यभावपृथिव्यादिनवकान्यत्वेनैवास्तु तत्सिद्धिरित्यत आह। अन्यथेति। पृथिवीति। पृथिव्या द्रव्यत्वसन्देहद-

न्यथा जलत्वादिबाधात्[1] पृथिव्यपि न द्रव्यान्तरं स्यात् । न च विषयसंस्कारकबाह्यालोकसहकृतचक्षुर्ग्राह्यत्वाभावात् द्रव्यत्वमस्य बाधितमिति वाच्यम् । तेजस्येव व्यभिचारात् । अन्ये

शायां जलादौ परिनिष्ठितद्रव्यत्वेन तदन्यत्वस्य पृथिव्यामपि सुवचत्वादिति भावः । व्यापकविरुद्धोपलब्ध्या द्रव्यत्वबाधमाशङ्क्याह । न चेति । छायातमसि भागासिद्धिवारणाय विषयसंस्कारेति । छायाप्रतीतौ तु विषय एवालोको न संस्कारक इति न तत्तादवस्थ्यम् । नवासिद्धिवारकतया वैयर्थ्यम् । अखण्डाभावे तदभावात् । आत्मव्यावृत्त्यै चक्षुरिति । अप्रसिद्धिवारणायालोकेति । बाह्यपदं तु न हेतुप्रविष्टं किं तु विषयसंस्कारकतोपपादनाय । यदि हि चक्षुःसंस्कारक एवालोकः स्यात् तदा तद्देशे गोलकसंसृष्टतयोपयुज्येत न चैवम् अन्धकारवदपवरकस्थेनापि चक्षुषा बाह्यघटादिसंसृष्टालोकसहकृतेनापि तज्ज्ञानजननादिति । वस्तुत उभयोः पर्यायेण हेतुद्वयं द्रष्टव्यम् । बाह्यपदस्यापि ग्राह्यबाह्यार्थकतया तुल्यप्रयोजनकत्वात् । न चाभावस्यानुपलब्धिवेद्यत्वात् परमते दृष्टान्तासिद्धिः । तच्चाक्षुषतासाधनाभिमानेनोक्तत्वात् । न चातीतादिज्ञानविषये द्रव्ये व्यभिचारः । विषयसंस्कारकालोकजन्यभिन्नचक्षुषज्ञानविषयत्वस्य हेतुत्वादिति भावः । अस्य चक्षुषाध्यक्षस्य तमस इत्यर्थः । अतो नासिद्धिरिति भावः । तेजस्येवेति । चाक्षुषतेजस्येवे-

(१) जलत्वव्याघातात्–पा॰ १ पु॰ ।

तु तेजसि न व्यभिचारः । तत्राप्यवयविनो ग्रहेऽवयवस्यावयवावयवस्यावयव्यन्तरस्य वा विषयसंस्कारक(१)तेजसो विद्यमानत्वात् । न च तैजसत्रसरेणुस्थले नैवं सम्भवतीति वाच्यम् । तस्य जालस्थसौरालोकसंस्कार्यत्वात् । न च संयोगेन बाह्यालोकस्य संस्कारकत्वं संयोगत्वस्यातन्त्रत्वात्(२) । तस्माच्चाक्षुषभावसाक्षात्कारमात्र एव बाह्यालोकापेक्षेत्याहुः । तन्न(३)

त्यर्थः । तत्रापि तदपेक्षायामनवस्थया नियमासिद्धिरिति भावः ॥ एकदेशिसमाधिन्दूषयितुमनुवदति ॥ अन्ये त्विति ॥ अवयविनोवयवान्तरस्य वा विषयसंस्कारकस्य विद्यमानत्वादिति योजना(४) ॥ ननु तेजस्त्रसरेणुग्रहेवयवानामतीन्द्रियतयाऽसंस्कारकत्वात्तत्र व्यभिचार इत्याशङ्क्याह ॥ न चेति ॥ न हि सर्वतो विततान्धकारे केवलतेजस्त्रसरेणुग्रहः संप्रतिपन्नः बहुलालोके तु तदवयवानामसंस्कारकत्वेपि न क्षतिरित्याह ॥ तस्येति ॥ संयोगत्वस्येति । सामान्ये बाधके सत्येव नियमस्य विशेषनिष्ठत्वकल्पनादिति भावः । बाह्यालोकस्य विषयसंस्कारकत्वे संयोगित्वमेव तन्त्रं इत्याशयेन दूषयति-

(१) अवयविनो ग्रहेऽवयवस्य अवयवस्य ग्रहेऽवयविनोऽवयवान्तरस्य वा विषयसंस्कारकस्येति पा० २ पु० ।

(२) संयोगस्यातन्त्रत्वादिति पा० २ पु० ।

(३) तन्नेत्यनन्तरं तथाहि इति पाठो विशेषः २ पु० ।

(४) अवयविनो ग्रहेऽवयवस्यावयवस्य ग्रहेऽवयविनोऽवयवान्तरस्य वा विषयसंस्कारकस्येति पा० २ पु०।

अन्वयव्यतिरेकाभ्यां घटादिचाक्षुषसाक्षात्कारे बाह्यालोकसम्बन्धस्य कारणता गृह्यते । सा च न सम्बन्धिसम्बन्धत्वेन परम्परासम्बन्धेऽपि कार्योदयप्रसङ्गात् । नापि संयोगसमवायसाधारणसाक्षात्सम्बन्धत्वेन तस्यैवानिर्वचनात् तन्निर्वचनेऽपि वा तदपेक्षया संयोगत्वस्य लघुत्वात् । तथा च संयोगत्वमेव तन्त्रम् । न च तेजोग्रहेऽपि बाह्यालोकसंयोगापेक्षैव चक्षुषः । महालोकस्यावयवावयवसंयोगसम्भवेऽपि तेजस्त्रुटरणुके तदवयवावयवसंयोगस्यायोग्यत्वेन तथाभूतसंयोगाभा-

तन्नेति ॥ अन्वयेति ॥ सत्यपि चक्षुःसन्निकर्षेऽन्धकारस्थघटादेः साक्षात्कारानुपपत्तेस्तत्रैव दीपादिसमवधाने सत्युत्पत्तेरित्येवंरूपाभ्यामित्यर्थः ॥ संयोगतन्त्रतां व्यवस्थापयिष्यन्परिशिनष्टि सा चेति ॥ परम्परेति । अन्धकारवद्गृहान्तर्वर्तिभित्तिभागसन्निकृष्टस्य घटादेर्बहिर्भित्तिभागसन्निकृष्टदीपादपि साक्षात्कारापत्तेरित्यर्थः ॥ तस्यैवेति ॥ उभयानुगतस्य साक्षात्सम्बन्धत्वस्येत्यर्थः । ननु संयोगसमवायान्यतरत्वेन तन्निर्वचनं सुशकमेवेत्यत आह ॥ तन्निर्वचनेपीति ॥ लघुत्वादिति ॥ संयोगत्वस्य जातित्वेनाखण्डत्वादित्यर्थः ॥ ननु संयोगतन्त्रतायामपि न तेजसि व्यभिचारः तदवयवावयवपरम्परासंयोगसम्भवादित्याशङ्क्याह ॥ न च तेजोग्रह इति ॥ तथाभूतेति ॥ योग्यप्रतियोगिकेत्यर्थः । अन्वयव्यतिरेकाभ्यां तस्यैव तत्र हेतुत्वावधारणादिति

वात् । न च तेजश्चाक्षुषसाक्षात्कारस्य तथाभूतालोकसम्बन्धस्य व्यभिचारात्(१) न क्वचिदपि व्यतिरेकसिद्धिरित्याद्यूह्यम् । प्रमाणबलात्तेजोव्य-

भावः ॥ ननु चतुरणुकेपि जालस्थसौरालोकसंस्कार्यत्वमुक्तप्रायमित्याशङ्क्याह ॥ न चेति ॥ व्यभिचारोत्र व्यतिरेकः ॥ अयमाशयः । तेजश्चाक्षुषसाक्षात्कारालोकसंयोगयोः कार्यकारणभावसिद्धौ तथा कल्पना स्यात्तत्सिद्धिश्च नियतान्वयव्यतिरेकाभ्यां । तदेतरसकलकारणसमवधाने आलोकसमवधाने घटचाक्षुषसाक्षात्कारोत्पत्तिस्तदसमवधाने नेतिवत् इतरकारणसमवधानेप्यालोकसमवधानापराधेन तेजश्चाक्षुषसाक्षात्कारस्य क्वचिद्व्यतिरेकसिद्धिरस्ति येन स तयोः कल्प्येत । सति विषयभूते तेजसि तदवयवसौरादितेजसामावश्यकत्वात् असति तस्मिंस्तद्व्यतिरेकादेव साक्षात्कारव्यतिरेकोपपत्तौ व्यञ्जकालोकव्यतिरेकस्याकिञ्चित्करत्वात् इति ॥ यद्वा द्रव्यत्ववाद्यभिमते पूर्वान्वयव्यतिरेकिणि तेजस्येव व्यभिचारादित्यारभ्य संयोगाभावादित्यन्तेनान्वयव्याप्तिं निरस्य व्यतिरेकव्याप्तिं निरस्यति ॥ न चेत्यादिना ॥ यद्द्रव्यं तन्न बाह्यालोकासहकृतचक्षुर्ग्राह्यमिति नियतव्यतिरेकसिद्धिः क्वचिदपि न तेजश्चतुरणुकचाक्षुषसाक्षात्कारस्य तथाभूतालोकसंबन्धव्यभिचारात् । तथाभूतालोकजन्यभिन्नचाक्षुषसाक्षात्कारविषये चतुरणुक एव नियमभङ्गादि-

(१) लोकसम्बन्धव्यतिरेकादिति पा० २ पु० ।

तिरिक्तत्वेन विशेषणीयमिति यदि तर्हि तमोव्यतिरेकेण(१) प्रमाणबलादेव विशेष्यताम् । प्रत्युतैतस्य बाह्यालोकव्यतिरेकसहकृतचक्षुर्ग्राह्यत्वावधारणबलेन पृथिव्यादेर्बाह्यालोकसापेक्षच-

त्यर्थः । नच सौरालोकसंस्कार्यतोक्तेर्न व्यभिचारः । अनारब्धमहासौरालोके तच्चतुरणुके तत्संस्कार्यतानुपपत्तेरिति भावः । ननु हेतौ तेजोव्यतिरिक्तत्वे सतीति विशेषणात्तेजोव्यतिरिक्तद्रव्यभेदस्य साध्यत्वाद्वा न व्यभिचार इत्यत आह ॥ प्रमाणबलादिति । तेजोद्रव्यत्वसाधकप्रमाणबलादित्यर्थः । तर्हि तेजोद्रव्यत्वसाधकप्रमाणबलात्तमोव्यतिरेकेणापि हेतुसाध्ययोरन्यतरद्विशेष्यतां तथा च स्वरूपासिद्धिसिद्धसाधनाभ्यं तन्निरासाय विशेषणत्यागे च व्याप्यत्वासिद्ध्या नाद्रव्यत्वसिद्धिरित्याह ॥ तर्हीति ॥ किञ्च पृथिवीजलवैधर्म्येण बाह्यालोकानपेक्षचक्षुर्ग्राह्यत्वेन तमसो द्रव्यत्वसाधने तेजसानैकान्त्यविरोधयोरन्यतरदावश्यकं तेजोवैधर्म्येण तत्सापेक्षचक्षुर्ग्राह्यत्वेन पृथिवीजलयोरद्रव्यत्वसाधने तु न किञ्चिद्दूषणमिति तदेव साधयितुमुचितमित्याह ॥ प्रत्युतेति ॥ नन्वत्रापि गन्धस्नेहाश्रयद्रव्यान्तरकल्पनाप्रसंगो बाधक इत्यत आह । इन्द्रियेति । न च चक्षुरुन्मीलनान्वयव्यतिरेकानुविधानानुपपत्तिस्तमोग्रहस्य चक्षुःश्रवःश्रोत्रवत्तामसेन्द्रियस्य चक्षुर्गोलकाधिष्ठानत्वात् ॥ न च तद्व्यवस्थापकगुणाभावादसि-

(१) व्यतिरेकेणापीति पा० २ पु० ।

क्षुर्ग्राह्यत्वात् भावत्वं त्यज्यताम् । इन्द्रियान्तरमेव वा तमोग्राहकमस्तु । अत एव तामसादिन्द्रियादन्धतमसेपि पेचकादीनां तत्तद्वस्तुग्रहः ॥

स्यादेतत् तमः किं नित्यमनित्यं वा ? आद्ये रूपवतो नित्यस्याचाक्षुषत्वप्रसङ्गः । द्वितीये त्वारभ्यं स्यात् । न च निःस्पर्शद्रव्यस्या(१)रम्भकत्वं द्रव्यसमवायिकारणतायां स्पर्शवद्द्रव्यस्य प्रयोजकत्वात् । न च मूर्तत्वमेव तत्र प्रयोजकं मनसोप्यारम्भकत्वप्रसङ्गात् । एतदपि न । रूप-

---

द्धिः । गुणत्वस्य व्यवस्थापकतायामतन्त्रत्वादिन्द्रियान्तराग्राह्यग्रहणमात्रस्य प्रकृतेपि सत्वादिति भावः । विपक्षबाधकत्वेन तस्योपयोगान्तरमाह ॥ अत एवेति ॥ आलोकाभावे चक्षुषस्तत्रासामर्थ्यात् इति भावः ॥ न च दिनापि तेषां तद्ग्रहापत्तिः । आलोकस्येव तमसस्तत्र सहकारित्वात् ।

रूपवत्वहेतोरसिद्धिं शङ्कते ॥ स्यादेतदिति ॥ अचाक्षुषत्वप्रसङ्गादिति । परमाणोरिवेति शेषः । द्वितीये रूपवतोनित्यत्वे । आरभ्यमिति । द्रव्यमिति शेषः । अस्तु स्वावयवारब्धन्तम इति आशङ्क्य तेषां स्पर्शवत्वे तदारब्धद्रव्ये तमस्यपि स्पर्शवत्वमित्यभिप्रेत्य निःस्पर्शवत्वे बाधकमाह । न च निःस्पर्शेति । द्रव्यसमवायिकारणत्वं न निःस्पर्शस्येत्यर्थः ॥ तमो न

---

(१) निःस्पर्शस्य द्रव्यस्येति पा० २ पु० ।

वत्वे नित्यत्वेपि त्रुटेश्चाक्षुषत्वाभ्युपगमात्(१) । मनसि मूर्तत्वानङ्गीकारात् । अनुद्भूतस्पर्श एव वा कल्प्यताम् । न चोद्भूतनीलरूपस्योद्भूतस्पर्शसामानाधिकरण्यनियमः पृथिव्यामेव तथात्वात् । एवं रसानुद्भवोपि कल्प्यताम् । तेजो-

रूपवत् स्पर्शवदनारब्धचाक्षुषत्वाज्जातिवदिति पर्यवसितमनुमानम् । त्रुटौ व्यभिचारेण दूषयति ॥ रूपवत्त्व इति ॥ ननु चाक्षुषद्रव्यत्वेन त्रुटौ सावयवत्वसिद्धेर्धर्मिग्राहकमानबलेन च मनोमूर्तत्वसिद्धेर्नैतदिति शङ्कमानं प्रति हेतोर्विशेषणासिद्धिर्वेत्याह ॥ अनुद्भूतस्पर्श एवेति ॥ तमो नानुद्भूतस्पर्श उद्भूतनीलरूपाच्छंखवत् । पित्तधातौ व्यभिचारवारणाय नीलेति । इत्यनुमानमाशङ्क्य साधनावच्छिन्नसाध्यव्यापकपृथिवीत्वोपाधिना दूषयति ॥ न चोद्भूतनीलेति ॥ पृथिव्यामेवेति ॥ अन्यथा पृथिव्यामुद्भूतयो रूपस्पर्शयोः सामानाधिकरण्यनियमावधारणात्तेजस्यप्यन्यतरानुद्भवे अन्यतरोद्भवो न स्यादिति भावः । ननु नीलरूपसमानाधिकरणस्पर्शस्य रसव्याप्यत्वस्यावधारणात्तद्व्यावृत्त्या स्पर्शोपि तमसो व्यावर्ततेत्याशङ्क्याह । एवं रसेति । उपपत्तिसौकर्यादाह ॥ तेजोवदिति ॥ यथा रूपसमानाधिकरणस्पर्शस्य न रसव्याप्यता तथा नीलरूपसमानाधिकरणस्यापि साधनावच्छिन्नसाध्यव्यापकस्य पृथिवीस्पर्शत्वस्य तत्रोपाधित्वादिति भावः ॥ स्वपक्षे साधकमुक्त्वा

(१) चाक्षुषत्वस्वीकारादिति पा० २ पु० ।

वह्नीरसत्वमेव वाङ्गीक्रियतां । तेजोऽभावत्वे तु कथं गत्यादिप्रत्ययः । अभावत्वेनोपस्थिते भावधर्मारोपासम्भवात् । (अन्यथा तदनुपस्थिते भावधर्मारोपासम्भवात्) (१) । न च स्वाभाविकगतेरन्यगत्यनुविधानानुपपत्तिः । आश्रयचलनानुविधानस्य पद्मरागप्रभायामेव दर्शनात् । किंच तेजोत्यन्ताभावरूपत्वे तमसि उत्पन्नव्यवहारो न स्यात् । प्रागभावरूपत्वेपि तथा । ध्वंसत्वेपि विना-

परपक्षे बाधकमाह । तेजोभावत्वे त्विति ॥ भावधर्माणां तेषामभावे प्रमासम्भव इत्यर्थः । नन्वारोपः सम्भवेदित्याशङ्क्य किमभावत्वोपस्थापकसामग्रीसमवधाने गतिभ्रमः तदसमवधाने वेति विकल्प्याद्ये दूषणमाह ॥ अभावत्वेनेति ॥ उपस्थिते उपतिष्ठमान इत्यर्थः । विशेष्यभानस्यारोपाहेतुत्वात् । यद्भानं यत्र प्रतिबन्धकं तत्सामग्र्या अपि तत्र प्रतिबन्धकत्वादिति भावः । द्वितीय आह अन्यथेति ॥ गतिप्रतीतिकाले आलोकाभावार्थकतमःपदोल्लेखादभावत्वान्येन रूपेणानुपस्थितेरवश्यन्तदुपस्थापकसामग्रीसमवधानं पूर्वं वाच्यमिति तेन प्रतिबन्धान्नारोपसम्भव इत्यर्थः ॥ ननु दोषमाहात्म्यादिना सत्यपि विशेषदर्शनेत्रारोपोभ्युपेयः अन्यथा गतेरन्यगत्यनुविधानानुपपत्तेरित्यत आह ॥ न च स्वाभाविकेति ॥ पद्मरागेति ॥ स्वाभाविकगतेरित्यनुषज्य-

(१) चिह्नस्थपाठः प्रथमपुस्तके नास्ति ।

शित्वं न स्यात्(१)। अन्योन्याभावेपि तथा। अपि च तमसि नीलसाक्षात्कारस्य भ्रान्तत्वे अनीलन्तम इति विपरीतसाक्षात्कारोपि स्यात्। न चायं कदाचिदपि कस्यापि भवति। प्रत्युत योगिनोपि नीलप्रत्यय एव तत्रोन्नीयते। नीलत्वेनाप्रतीयमाने तस्मिन् तमोव्यवहारो न स्यात्। नात्रालोकः किं पुनरन्धकार इति व्यवहाराच्चालोकाभावातिरिक्त एवायमन्धकार इति पूर्वपक्षः॥

ते। विकल्पानुपपन्नमपि तस्याभावत्वमित्याह। किञ्चेति॥ उत्पन्नादीति आदिपदेन ध्वस्तत्वोपग्रहः॥ भ्रमत्वव्यापकविपरीतसाक्षात्काराभावान्नीलसाक्षात्कारो न भ्रम इत्याह। अपि चेति। ननु भ्रमकाले विपरीतसाक्षात्काराभावेपि तद्दर्शनान्न तद्व्यापकत्वं तस्येत्यत आह॥ न चायं कदाचिदपीति॥ नन्वस्त्येव योगिनामनीलप्रत्यय इत्याह॥ प्रत्युतेति॥ सिद्धे भ्रमत्वे विशेषदर्शित्वाद्योगिनां विपरीतप्रत्ययकल्पनं तस्माच्च भ्रमत्वसिद्धिरित्यन्योन्याश्रयादिति भावः। नन्वस्माकमेवास्त्यनीलप्रत्ययस्तमसि आत्मन्यालोकाभावात्म कतमःप्रतीतेर्नीलोल्लेखित्वाभावादित्यत आह॥ नीलत्वेनेति॥ सहप्रयोगानुपपत्त्यापि नालोकाभावस्तम इत्याह नात्रालोक इति॥

(१) ध्वंसत्वे विनाशित्वं नेति पा० २ पु०।

अत्रोच्यते ॥ यद्यपि भावत्वतन्नियतधर्मप्रकारिका प्रतीतिस्तमोविषयानुभवसिद्धा तथापि तेजोऽव्यतिरिक्तभावगोचरचाक्षुषसाक्षात्कारस्य विषयसंस्कारकबाह्यालोकापेक्षानियमावधारणबलेन भ्रान्तत्वकल्पनमेव युक्तम् (१)। न च तेजोऽव्यतिरेकवत्तमोऽव्यतिरेकेण विशेषणीयमिदं। तेजोद्रव्यत्वस्यानन्यथासिद्धप्रमाणावधृतत्वात्। न च तमोऽव्यतिरेक एव तेज आस्तामिति वाच्यम्।

सिद्धान्ताभिधानं प्रतिजानीते॥ अत्रोच्यत इति॥ पूर्वपक्षरहस्यं निरस्यन्ननुवदति यद्यपीति । प्रतीतिर्यथाननुभवमनुमितिप्रत्यक्षादिरूपा । व्यापकानुपलम्भबाधेन निरस्यति ॥ तथापीति ॥ यदुक्तं तथात्वे प्रमाणाभावादिति तदसिद्धमित्याह । तेजोऽव्यतिरिक्तेत्यादिना । तेजोभावे व्यभिचारवारणाय भावेति । तेजसि व्यभिचारवारणायाह तेजोऽव्यतिरिक्तेति । घटादिस्पार्शनसाक्षात्कारे व्यभिचारवारणाय चाक्षुषेति । तेजःसाक्षात्कारे विषयस्य तेजसोऽपेक्षणादाह विषयसंस्कारकेति। स्वस्य च स्वासंस्कारकत्वादिति भावः । चक्षूरूपस्य तेजसश्चाक्षुषसाक्षात्कारमात्र एवापेक्षणादाह ॥ बाह्येति ॥ इन्द्रियाभिन्नेत्यर्थः ॥ युक्तमिति ॥ लाघवादिति शेषः । तस्यास्तमसि भावधर्मप्रतीतेः । तेजःप्रतिबन्दिं निरस्यति ॥ न चेति ॥ अन्यथेति ॥ उष्णस्पर्शादेराश्रयान्तरासिद्धेरित्यर्थः । विनिगमकाभावात्तेज एव तमोभावोऽस्तु इत्य-

(१) युक्तं तस्याः प्रतीतेरिति पा० २ पु० ।

तथा सत्युष्णस्पर्शभास्वररूपाश्रयद्रव्यान्तरकल्पनापातात्। अन्यथा कस्यारोपस्तेजसि स्यात्। तमसि तु क्लृप्तस्यैव नीलरूपादेरारोप इति न कल्पनागौरवम्। न च तमोभावत्वग्रहाय तत(१)तेजोपेक्षैव सङ्कोच्यतामिति वाच्यम्। तथा सति गौरवप्रसङ्गात्। तथा हि। तमो द्रव्यान्तरं कल्पनीयम्।

विज्ञाताश्रयशङ्कामुद्घाटयन्निरस्यति ॥ न चेति ॥ कल्पनेति ॥ ततश्च गौरवमिति भावः ॥ त्यज्यतां तर्हि सेत्यत आह ॥ अन्यथा कस्येति ॥ धर्माणामिति शेषः ॥ तादात्म्यारोपाभिप्रायेण यथाश्रुतमेव वा योज्यम्। ननु प्रकृते रूपादिप्रतीतेरसति बाधके प्रमात्वात्तमसो भावत्वं प्रकल्प्यालोकापेक्षा सङ्कोच्यतामुत तेजोव्यतिरिक्तभावचाक्षुषसाक्षात्कारे आलोकस्य जनकतावधारणबलेन भावत्वं त्यज्यताम्। अन्त्ये रूपपरिमाणगत्युत्पत्तिविनाशादिप्रत्ययानां भ्रान्तत्वं कल्प्यम्। अभावत्वेन प्रतीयमाने क्वचिदक्लृप्तो भावधर्मारोपश्च। तद्वरमेकव्याप्तिसङ्कोचमात्रकल्पनमित्याशङ्क्याह ॥ न च तमोभावत्वे त्विति। गौरवेति ॥ तमोव्यतिरिक्तत्वविशेषणप्रक्षेपे प्रामाणिकगौरवप्रसङ्गादित्यर्थः ॥ तेजोद्रव्यानङ्गीकारे त्वौष्ण्यादिबुद्ध्यनुपपत्तेस्तेजोव्यतिरेकविशेषणे प्रामाणिकं गौरवम्। न च तमोव्यतिरेकविशेषणानङ्गीकारे तस्याभावत्वप्रसक्तौ पूर्वगौरवद्वयं तस्य फलमुखत्वादिति भावः ॥ यदि तादृशोपि गौरवादभावत्वत्यागस्तदा विशे-

(१) ग्रहात् नियतेति पाठा० २ पु०।

तत्र रूपवत्त्वेऽपि निःस्पर्शवत्त्वकल्पनम् । उद्भूतनीलरूपवत्त्वे चानुद्भूतस्पर्शवत्त्वम् । निःस्पर्शस्य वा कथमारम्भकत्वम् । तत्र स्पर्शवद्द्रव्यत्वस्य प्रयोजकत्वात् । मूर्तत्वापेक्षया तस्य लघुत्वात् । आलोकाभावव्यङ्ग्यत्वमधिकमेव कल्पनीयम् ।

---

षणपक्षेऽपि तदप्यधिकमस्त्येवेत्याशयेन गौरवान्तरमुपन्यस्यति ॥ तथाहीति ॥ रूपवत्त्वेऽप्यस्पर्शवत्त्वमस्पर्शस्याप्यारम्भकत्वम् आलोकाभावव्यङ्ग्यत्वं चेति गौरवत्रयम् । उद्भूतनीलरूपस्यानुद्भूतस्पर्शत्वमालोकाभावव्यङ्ग्यत्वं चेति द्वयमिति पक्षभेदेन द्रष्टव्यम् ॥ स्पर्शवदिति ॥ स्पर्शवदन्त्यावयवित्वस्येत्यर्थः ॥ ननूक्तं मूर्तत्वमेव तत्र प्रयोजकमित्यत आह ॥ मूर्तत्वेति ॥ इयत्तावच्छेदविशेषितपरिमाणत्वोपाध्यपेक्षया स्पर्शवत्त्वस्य जातित्वेनाखण्डत्वादिति भावः ॥ ननु तथापि वेगवत्त्वं क्रियावत्त्वं वा तत्र तन्त्रमस्तु स्पर्शवत्त्वतुल्यत्वात् । मनस्तु नारम्भकम् । वेगक्रिययोस्तत्र परैरनङ्गीकारात् ॥ स्वमतेऽपि मनसः क्रियावत्त्वेऽपि तदारभ्यत्वाभिमतस्य प्रतीयमानतया प्रतीयमानधर्माश्रयतया वा पुरुषार्थसाधनत्वादर्शनादनारम्भकतोपपत्तेस्तमसश्च तद्दर्शनादारम्भकतोपपत्तेरिति चेत् न नित्यस्य स्वरूपयोग्यस्य फलोपधाननियमेन मनसोऽप्यारम्भकत्वस्य दुःपरिहरत्वात् । अन्यथा द्रव्यत्वादेरेवारम्भकताप्रयोजकत्वप्रसङ्गात् । पूर्वोक्तगौरवे वा तात्पर्यात् ॥ न केवलमक्लृप्तकल्पना किन्तु क्लृप्तविरुद्धकल्पनापीत्याह । आलोकेति॥ नन्वेवं तमस्तेजोवैधर्म्यात् पृथिव्यादीनामभावत्वापत्तिरित्यत आह ॥ न च पृथिव्यादीना-

न च पृथिव्यादीनामप्येवमभावत्वापत्तिरिति वाच्यम्। तत्र गन्धादेरनन्यथासिद्धस्य गुणस्य द्रव्यत्वव्यवस्थापकत्वात्। तमसस्तु न तथाभूतो गुण उपलभ्यते उपलभ्यमानस्त्वन्यथासिद्ध एव। कथं वा विशेषगुणयोग्यतामन्तरेण प्रत्यक्षमूर्तत्वमप्यस्य। भावधर्मारोपोऽप्यभावत्वानुपस्थितिदशायामुपपद्यते। अभावत्वानुपस्थितिस्तु दोषव-

मिति ॥ अनन्यथेति ॥ स्वाश्रयद्रव्यकल्पनामन्तरेणानुपपन्नप्रतीतिकस्येत्यर्थः। गुणादौ व्यभिचारवारणायाह मूर्तत्वमिति। तथा च व्यापकानुपलब्धिबाधितं तमसो भावत्वमिति भावः। रूपाद्यारोप्यकोटिविपरीतकोटिव्याप्याभावत्वरूपविशेषदर्शने कथं रूपाद्यारोप इति पूर्वपक्षे परिहारमाह ॥ भावधर्मारोपोपीति ॥ यद्यपि नीलन्तम इत्यालोकाभावत्वघटितप्रवृत्तिनिमित्तक(१)-तमःपदोल्लेखेऽभावत्वानुपस्थित्यभिधानमयुक्तं तथापि न विद्यन्ते भावा रूपपरिमाणगत्यादयोऽस्मिन्नित्यभावं तत्त्वेना(२)नुपस्थितिदशायां आरोप्यरूपादिराहित्येनानुपस्थितिदशायामित्येवात्र विवक्षितम्। अयं भावः। यद्विशेषदर्शनाभावे यो भ्रमः स तद्विशेषदर्शननिवर्त्यः। न च नीलारोपोऽभावत्वविशेषदर्शनाभावजन्यः येन तद्दर्शने न स्यात्। नीलन्तम इति प्रतीतेः सर्वसिद्धत्वात्। किन्तु नीरूपत्वादिप्रत्यक्षाभा-

(१) प्रवृत्तिकेति पाठा० २ पु०।

(२) भित्यभावेत्वेनेति पा० २ पु०।

शादेव समर्थनीया। दोषस्तु तथा वस्तुस्वरूपमेव। अदृष्टादिकमेव वा । पद्मरागप्रभायां चलनबुद्धे-राश्रयचलनानुविधायितानियमो नास्त्येव । का-

वहेतुक इति तत्प्रत्यक्षे परं न भवेत् । एवं च तथा पीतत्वाभावव्याप्यशंखत्वदर्शनं सदपि न विरोधि । यत्र विरोध्यपीतत्वप्रत्यक्षं तद्दोषप्राबल्यान्नास्तीति भवति पीतः शङ्ख इति भ्रमः । एवमिहाप्यालोकाभावत्वदर्शनं सदपि न विरोधि विरोधि वा नीलप्रत्यक्षं नास्त्येव दोषप्राबल्यादिति युक्तो भ्रमः॥ नन्वेवं दोषस्यानियतत्वात्तदपगमे कदाचिदनीलप्रत्ययप्रसङ्ग इत्यत आह। दोषस्तु वस्तुस्वरूपमेवेति॥ अस्मिन्पक्षे वस्तुस्वरूपस्य(१) प्रमातृमात्रसाधारण्याद्योगिनोपि नीलप्रत्यय एवोन्नीयत इति ज्ञेयम्॥ अदृष्टादिकमेव वेति॥ आरोपहेतुकसुखाद्यनुभावकादृष्टादिकमेव वेत्यर्थः। आदिपदेन भ्रमप्रयोजकप्रबलनीलसंस्कारपरिग्रहः। अत्र च पक्षद्वये योगिनां तत्सत्तानियमे प्रमाणाभावान्नीलप्रत्ययाभावोपपत्तिः। इदमेव च पक्षद्वयमभिप्रेत्य योगिनोपि नीलप्रत्यय एवोन्नीयत इति निरस्तमिति वक्ष्यति॥ यदुक्तं स्वाभाविकगतेरपि पद्मरागप्रभावदन्यगत्यनुविधानमुपपद्यत इति। तत्र दृष्टान्तं विघटयति। पद्मरागादिप्रभायामिति । कारणवशात्कुड्याद्यावरणविगमवशात् ॥ ननु तमसोपि नान्यगत्यनुविधाननियमः। स्थितेपि स्तम्भादौ प्राक्पश्चाद्दीपसम्बन्धादिना छायाचलनोपलम्भात्। कुड्यादिनाऽप्राप्तपरभागायाश्छायायास्तदपगमे

(१) वस्तुस्वरूपस्य दोषस्येति० पा० २ पु० ।

रणवशादन्यत्रापि तथा चलनोपलम्भात् । यद्वा तमो यदि गतिमत्स्यात् तेजोभावाविषयकचाक्षुषसाक्षात्काराविषयो न स्यात् । तथा तमो यदि

परभागप्राप्तिदर्शनाद्वेत्यस्वरसादाह । तमो यदि गतिमत्स्यात् तेजोभावाविषयकचाक्षुषसाक्षात्काराविषयो न स्यात् इति । अत्रालोकाजन्यचाक्षुषसाक्षात्कारविशेष्यं पक्षः तेन तमःसंज्ञकस्य पुंसो पक्षतया न विपर्ययपर्यवसानेऽतो बाधः । गतिमत्वं च समवायेन गत्यधिकरणत्वं तेन न कालादौ व्यभिचारः । न वा चोरादिगत्यधिकरणे तमसि बाधेन विपर्ययापर्यवसानं । साक्षात्काराविषयो न स्यादित्युक्ते आपाद्याप्रसिद्धिः साक्षात्कारविषयित्वस्य केवलान्वयित्वात् । लौकिकत्वेन साक्षात्कारविशेषणे चेष्टापत्तिरतस्तेजोभावाविषयकेति साक्षात्कारविशेषणम् ॥ तत्राप्यभावपदस्य भावाभावसाधारणाभावपरतयाऽऽपाद्यविपर्ययहेतावप्रसिद्धिस्तद्वारणाय तेजःपदम् । आकाशाद्यभावाविषयसाक्षात्काराविषयत्वाभावस्य तमस्यपि सत्वात् दृष्टापत्तिवारणाय तदिति तु मन्दम् । आद्यनञा सामान्याभावविवक्षायामिष्टापत्त्यसम्भवात् । तदविवक्षायां तु सत्यपि तेजःपदे यत्किञ्चित्तेजोभावमादायेष्टापत्त्यपरिहारात् । एतेन सामान्याभावानङ्गीकर्तृमतेनैतदित्यपि प्रत्युक्तम् ॥ अन्ये तु घटाभावाभावरूपे घटेऽभावाविषयसाक्षात्काराविषये व्यभिचारवारणाय तेजःपदमित्याहुः । तदपि मन्दम् । अभावपदेनाभावैकस्वभावस्य न्यायेनोपादानत्वात् । अन्यथाऽभावाविषयत्वाप्रसिद्ध्याऽऽपाद्याप्रसिद्धेः । घटतेजोभावाविति

समूहालम्बनविषये व्यभिचारवारणायाद्यं नञ्द्वयम् । घटे च तेजोभावविषयकसाक्षात्कारविषयत्वेपि घटोयमिति तदविषयसाक्षात्कारविषयत्वमप्यस्तीति न व्यभिचारः ॥ ननु तेजोभावविषयकसाक्षात्काराविषयः स्यादित्येवास्तु । न च व्यभिचारः घटोयमिति साक्षात्कारविषयतादशायां तेजोभावविषयकसाक्षात्काराविषयत्वस्य पर्युदासवृत्त्या लभ्यस्य सत्त्वादिति चेत् न तेजोभावविषयसाक्षात्कारविषयान्यत्वस्य च पर्युदासलभ्यस्य घटादावसत्त्वेन व्यभिचारानुद्धारान्नञ्द्वयोपादानात् । तेजोभावविषयसाक्षात्कारभिन्नसाक्षात्कारविषयत्वस्य च पर्युदासालाभात् । भावमुखस्य तस्य विवक्षितमात्रस्यापाद्यान्तरत्वेनावधारणात् । न च तथापि समूहालम्बनविषयतादशायां घटतेजोभावाविषयकबुद्ध्यविषयत्वमस्तीति व्यभिचारान्न निस्तार इति वाच्यम् । अविषयपदेन विषयभिन्नस्योक्तत्वात् । ननु समस्तोपादानेपि मनसि व्यभिचारावक्रोक्तिवैयर्थ्यं च तेजोभावाविषयसाक्षात्कारविषयः स्यादित्यस्यापि सुवचत्वात् इति चेत् न मनोव्यभिचारनिरासायैव तदादरात् । तथाहि आपाद्यतेजोभावाविषयसाक्षात्काराविषयत्वाभावो द्विधा । तेजोभावाविषयसाक्षात्कारविषयत्वाद्वा तेजोभावविषयकसाक्षात्काराविषयाद्वा । तत्राद्यं प्रकारमादाय घटादौ व्यभिचारवारणम् । द्वितीयप्रकारस्य घटतेजोभावाविति समूहालम्बनविषयत्वेन तत्रासम्भवात् । मनसि च द्वितीयप्रकारमादाय तमसि तूभयमप्यनिष्टमिति । तेजोभावविषयकसाक्षात्काराविषयो न स्यादित्युक्ते त्विष्टापत्तिः । तमःपद-

जन्यतेजोभावाविषयबुद्ध्यविषयत्वाभावेनेष्टापत्तिवार-णाय साक्षात्कारपदम्। कश्चित्तु चाक्षुषं तमो यदि चाक्षुषगतिमत्स्यात् आलोकव्यङ्ग्यं स्यात् इत्यत्र तात्पर्यं वक्रोक्तावभिरुचिमात्रमित्याह। क्वचित्पुस्तके तमो यदि गतिमत् स्यात् तेजोभावविषयसाक्षात्कार-विषयो न स्यादिति पाठः। तत्रापि तेजःपदप्रयोजनं पूर्ववदेव। ननु तेजोभाववायू इति स्पार्शनसाक्षात्कारविषये वायौ भट्टमते मूलशैथिल्यम् गृहाङ्गणयोस्तेजोभावघटाविति साक्षात्कारविषये घटादौ स्वमतेपि। अत्राहुः विषयेण साक्षात्कारो विषयसाक्षात्कारः साधनं कृतेति समासः। आलोकाभावे विषयसाक्षात्कार आलोकाभावविषयसाक्षात्कारः। स च चाक्षुषो विवक्षितः। तेनालोकाजन्यविषयजन्यचाक्षुषसाक्षात्कारविषयो न स्यादिति पर्यवसितम्। तत्रालोकाजन्यपदेन घटादौ व्यभिचारनिरासः। चाक्षुषपदेन परमते वायौ। विषयजन्यपदेनालोकाभावकालीनप्रमेयत्वप्रकारकचाक्षुषसाक्षात्कारविषयघटादावेव व्यभिचारनिरासः। नन्वेवमपीदृशबिडालोलूकादिचाक्षुषसाक्षात्कारविषये तत्रैव व्यभिचारः। न च मानुषेति विशेषणाददोषः। अञ्जनादिसंस्कृततस्करादिचक्षुर्जन्यसाक्षात्कारविषयतया तत्रैव व्यभिचारतादवस्थ्यादिति चेत् न। तत्रापि विषयसंस्कारकालोकस्य फलबलेन कल्पनात्। न च तस्यानुद्भूतरूपत्वे संस्कारकतापत्तिः। उद्भूतरूपत्वे च तैरिवान्येनापि तद्ग्रहापत्तिरिति वाच्यम्। नयनगतापत्तधातुवत् प्रतिनियतपुरुषग्राह्यतोपपत्तेरिति। ननु तमसस्तेजोभावाविषयसाक्षा-

तेजोऽभिन्नत्वे सति गतिमत्त्वात् तेजोविषयकचाक्षुषसाक्षात्कारविषयकगतिमत्त्वादित्यत्र सा-

त्काराविषयत्वाभावापादने इष्टापत्तिः । तमोद्रव्यत्ववादिमते आलोकाभावव्यङ्ग्यस्यापि तमसः साक्षात्कारे आलोकाभावस्याविषयत्वात् । न हि व्यङ्ग्यप्रतीतौ व्यञ्जकभाननियमः । घटादिचाक्षुषसाक्षात्कारे व्यञ्जकालोकोल्लेखनियमे आलोकवान्घट इत्येव तदाकारप्रसङ्गात् । गवादिप्रतीतौ सास्नादेर्विषयत्वप्रसङ्गाच्चे-त्यस्वरसादाह तथा तमो यदीति । तेजो न विषयो यस्य चाक्षुषसाक्षात्कारस्य तदविषयगतिः स्यादित्यर्थः । अत्र नञ्द्वयानुपादाने सनञि मूलग्रैथिल्यम् । तेजस्तमसी चलत इति समूहालम्बनविषयतया तमसीष्टापत्तिरप्येवेति यथोक्तम् । न चैवमप्युक्तसमूहालम्बनदशायामिष्टापत्तिः उत्तरनञः प्रसज्यप्रतिषेधार्थत्वात् । चाक्षुषपदं च तेजोविषयकस्पार्शनसाक्षात्कारविषयगतौ घटादौ व्यभिचारवारणाय । न च तेजोविषयताशून्यचाक्षुषसाक्षात्कारविषये घटादौ व्यभिचारः । तेजोऽजन्यत्वस्यैव तदर्थत्वात् । अत एव पूर्वास्वरसनिरस्तारोपि । चक्षुषैव तेजसाजन्ये(१) कथं तेजोऽजन्यत्वमिति चेत् न विषयसंस्कारकतेजस एव तेजःपदार्थत्वात् । अत एव तेजसि व्यभिचारवारणायापादके तेजोभिन्नत्वविशेषणम् । गतिमत्पदं संपातायातम् न त्वा-

(१) चक्षुषि च तेजसाजन्ये इति पा० २ पु० ।

रपर्यात् । न च प्रतियोगिग्रहानुपपत्तिः । सर्वत्र तथाकल्पनात् । तमोऽव्यवहारस्तु प्रौढ-प्रकाशकतेजस्संसर्गाभावनिबन्धन एव दोषवशा-

पाद्ये विवक्षितं । शिष्टं पूर्ववत् । अपरे तु नञ्द्वयरहितमापाद्यं मत्त्वा चाक्षुषपदव्यत्ययमाहुः । नन्वभावत्वपक्षे देशकालविप्रकृष्टस्य तेजोमात्रस्यासर्वज्ञेन दुर्विज्ञानतया कथं तत्प्रतियोगिकतमोबुद्धिः स्यादित्याशङ्क्याह । न चेति । सर्वत्रेति । सामान्यलक्षणादिना सकलप्रतियोग्युपस्थितेः सामान्याभावप्रतीतिमात्रसाधारण्यादिति भावः । ननु तेजोभावस्य तमस्त्वे दीपवत्पथि सौराद्यालोकाभावमादाय तमोऽव्यवहारः स्यादित्यत आह तमोमात्रेति । अन्योन्याभावव्यावृत्त्यै संसर्गेति । यत्किंचित्तेजस्संसर्गाभावव्यावृत्त्यै यावदिति । सोष्मणि तमस्यव्याप्तिनिरासाय प्रकाशकेति ॥ न चोष्मणोऽपि प्रत्यासत्तिविधया स्वस्पर्शप्रकाशकत्वमस्त्येवेति वाच्यम् । उद्भूतानभिभूतरूपत्वस्यैव तदर्थत्वात् । एतेन प्रकाशकता ज्ञानजनकतेति ज्ञानरूपाचाक्षुषघटितप्रतियोगिकत्वात्तमसः चाक्षुषत्वानुपपत्तिरित्यपास्तम् । प्रभासंवलिते छायातमसि अव्याप्तिवारणाय प्रौढेति ॥ प्रौढिरुद्भूतानभिभूतस्पर्शता । अत्र तमःस्वरूपं योग्योद्भूतरूपप्रत्येकतेजस्संसर्गाभाव एव । व्यवहारः परं यावदन्तर्भावप्रयुक्तः । न च प्रत्येकं तमस्त्वे यत्किञ्चित्तेजसि सत्यपि तेजोन्तराभावमादाय तमोऽव्यवहारः स्यादिति वाच्यम् । कार्यदर्शनबलेन तेजोन्तरस्य प्रतिबन्धक-

र्प्रतियोगिनोऽनवभासेऽपि तेजोभावावभासाविरोधाच्च । अभावत्वग्रहे हि प्रतियोगिग्रहापेक्षणात् ।

न्वकल्पनात् । न च छायारूपतमोव्यवहारेऽपि तेजोन्तरस्य प्रतिबन्धकतापत्तिः । कार्योन्नेयधर्माणां यथाकार्यमुन्नयनादिति व्यवहारपदं प्रयुञ्जानस्याशय इति वदन्ति । 'तु' शब्दोऽवतमसादिव्यवहाराणामन्यनिबन्धनत्वसूचनाय । तत्र रूपग्राहकतेजःसंवलितः तदवान्तरविशेषग्राहकयावत्तेजःसंसर्गाभावोऽवतमसम् । रूपत्वावान्तरजातिग्राहकतेजस्संवलितः प्रौढप्रकाशकयावत्तेजःसंसर्गाभावश्छाया । यावदालोकाभावोऽन्धतमसम् । सर्वेषु चैतेषु लक्षणेषु तत्तज्ज्ञानविशेषपरिचायितजातिविशेषविशिष्ट एवालोकः प्रतियोगीति न ज्ञानगर्भतया तेषामचाक्षुषत्वप्रसङ्गः । ननूद्भूतरूपस्पर्शस्य द्रव्यप्रत्यक्षकताप्रयोजकत्वपक्षे प्रभाद्यतीन्द्रियतेजःप्रतियोगिकमन्धतमसं कथं चाक्षुषं स्यादिति चेन्न तदालोकगतरूपविशेषाभावस्यैव तमस्त्वात् । परिहृतायामपि प्रतियोगिग्रहानुपपत्तौ सिंहावलोकितेन स्मृतमेकदेशिनः परिहारान्तरमाह ॥ दोषवशादिति ॥ दोषश्चानियत इति तेजोभावस्त्वेन तत्प्रतीतौ तदभावो द्रष्टव्यः । नन्वभावज्ञानसामान्यहेतोः प्रतियोगिज्ञानस्याभावे कथं दोषादपि तदवभास इत्याशङ्क्याह ॥ अभावत्वग्रहे हीति । अभावत्वप्रकारके तद्ग्रह इत्यर्थः । यद्यपि तमःप्रतीत्यंशे न दोषजन्यता वा सिद्धा न तरामभावत्वाग्रहः प्रतियोग्यग्रहो वेति नायं परिहारस्त-

तत्र राशिष्विव कश्चित्समुदायिव्यतिरेकप्रयुक्त एव विनाशप्रत्ययः । एवमुत्पत्तिप्रत्ययोप्यूह्यः । नीलरूपारोपविशिष्टस्तेजस्संसर्गाभावस्तम इति केचित्(१) । अत्र चाक्षुषः प्रत्ययः कथमिति तच्चिन्त्यम् । यत्पुनरुक्तं नीलन्तम इति प्रत्ययस्य

थापि पूर्वपरिहार एव तात्पर्यम् । नन्वालोकाभावोऽपि न सः । तथाहि न तावदत्यन्ताभावः । उत्पादविनाशप्रत्ययालम्बनत्वानुपपत्तेः । अत एव न प्रागभावध्वंसावपीत्यत आह । तत्रेति ॥ शिवादित्यमतमाह । नीलरूपेति । आरोपस्य चक्षुरग्राह्यत्वेन तद्विशिष्टसंसर्गाभावात्मनस्तमसोप्यचाक्षुषत्वप्रसङ्ग इति दूषयति अत्रेति । ननु ज्ञानोपनीतनीलारोपविशेषणालोकसंसर्गाभावप्रतीतेश्चाक्षुषत्वे को विरोधः । तदिन्द्रिययोग्यविशेष्यकत्वस्यैव तदिन्द्रियकरणतानियामकत्वात् । न च लौकिकचाक्षुषप्रत्ययः कथं स्यादिति विवक्षितमिति वाच्यम् । तत्राप्यालोकांशे ज्ञानलक्षणप्रत्यासत्तिजन्यत्वेन तमःप्रतीतेः सर्वांशे लौकिकत्वानुपपत्तेरिति चेत् न नीलारोपस्य ज्ञानाभावेन तदुपनयसहकृतचक्षुर्ग्राह्यानुपपत्तेर्विवक्षितत्वात् । भ्रमत्वस्य विपरीतप्रत्ययाबाध्यत्वात्प्रकृते च तदभावान्नीलप्रत्ययो न भ्रम इति पूर्वपक्षोक्तमनूद्य निराकरोति ॥ यत्पुनरुक्तमिति ॥ दोषकाली-

(१) कश्चिदिति पाठा० २ पु० ।

भ्रान्तत्वेऽनीलन्तम इति प्रतीतिः कदाचिदपि स्यात् इति । तदपि मन्दं शरीरेऽहं प्रत्ययवदुपपत्तेः । अत एव योगिनोपि तथा प्रत्यय एवोन्नीयत इति निरस्तम् । पेचकादीनां बाह्यालोकनिरपेक्षं चक्षुर्ग्राहकमित्यसिद्धमेव । ( तेजोन्तरस्य विद्यमानत्वात् । अत एव ते दिवा न पश्यन्ति । तस्य सौरालोकेनाभिभूतत्वात् । तेषां तत्सहचरचक्षुर्ग्राहकत्वमिति नियमात् )(१) । नात्रालोकः किं

---

नविपरीतप्रत्ययाभावमात्रान्नाभ्रमत्वसिद्धिरित्याह शरीर इति ॥ ननु तत्त्वज्ञानदशायां बाधादस्तु देहादेरहं प्रत्ययस्य भ्रमत्वं इह तु वस्तुस्वरूपस्यैव दोषस्य तमःप्रत्ययमात्रेऽनुवृत्तेर्न विपरीतप्रत्ययोपपत्तिरिति चेन्न अदृष्टादिदोषाभिप्रायेणैवमभिधानात् । अत एवाह । अत एवेति । नीलभ्रमप्रयोजकस्यादृष्टादेर्दोषस्य योगिष्वभावादेवेत्यर्थः । ननु तेजोऽव्यतिरिक्तभावगोचरचाक्षुषसाक्षात्कारे बाह्यालोकापेक्षेति मूलमेवासिद्धम् पेचकादिचाक्षुषसाक्षात्कारे व्यभिचारादित्याशङ्क्याह पेचकादीनामिति । नन्वेवं तदभिभावकसौरालोकसहकृतेनैव तच्चक्षुषा कुतो न तद्ग्रह इत्याशङ्क्याह तेषामिति । फलबलादालोकविशेषस्यैव सहकारित्वकल्पनादिति भावः । सहप्रयोगा-

---

(१) ( ) चिह्नस्थपाठो द्वितीयपुस्तके ।

पुनरन्धकार इति व्यवहारस्तु नात्र घटः किन्तु तदभाव इतिवद्विवरणरूपादिना समर्थनीय इति सर्वं समंजसम् ॥

इत्यन्धकारवादः ॥

---

नुपपत्तिं निरस्यति नात्रेति । विधिमुखः प्रत्ययस्तु प्रलयादिवदुपपादनीयः इत्याह ॥ इति सर्वं समञ्जसमिति ॥

इति श्रीसकलसामन्तचक्रचूडामणिमरीचिमंजरीपरागपिञ्जरितचरण–कमलकलिकर्णावतार–श्रीमत्प्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायामन्धकारवादप्रकरणम् ॥



किं तत्कारणत्वम् ?। कार्यनियतपूर्ववर्तित्वं वा। कार्यनियतपूर्ववृत्तिजातीयत्वं वा । अनन्यथासिद्धनियतपूर्ववर्तित्वं वा । कार्यसहभावे सत्येतदेव वा । सहकारिविरहप्रयुक्तकार्याभाववत्वं वा । अन्यद्वा । नाद्यः । कुम्भकारपितुरपि

---

तत्पदसूच्ययाक्षेपसङ्गत्या कारणपदप्रवृत्तिनिमित्तविचारस्यानवसरतां परिहरन्नेव विप्रतिपत्तिमूलकं संशयमाह ॥ किं तत्कारणमिति ॥ तत्पूर्वप्रकरणयोस्तत्र तत्रोपक्षिप्तकारणत्वं कारणपदप्रवृत्तिनिमित्तधर्मि । तत्र संशयकोटीराह ॥ नियतेति ॥ अस्य कारणपदार्थत्वेऽनुत्पादितकार्ये वनस्थदण्डादावप्रवृत्तिप्रसङ्गः इष्टसाधनत्वाज्ज्ञानादित्यरुच्या जातीयत्वविशेषणेन कोट्यन्तरमाह । कार्येति । तन्तुरूपादौ पटादिकारणताप्रसंगभयादाह । अनन्यथासिद्धेति । अनन्यथासिद्धनियतपूर्ववर्तिजातीयविनश्यदवस्थकर्मण्यतिप्रसङ्गादाह । कार्यसहभावेति । प्रतिव्यक्तिकार्यसहभावोपासने वनस्थदण्डादावप्रवृत्तिप्रसङ्गः । सहभूतजातीयत्वविवक्षायानुसरण स एव दोष इत्यत आह । सहकारीति । कुंभकारपितुरपीति । यद्यपि कुम्भकारत्वेन तस्य कारणत्वमिष्टमेव तथापि कुम्भकारपितृत्वेनापि तत्स्यादिति भावः । किञ्च किमिदं कारणमात्रलक्षणमुत तत्तत्कार्यकारणलक्षणं इति विकल्प्य कार्यापेक्षया पूर्वत्वस्यासंभवनिरस्तत्वात्कार्यपदवैयर्थ्येनाद्यं मुनिरघम्मन्वानः कार्यपदस्वरससूचिते यत्कार्यापेक्षया यन्नि-

कुम्भम्प्रति कारणत्वप्रसङ्गात् । आकाशादेः कार्यमात्रे कारणत्वप्रसङ्गाच्च । किञ्च पूर्ववर्तित्वं प्रागभावावच्छिन्नसमयवर्तित्वं । तथा च तयोरकारणत्वप्रसङ्गात् । न हि प्रागभावावच्छिन्ने समये प्रागभावो वर्तते । समये समयो वा । किञ्चैवं घटादिकं प्रति रासभोऽपि कारणं स्यात् । तस्यापि घटादिनियतपूर्वसमयवर्तित्वात् । न ह्यनादौ संसारे कस्यापि घटस्य पूर्वं रासभो न वर्तते ।

---

यतपूर्ववृत्ति तत्तत्कारणमिति द्वितीयपक्षे दूषणमाह आकाशादेरिति । पूर्वत्वं प्रागभावावच्छिन्नत्वं । तत्र प्रागभावः समयविशेषणं उपलक्षणं वेति विकल्प्योभयत्र दूषणं संगृह्णाति । तथाच तयोरिति । सङ्ग्रहं विभजते ॥ विशिष्टे प्रागभावशत आत्माश्रयप्रसङ्गादिति भावः । उपलक्षणत्वपक्षे आह समय इति । स्वात्मनि वृत्तिविरोधादिदानीं मध्यं दिनमितिप्रतीतेरुपाधिमात्रविषयत्वादुपधेयांशेऽव्याप्त्यापातादिति भावः । कालविशेषवादिपूर्वपदसमभिव्याहृतान्नियतपदाद्दैशिकनियमाप्रतीतेराह । किञ्चैवमित्यादिना । घटविशेषे दैशिकव्यभिचारान्नियमभंगमभन्वानं प्रत्याह । नहीति । अत एवेति । रासभातिव्याप्तेरेवेत्यर्थः । नियतपूर्ववर्तिजातीयत्वं हि न तद्वृत्तिजातिमत्वमात्रं सत्तयातिप्रसङ्गात् । किन्तु पूर्ववृत्तितानियमावच्छेदकजातिमत्वमिति स्थिते जातिपदस्य मुख्यामुख्यार्थत्वविकल्पयो-

अत एव न द्वितीयः । आकाशादेरकारणत्वप्रसङ्गाच्च । न ह्याकाशादीनां तज्जातीयत्वेन कारणत्वावधारणम्(१) । एकव्यक्तिकत्वेन तत्र जातेरभावात् । न च जातित्व(२)मुपलक्षणम् । उपाधेः

राद्यो ऽव्याप्तिमाह । आकाशादेरिति । यद्यपि जन्यगुणकारणतावच्छेदकद्रव्यत्वजातिमत्त्वेनेतरेषामिवाकाशस्यापि कारणत्वे नानुपपत्तिस्तथापि आकाशादिमात्रवृत्तिः शब्दादिविशेषं प्रतीष्यमाणा सा न स्यादिति विवक्षितम् । एतदेव विवृण्वन् हेतुमाह नहीति । तदपि कुत इत्यत आह । एकव्यक्तिकत्वेनेति । तत्र तन्मात्रे तन्मात्रवृत्तेर्धर्मस्यैकव्यक्तिकत्वेनानेकवृत्तित्वघटितजातित्वाभावादित्यर्थः । नन्वस्तु जातिपदमजहत्स्वार्थलक्षणया कारणतावच्छेदकधर्ममात्रपरमित्यत आह । न चेति ॥ तथाप्यव्याप्तिरित्याह । उपाधेरपीति । कारणव्यक्त्यनेकत्वे ह्यानन्त्यव्यभिचाराभ्यां कारणताग्रहानुपपत्त्या युज्यतेऽनुगतावच्छेदकैकधर्मापेक्षा । इह त्वाकाशकालादिव्यक्तिरेकैकेति तत्कारणताग्रहे आनन्त्यव्यभिचारशङ्काया असम्भवात्किमवच्छेदकधर्मग्रहेण । न च कारणताया ससम्बन्धिकपदार्थतया सम्बन्धितावच्छेदकप्रकारकज्ञानसाध्यज्ञानत्वावच्छेदकाग्रहे तद्ग्रहानु-

(१) कारणत्वमिति पा० २ पु० ।
(२) जातीयत्वमिति पा० २ पु० ।

रपि तदवच्छेदकस्याभावात् । न ह्याकाशादीनां कारणत्वं केनाप्यवच्छिद्यते । नापि तृतीयः । अनन्यथासिद्धत्वं ह्यन्यथासिद्धिविरहः । अन्यथासिद्धिश्च प्रकारान्तरेणोत्पत्तिर्ज्ञप्तिर्वा । अन्यत्वं च कार्यापेक्षयान्यापेक्षया वा । न तावदाद्यः । दण्डादेरप्यकारणत्वप्रसङ्गात् । न हि घटादिभिन्नप्रकारेण दण्डादेर्नोत्पत्तिः । नित्यस्य कार्यमात्रं प्रति कारणत्वप्रसङ्गाच्च । एवं ज्ञप्तिपक्षोऽपि निरस्तः । न द्वितीयः । यत्किञ्चिदपेक्षया प्रकारान्तरोत्पत्तिज्ञप्त्योः सर्वसाधारण्यात् । अनन्य-

पपत्तिरिति वाच्यम् । ससम्बन्धिकप्रत्यक्ष एव तथा नियमात् । अवान्तरवैजात्यानुपस्थितावप्यतिप्रसक्तेन स्वर्गत्वेन रूपेणोपस्थिते स्वर्गविशेषे ज्योतिष्टोमादिकारणतायाः श्रुत्या बोधात् । आकाशादिकारणतायाश्चाप्रत्यक्षत्वादिति भावः । कार्यादन्येन रूपेणोत्पत्तिविरहोऽनन्यथासिद्धिरित्याद्ये दोषमाह ॥ दण्डादेरिति ॥ अनादिष्वतिव्याप्तिमप्याह नित्यस्येति । विशेष्यव्यतिरेकप्रयुक्तस्य विशिष्टव्यतिरेकस्य तत्रापि सुवचत्वादिति भावः । कार्यादन्येन प्रकारेण ज्ञप्तिविरह इति द्वितीयमप्युक्ताव्याप्त्यतिदेशेन दूषयति। एवमिति । घटादिज्ञप्तिप्रकाराद्घटत्वादेरन्येन प्रकारेण(१) दण्डादिज्ञप्तिसम्भवादव्याप्तिरित्यर्थः । सर्वेति ॥ तथा च तयोः कार्यकारणमात्रसाधारण्येन तदविरहादव्याप्तिरिति

(१) दण्डत्वादिनेति पाठविशेषो १ पु० ।

थासिद्ध्यनिर्वचनादेव न चतुर्थोऽपि । तन्निर्वचने त्वनन्यथासिद्धनियतपूर्ववर्तित्वेन तत्त्वे शेष(१)-वैयर्थ्यात् । न च कुम्भं प्रति कुम्भकारपितुरपि कारणत्वव्युदासार्थं(२) सहभावो विशेषणमिति वाच्यम् । अनन्यथासिद्ध्यैव तन्निरासात् । कथमन्यथा घटसहभावेऽपि न कपालरूपादेः कारणत्वम् । कथं

भावः । शेषेति । कार्यसहभावेत्यर्थः । व्यावर्त्यान्तरसद्भावादवैयर्थ्यमाशंक्याह ॥ न चेति ॥ अपिशब्दानन्तरं कुम्भकारपितृत्वेनेति शेषो द्रष्टव्यः । कुम्भकारत्वेन तत्कारणतायाः सिद्धान्तत्वेनाव्युदसनीयत्वात् । तद्व्यावृत्तेरन्यथासिद्धेर्वैयर्थ्यं तदवस्थमित्याह । अनन्यथासिद्ध्यैवेति । कुम्भकारपूर्ववृत्तित्वज्ञानोपजीवितज्ज्ञानविषयतया कुम्भकारपितृत्वेन तस्यान्यथासिद्धेरिह चानन्यथासिद्धिविशेषणादिति भावः । कार्यसहभावेन कृतकार्यत्वादनन्यथासिद्धिरेव त्यज्यतामित्याशङ्क्याह कथमन्यथेति । आदिपदेन कदाचित्कार्यसहभूतस्य कुम्भकारपितुरपि संग्रहः । एवं चानन्यथासिद्धत्वस्यावश्यकत्वेनैव कुम्भकारपितृनिरासात्सहभावविशेषणवैयर्थ्यमिति भावः । न वैयर्थ्यमात्रम् किन्तु अव्याप्त्यापादकतापीत्याह ॥ कथं वेति । ननु सहभावेऽप्यस्ति सहभावनिरूप-

(१) नियतपूर्ववर्तित्वेनैवोपपत्तौ इति पा० २ पु० ।

(२) कारणत्वप्रसङ्गव्युदासार्थमिति पा० २ पु० ।

वा कार्यासहभूतस्य यागादेश्च कारणत्वम्। न च व्यापारद्वारा तस्य सहभाव इति वाच्यं बाधात्। न च सहभावनिरूपकत्वमेव सहभावशब्दार्थ इति वाच्यम्॥ एतदन्तर्भावेन कारणपदार्थत्वे व्यापाराग्रहदशायां कारणव्यवहारोच्छेदप्रसंगात्॥ न च

कत्वं यागादीनां तथाहि स्वर्गविशेषनियतपूर्ववर्तिता तावदपूर्वविशेषेऽवगम्यते सा च नापूर्वत्वेनैव यत्किञ्चिदपूर्वादपि फलप्रसङ्गात्। किन्तु यागविशेषापूर्वत्वेन। अत्र चापूर्वस्येव यागस्याप्यस्ति सहभावनिरूपकत्वं न हि यागमज्ञात्वा तदपूर्वत्वेन तस्य स्वर्गविशेषसहभावः सुग्रह इति। तदेव चात्र विवक्षितमिति शङ्कमानं प्रत्याह न च सहभावेति। किमेतावता भंग्यन्तरेण व्यापारद्वारा कार्यसहभावनिरूपकत्वे सत्यनन्यथासिद्धनियतपूर्ववर्त्तित्वं लक्षणमित्युच्यते उत कार्यसहभावनिरूपकत्वे सतीत्याद्येव लक्षणं यागादौ व्यापारद्वारा तत्पर्यवसानमिति विकल्प्य नाद्य इत्याह। एतदन्तर्भावेनेति। व्यापारे व्यापारान्तराभावेन व्यापारिणि यागादावपि कारणताग्रहदशायां तद्ग्रहोत्तरकल्प्यव्यापारानुपस्थित्या व्यापारद्वारा सहभावनिरूपकत्वस्य दुर्ज्ञानत्वात् कारणताऽग्रहप्रसङ्गादित्यर्थः। द्वितीयस्तु ध्वंसासहभूतस्य प्रतियोगिनः तत्राकारणताप्रसङ्गेन बाहिरेव निरस्यः। ननु द्रव्यारंभकसंयोगनाशकालीनेनावयविकर्मणा स्वाव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगिनि स्वाश्रये संयोगविभागादेरजननात्तदसहभूतकर्मविशेषव्यावृत्त्यै सहभाव-

विनश्यदवस्थकर्मादिव्यावृत्त्यर्थं सहभावो विशेषणमिति वाच्यं । तत्रापि स्वरूपयोग्यतारूपकारणत्वस्येष्टत्वात् ॥ कार्याभावस्तु तत्र सहकारिविरहात् ॥ किंच कार्यसहभूतत्वे सति अनन्यथासिद्ध-

विशेषणमास्तामित्याशंक्याह । न च विनश्यदिति । विनश्यदवस्थस्य कर्म विनश्यदवस्थकर्म विनश्यत्समवायिकर्मेत्यर्थः । एतच्च कार्योत्तरकालं सत एव समवायित्वमित्यनादृत्योक्तम् । वस्तुतस्तदाश्रयणे कर्माभाव एवेति ध्येयम् । विनश्यदवस्थं च तत् कर्म चेति न युक्तं । द्वितीयक्षणे विनश्यदवस्थस्यैव तस्य कार्यसहभूतत्वात्तेन व्यवच्छेदस्य शंकितुमशक्यत्वात् । फलोपधानस्यापि तत्र संभवेन स्वरूपयोग्यताया एवेष्टत्वाभिधानायोगात्कार्याभावस्त्वित्यादिना विरोधाच्च । न चैवं विनश्यदवस्थस्य कर्माश्रयस्य व्यवच्छेद्यताया अनाशंकितत्वात्तज्जातीयत्वं तु विनश्यदवस्थसाधारणमिति कथं तद्व्यवच्छेद इत्यभिधानानौचित्यमिति वाच्यम् । विनश्यदवस्थपदेन तद्गतकर्मण एव लक्षणादिति तद्व्यावृत्त्यै विशेषणोपादानेपि प्रत्युताव्याप्तिरित्याह स्वरूपयोग्यतेति । लाघवेन कर्मत्वस्यैव संयोगादिजनकतावच्छेदकत्वात्तस्य च विनश्यदवस्थकर्मसाधारणत्वादिति भावः । ननु तस्यापि स्वरूपयोग्यत्वे कदाचित्फलोपधानप्रसंग इत्यत आह कार्याभावस्त्विति । उत्तरकाले समवायिविरहादित्यर्थः । वस्तुतो विशेषणोपादानेपि तद्व्यावृत्तेरशक्यतया वैयर्थ्यं दुर्वारमित्याह । किंचेत्यादिना । तत्र

घनियतपूर्ववृत्तिजातीयत्वं त्वयापि वाच्यं। न तु प्रतिव्यक्ति कार्यसहभावः। अन्यथा कारणत्वानिश्चयेन प्रवृत्तिः क्वापि न स्यात्। सहभावस्य कार्योत्पत्तेः पूर्वं निरूपयितुं अशक्यत्वात्। तज्जातीयत्वं तु विनश्यदवस्थसाधारणमिति कथं सहभावेनापि विशेषणेन तद्व्यवच्छेदः॥ नापि पंचमः। सहकारिनिर्वचने आत्माश्रयप्रसंगात्॥ सहकारिपदेन तदन्यविवक्षायां विरहपदेन च संसर्गाभावविवक्षायां तदितरसंसर्गाभावप्रयुक्तकार्याभावत्वमित्यर्थः स्यात्॥ तत्र किं प्रयुक्तत्वं तज्जन्यत्वं तद्व्याप्यत्वं तद्व्यापकत्वं वा॥ एवं कार्याभावोपि प्रागभावो वाऽत्यंताभावो वा प्रध्वंसो वा॥ संसर्गाभावत्वेन रूपेण त्रितयमपि वा॥ न तावदाद्यः।

सत्यन्तं न जातीयत्वान्तस्य विशेषणं। सहभावस्येत्यादिवक्ष्यमाणदोषतुल्यत्वापत्तेः। किन्तु वर्त्यन्तस्य तच्च जातीयत्वस्येति ध्येयम्। सहकारित्वेति। सहकारिपदपर्यालोचनयेत्यर्थः। समुच्चित्यकारित्वस्यैव सहकारिपदार्थत्वादिति भावः। ननु सहकारिपदमत्र वस्तुनो लक्ष्यकारणताकभिन्नलक्षकमत आह। सहकारिपदेनेति।

ननु तथापि तंत्वादौ पटाद्यन्योन्याभावस्य तुर्याद्यन्योन्याभावाप्रयुक्तत्वादव्याप्तिरित्यत आह। विरहपदेनेति। तदितरेति। लक्ष्यकारणताकेतरेत्यर्थः। संसर्गाभावत्वेनेति। अन्योन्याभावे जन्यत्वाद्यसंभवादिति

प्रागभावात्यन्ताभावयोरजन्यत्वात् । ध्वंसस्यापि दंडविरहाजन्यत्वात् । संसर्गाभावत्वेन त्रितयसाधारणेप्येतदेव दूषणं । नापि द्वितीयः । यावत्तदितरसमवहितेऽपि तत्र(१) शिलाशकलादौ विकल्पितकार्याभावस्य दर्शनात् । सहकारिविरहव्यतिरेकेपि कार्याभावसंभवादव्याप्यत्वात् । नापि तृतीयः । प्रागभावस्य तदितरविरहव्याप-

भावः । आद्य इति । लक्ष्यकारणताकेतरसंसर्गाभावजन्यकार्यप्रागभावाद्यन्यतरवत्त्वपक्ष इत्यर्थः । प्रागभावेति । तथाच तयोर्जन्यत्वविशेषणाप्रसिद्ध्या विशिष्टलक्षणासम्भव इति भावः । दंडविरहेति ॥ दण्डपदन्तदितरकारणतालक्षणाभिप्रायम् । आश्रयनाशादिजन्यत्वात्तस्येति भावः । एतदेवेति । प्रागभावात्यन्ताभावयोरजन्यत्वात् ध्वंसस्य दंडविरहाजन्यत्वादित्येवेत्यर्थः । द्वितीयः । लक्ष्यकारणताकेतरसंसर्गाभावव्याप्यकार्यप्रागभावाद्यन्यतमवत्पक्ष इत्यर्थः । यावत्तदितरेति । इदं च व्यापकत्वाभिमतबीजेतरसंसर्गाभावविरहोपदर्शनाय । शिलाशकलादावित्यादिपदेनाङ्कुरसमवायिकारणपरिग्रहः । विकल्पितेति । शिलाशकलेत्यन्ताभावस्य समवायिनि प्रागभावध्वंसाभावयोः त्रिष्वपि संसर्गाभावस्य दर्शनान्न व्याप्यत्वमित्यर्थः । तृतीय इति । लक्ष्यकारणताकेतरसंसर्गाभाव-

(१) तत्र तत्रेति पा० २ पु० ।

कत्वाभावात्। तदितरविरहिणि क्वचित् शिलाशकलादौ प्रागभावाभावात्। एवमत्यंताभावोपि न तदितरविरहव्यापकः। तदितरविरहिणि अङ्कुरप्रागभाववति तदत्यन्ताभावाभावात्। एवंभूतात्यंताभावस्य शिलाशकलादावपि विद्यमानत्वेनातिव्याकत्वाच्च(१)। एवं प्रध्वंसेपि। संसर्गाभावविवक्षायामत्यन्ताभावमादाय शिलाशकलादावतिप्रसक्तिस्तदवस्थैव। न चैतदनुरोधेनान्योन्याभाववि-

व्यापककार्यप्रागभावान्यतमवत्वपक्ष इत्यर्थः। व्यापकत्वाभावं स्पष्टयति। तदितरेति। तस्य प्रतियोग्यधिकरणमात्रवृत्तित्वादिति भावः। आदिपदेन कार्यकालपरिग्रहः। तेन कालतोपि व्यापकता निरस्ता। तदितरप्रागभावव्यापकप्रागभावप्रतियोगिकार्यकत्वं विवक्षितमिति चेत्। अनुत्पादयिष्यमाणकार्यकारणप्रागभावे व्यभिचारात्। एवमिति। तस्य प्रतियोगिप्रागभाववैयधिकरण्यनियमादिति भावः। ननु कार्यात्यन्ताभावो नामोत्पत्त्यवच्छिन्नकार्यात्यन्ताभावो विवक्षितः। स च तत्रास्त्येवेति कथमव्यापक इत्यत आह। एवंभूतेति। उत्पत्त्यवच्छिन्नकार्यप्रतियोगिकस्येत्यर्थः। उक्तां प्रागभावस्य तदितरविरहाव्यापकतां ध्वंसेप्यतिदिशति। एवं ध्वंसोपीति। अस्यापि प्रतियोगिप्रागभावदेशमात्रदेशकत्वादिति भावः। अन्त्यमर्थंत एवानूद्य दूषयति।

(२) विद्यमानत्वेनातिव्यापकत्वेनातिव्यापकत्वाच्चेति पा० २ पु०।

शेष एव कारणत्वमिति कल्पनीयम्। क्लृप्तप्रतियोगिकान्योन्याभावस्य तत्त्वायोगात्। अतिरिक्तान्योन्याभावस्य कल्पने(१) तत्प्रतियोगिनोऽप्यतिरिक्तस्य कल्पनापातात् शक्तेर्नामान्तरकरणप्रसङ्गाच्चेति(२) ॥

अत्रोच्यते । कार्यनियतपूर्ववृत्तिजातीय-

न चैतदनुरोधेनेति । पूर्वोद्भावितदोषानुरोधेनेत्यर्थः । सामान्यस्यातिप्रसक्तत्वादाह विशेष इति । अशक्तप्रतियोगिकेत्यर्थः । अशक्तपदेनाकारणमुच्यते मीमांसकसिद्धशक्तिरहितं वा नाद्य इत्याह । क्लृप्तप्रतियोगिकेति । अकारणान्योन्याभावस्य कारणत्वज्ञानाधीनज्ञानत्वेनात्माश्रयादित्यर्थः । न द्वितीय इत्याहातिरिक्तेति । न हि शक्त्यनङ्गीकारवादिमतेऽशक्तं नाम किंचिदस्ति यत्कारणत्वभूतान्योन्याभावप्रतियोगि स्यादिति भावः । यदि च प्रतियोगिप्रसिद्ध्यनुरोधेन शक्तिरङ्गीक्रियते कृतं वक्रकल्पनया स्पष्टं शक्तिः कारणतेत्येवोच्यतामित्याह । शक्तेर्नामान्तरेति । सा च दूष्यैवेति हृदयम् ॥

सिद्धान्ताभिधानं प्रतिजानीते । अत्रोच्यत इति । द्वितीयपक्षमुपादत्ते कार्येति । पूर्वत्वस्यावधिनिरूप्यतया

(१) अन्योन्याभावविषयकल्पन इति पा० १ पु० ।

(२) नामान्तरकल्पनापातादिति पा० १ पु० ।

चिदपि प्रति कारणं। विशिष्य तु (१) अनन्यथासिद्धेतरपूर्ववृत्तित्वानुपजीविघटपूर्वत्वनिरूपितनियतसमवधानप्रतियोगिजातीयत्वं तत्। अ-

तीयत्वेन कारणत्वमित्तीति चेत् न जन्यगुणत्वावच्छिन्नकार्यतानिरूपितपूर्ववर्त्तितावच्छेदकद्रव्यत्वपुरस्कारेण कार्यमात्रे कारणत्वशङ्कायामेतदभिधानात्। द्वितीयं निरस्यति विशिष्य त्विति। अनन्यथासिद्धेत्यादि। वक्ष्यमाणान्यथासिद्धिशून्यम् इतरापेक्षया पूर्वत्वस्यानुपजीवितज्ज्ञानानधीनज्ञानमिति यावत्। एवंभूतं यद्घटपूर्वत्वनिरूपितं घटप्रागभावावच्छिन्नसमयपरिचायितं नियतसमवधानं तत्प्रतियोगितावच्छेदकधर्मवत्त्वमित्यक्षरार्थः। अत्र घटपूर्वत्वेत्यादिमात्रोक्तौ दण्डरूपदण्डत्वादावतिव्याप्तिस्तदर्थमनन्यथासिद्धेति। न चेतरपूर्वत्वानुपजीविपदेनैव तन्निरासः। न हि दण्डत्वदण्डरूपयोरितरापेक्षया पूर्वत्वं ज्ञात्वैव घटपूर्वत्वं ज्ञायत इति। आकाशादिव्यावृत्त्यै इतरपूर्वत्वानुपजीवीति। तस्य च शब्दं प्रति पूर्ववर्त्तित्वं ज्ञात्वैव घटादीन्प्रति पूर्ववर्त्तित्वं ज्ञायते शब्दसमवायिकारणत्वस्यैवाकाशपदार्थत्वात् इति भवति ततस्तद्व्यावृत्तिः। न चानन्यथासिद्धिपदादेव तन्निरासः। न हि दण्डकुम्भकारादीनामिव शब्दस्य घटान्वयव्यतिरेकौ स्तः येन तदुपजीविघटान्वयव्यतिरेकप्रतियोगित्वेन अन्यथासिद्ध्या

(१) विशिष्टन्तु इति पा० १ पु०।

निरासः स्यात् । नन्वेवं क्षित्यादिपूर्वत्वं गृहीत्वैव घटादिपूर्वतया गृह्यमाण ईश्वरो न घटादिहेतुः स्यात् शब्दबुद्ध्यादिसमवायिकारणतयैव सिद्धानामाकाशात्मकालादीनां संयोगादावप्यकारणतापत्तिश्चेति चेत् । न किमीश्वरत्वादिना अन्यथा(१) रूपान्तरेणापि । नाद्यः । ईश्वरत्वाकाशत्वादिना तत्र तत्र तेषां कारणत्वानङ्गीकारादिष्टापत्तेः । न द्वितीयः । कर्तृत्वेन कार्यमात्रे द्रव्यत्वेन च जन्यगुणत्वावच्छिन्ने कारणतायां क्षित्यादिशब्दादिपूर्वत्वानुपजीवित्वात् । अत एवाधिकरणकारकतयैव कालदिशोर्जगद्धेतुत्वमिति सिद्धान्तः । घटान्यूनानतिरिक्तकालीनवस्तुव्यावृत्त्यै घटपूर्वत्वेति । घटजातीये नियतस्य रासभादेर्व्यावृत्त्यै नियतेति । शब्दादिकारणस्याकाशादेरवृत्तितया नियतत्वाभावात् तत्राव्याप्तिः तथानादौ संसारे रासभजातीयस्य घटजातीयनियतपूर्वकालवृत्तित्वेन तत्रातिव्याप्तिश्चेत्यतः समवधानप्रतियोगीति। वनस्थदण्डादिसंग्रहाय जातीयत्वमिति । यद्यत्तद्वृत्तिजातीयत्वमात्रं सत्तादिकमादायातिप्रसङ्गि प्रतिबन्धकाभावादावप्रसङ्गि च तथापि तत्प्रतियोगितावच्छेदकधर्मवत्त्वं तदर्थ इति नोक्तदोषौ । ननु दुःखप्रागभावसाधने प्रायश्चित्तादावव्यापकमिदं प्रागभावपूर्वत्वाप्रसिद्धेरिति चेत् न । साध्यतावच्छेदकरूपाक्रान्ताधिकरणकालोपाधित्वावच्छिन्नपूर्वत्वस्य विवक्षि-

(१) अथेति पा० २ पु० ।

नन्यथासिद्धत्वं च यत्कार्यं प्रति यस्य नियतान्वयव्यतिरेको तदुपजीवनेन यस्यान्वयव्यतिरेकौ तदवच्छिन्ना(१)न्वयव्यतिरेकप्रतियोगित्वं। प्राग-

णताग्रहाधीनत्वात् । न ह्याकाशादेः कारणत्वं केनाप्यवच्छिद्यत इति चोपपादितं दूषणमनुवर्तत एव। किञ्च जन्यसाक्षात्कारत्वावच्छिन्ने कथमिन्द्रियाणां कारणत्वं संयोगादिप्रत्यासत्तीनामेकजातीयत्वाभावेन तद्गर्भपूर्वाक्षसमवधानानुपपत्तेरिति चिंत्यम्। कारणत्वं स्वरूपसंबंधविशेषः प्रतियोगित्वविषयित्ववत् । इदं च तदुपलक्षकमेव । अत एवानेकलक्षणककारणताज्ञानभेदेन प्रवृत्त्यननुगमोपि निरस्तः । एतदुपलक्षितस्य दण्डाद्घटो जायत इत्यादिप्रतीतिविशेषप्रवृत्त्यादिसाक्षिकस्य स्वरूपसम्बन्धविशेषस्यैव प्रवृत्तिहेतुज्ञाने विषयतयावच्छेदकत्वादित्यपि केचित् । नन्वनन्यथासिद्धेरशक्यनिर्वचनताया दर्शितत्वात्तद्गर्भलक्षणानुपपत्तिरित्याशंक्याह । अनन्यथासिद्धेति । यत्कार्यं घटादिकं प्रति यस्य दण्डादेरन्वयव्यतिरेकौ तदुपजीवनेन यस्य दण्डत्वादेरन्वयव्यतिरेकौ तदवच्छिन्नौ(२) यस्य दण्डादेरन्वयव्यतिरेकौ तदनन्यथासिद्धमित्यक्षरार्थः। दण्डत्वादिव्युदासाय तदुपजीवनेनेत्यादि दण्डान्वयव्यतिरेकौ च न दण्डत्वान्वयव्यतिरेकोपजीवनाविति न तदवच्छिन्नान्वयव्यतिरेकप्रतियोगिनि दण्डत्वेतिव्याप्तिः । ननु यत्कार्यं प्रति यस्य दण्डरूपस्या-

(२) तदनवच्छिन्नेति पा० २ पु० ।

(१) तदनवच्छिन्नाविति पा० ५ पु० ।

भावत्वं च गन्धानाधारसमयानाधाराभावत्वादि-

न्वयव्यतिरेकौ तदुपजीवनेन यस्य दण्डरूपत्वस्यान्वयव्य-
तिरेकौ तदवच्छिन्नान्वयव्यतिरेकप्रतियोगिदण्डरूपमन-
न्यथासिद्धं स्यादिति चेन्न स्वानुपजीव्यन्वयव्यतिरेक-
प्रतियोग्यनवच्छिन्नान्वयप्रतियोगित्वस्य विवक्षितत्वात् ।
रूपान्वयव्यतिरेकयोश्च स्वानुपजीव्यन्वयव्यतिरेकप्रति-
योगिदण्डावच्छिन्नत्वात् । विषयतन्निष्ठोद्भूतरूपयोश्च
नैकेनापरस्यान्यथासिद्धिर्द्वयोरपि स्वोपजीव्यन्वयव्यति-
रेकप्रतियोग्यपरावच्छिन्नान्वयव्यतिरेकप्रतियोगित्वात् ।
एतेन विनिगमनाविरहस्थलं सर्वं संगृहीतं भवति । ननु
यागविशेषापूर्वत्वेनापूर्वस्य स्वर्गान्वयव्यतिरेकग्रहाद्या-
गेनापूर्वान्यथासिद्धिप्रसङ्गः । न च यागो नापूर्वानुपजीव्य-
न्वयव्यतिरेकः केवलस्य तस्याशुतरविनाशित्वेन तद्व्य-
तिरेकेऽपि स्वर्गोपपत्तेः व्यतिरेकनियमभङ्गप्रसङ्गेनापूर्वरू-
पसमवधानस्यैव पुरस्करणीयत्वादिति वाच्यम् । अपूर्वस्य
यागकारणताग्रहोत्तरकल्प्यत्वेन तद्ग्रहकाले तदुपस्थिते-
रसम्भवादिति चेत् । न प्रथमान्वयव्यतिरेकयोः साक्षा-
त्वेन विशेषणादिति वदन्ति । ननु पूर्ववर्त्तित्वं प्राग-
भावावच्छिन्नसमयवृत्तित्वं प्रागभावश्च प्रतियोगिजन-
काभाव इति आत्माश्रयः । यदि च विनाश्यभावः तदा
विनाशस्य प्रागभावगर्भतयान्योन्याश्रय इत्यत आह ।
प्रागभावत्वं च गंधेति । गंधस्यानाधारः समयो महा-
प्रलयसमयस्तदवृत्तिरभावः प्रागभाव इत्यर्थः । घटा-
दिव्यवच्छेदायाभावपद । तत्राभावैकस्वभावाभावपरम्

नाभ्यां बीजाद्यग्रिमक्षणेऽङ्कुराद्युत्पादानुत्पाददर्शनेनेतरा-
समवधानस्यैव बीजादावनुत्पादव्याप्यत्वावच्छेदकत्वं ।
न त्वेवं शिलाशकलादौ सहकारिसमवहितादपि ततस्त-
दनुत्पादेन शिलाशकलत्वस्यैव तद्व्याप्यतावच्छेदकत्व-
सम्भवात् इति भावः । न च ज्ञानादीनां ज्ञानत्वादि-
नैव घटाद्यनुत्पादव्याप्यतावच्छिन्नत्वाते नाव्यभिचारित्वे-
तरविरहेणेति तत्र तेषामकारणत्वापत्तिरिति वाच्यम् ।
येन हि सम्बन्धेन यस्य यत्र कार्ये जनकत्वं तत्पुरस्का-
रेण तस्य तत्कार्याऽनुत्पादव्याप्यत्वे इतरविरहाव-
च्छिन्नत्वं विवक्षितम् । ज्ञानादीनां च विषयता-
सम्बन्धेनैव घटादौ जनकत्वं तत्पुरस्कारेण च कपा-
लादौ ज्ञाते सति कदाचित्तत्र घटोत्पादः कदा-
चिन्नेति इतरविरहस्यावच्छेदकतावश्यम्भावात् । न च
कार्योत्पादस्थलीयज्ञानसाधारण्यान्नेतरविरहोऽवच्छे-
दक इति वाच्यम् । विरहपदेनासमवधानस्यैवोक्तत्वात् ।
ननु शिलाशकलादेरपि इतरासमवहितशिलाशकलत्वा-
दिनैवाङ्कुराद्यनुत्पादव्याप्यतावच्छिन्नत्वाते न शिलाशक-
लत्वादिनैवेतरसमवहिते तस्मिन्नङ्कुराद्युत्पादादिति
तस्यापि तत्र हेतुतापत्तिरिति चेत् । न स्वासमवधाना-
वच्छिन्नकार्यानुत्पादव्याप्यताकस्यैवेतरपदेन विवक्षित-
त्वात् । बीजादेश्च कार्यानुत्पादव्याप्यतायाः शिलाश-
कलासमवधानानवच्छेद्यत्वेनेतरपदार्थत्वाभावात् । त-
समवधानेपि दृष्टान्वयव्यतिरेकधरण्याद्यसमवधानेऽङ्कु-
रानुत्पादात्। तत्समवधाने चैतदसमवहितादपि बीजादे-

त्पत्त्यवच्छिन्नप्रतियोगिकोऽत्यन्ताभावः । स चोत्प-
त्तिप्रत्यासत्तिविरोधिप्रत्यासत्तिकोऽतो नातिप्र-

---

रङ्कुरोत्पादेन धरण्याद्यसमवधानस्यैवावच्छेदकत्वसं-
भवे वैयर्थ्येन शिलाशकलासमवधानस्यानवच्छेदकत्वा-
दिति । न च वृत्तिकारणेऽव्याप्तिस्तेषां कालतो देश-
तो वा कार्यानुत्पादव्याप्यत्वासम्भवात् । सम्भवे वा तद-
समवधानाप्रसिद्ध्या स्वासमवधानावच्छिन्नकार्यानुत्पा-
दव्याप्यताकासमवधानावच्छिन्नत्वस्य कार्यानुत्पादव्या-
प्यत्वेऽसम्भवादिति चेन्न । अव्यापककारणताया एवात्र
लक्ष्यत्वादिति वदन्ति । न च कार्योत्पाददशायामनुत्पा-
दव्याप्यत्वाभावादव्याप्तिः । तज्जातीयत्वस्यैव लक्षण-
त्वात् । ननु दण्डादेर्नेतरासमवधानावच्छेद्यकार्यानुत्पा-
दव्याप्यत्वं घटोत्पत्त्यनन्तरमितरासमवहितदण्डत्वेऽप्यनु-
त्पादपदाभिधेयप्रागभावाभावात् इत्यव्याप्तिरित्याशं-
क्याहानुत्पादश्चेति । तथाचोत्तरकालेपि उत्पत्त्यवच्छिन्न-
कार्यात्यन्ताभावसत्त्वाद्व्याप्यत्वमक्षतमिति भावः । नन्वेवं
सुतरामव्याप्तिः । अत्यन्ताभावस्य नित्यत्वेन प्रागिव
कार्योत्पत्तिकालेपि तत्र सत्त्वावश्यम्भावाद्यत्र दण्डस्तत्र
घटानुत्पाद इत्येव व्याप्तेः सम्भवेनेतरेतरासमवधानस्य
तदनवच्छेदकत्वादत आह । स चेति । उत्पत्तिकालेन स-
मं कार्यस्य या प्रत्यासत्तिः स्वरूपसम्बन्धविशेषरूपा त-
दधिकरणभिन्नाधिकरणप्रत्यासत्तिक इत्यर्थः । नित्य-
त्वेन सदातनत्वेपि कार्योत्पत्तिदेशे सदा सत्त्वे मानाभा-
वात् । उत्पत्तिस्थले दण्डमात्रस्योत्पत्त्यवच्छिन्नकार्यात्य-

सङ्गः। एवं सहकारिविरहप्रयुक्तत्वादिदूषणा(४)गणानवकाशः॥

इति कारणतावादः।

---

न्ताभावव्याप्यताभङ्गादितरासमवधानस्य तदवच्छेदकतावश्यंभावान्नातिव्याप्तिरिति भावः। अतिप्रसङ्गः कार्योत्पत्तिकालेऽनुत्पादप्रसंग इत्यर्थः॥

इति सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीपरागपिञ्जरितचरणकमलप्रतापराजोद्योजितशेषानन्तविरचितसिद्धान्तप्रदीपप्रभायां कारणताप्रकरणम्॥

---

(४) प्रयुक्तत्वादिप्रयुक्तदूषणेति पा० १ पु०।



गवादिपदानां जातावेव शक्तिरिति तौतातिताः। व्यक्त्याकृतिषु जातिषु शक्तिरिति गौतममततत्त्ववेदिनः। तत्रैवं विप्रतिपत्तिजः संशयः। गवादिपदनिरूपितशक्यत्वं जातिमात्रवृत्ति न वा। जातिवाचकपदशक्यत्वं जातिव्यतिरि-

अभिधाविचारानुकूलसंशयजननीं विप्रतिपत्तिमाह। गवादिपदानामिति। गवादिपदं जातिमात्रजातिवाचकं न वेति न संशयः कोट्यप्रसिद्धेरिति अन्यथा संशयमाह। गवादिपदेति। विधिनिषेधकोटिप्रसिद्धिर्जातित्वघटादौ आदिपदेन समूहालम्बनप्रत्येकधर्म्मिताभिधानेनैव पुरुषायुषपर्यवसानप्रसङ्ग इत्यनुगतधर्मिकं संशयान्तरमाह। जातिवाचकपदशक्यत्वमिति। पूर्वव्यत्ययेन विधिनिषेधकोटिप्रसिद्धिः। ननु जातिवाचकत्वं किं यथाश्रुतमेवोत जातिप्रवृत्तिनिमित्तकत्वं। नाद्यः। जात्यादिपदशक्यत्वांशे सिद्धसाधनात्। तस्या नित्यानेकसमवेतत्वादितत्प्रवृत्तिनिमित्तवृत्तित्वात्। न द्वितीयः। जातिमात्रशक्तिपक्षे व्यक्तेरशक्यतया शक्यवृत्तित्वगर्भस्य प्रवृत्तिनिमित्तत्वस्य गवादिपदशक्यजातावभावेन जातिप्रवृत्तिनिमित्तकत्वासिद्धेः। किञ्च वृत्तिर्न समवायः अनभ्युपगमात्। न सम्बन्धमात्रं कालादिसम्बन्धितया बाधसिद्धसाधनप्रसङ्गादिति चेत्। न उभयवादिसम्प्रतिपन्नजातिवाचकपदशक्तिर्जात्यतिरिक्तविषया न वेति विवक्षितत्वात्। जात्यादिपदानां गवादिपदतुल्यन्यायतया नित्यानेकसमवेतत्वादिवा-

क्तवृत्ति न वा । अभिधेयत्वं नित्यमात्रवृत्ति न वेत्यपि कश्चित् । तत्र तौतातितानामयमाशयः । वाक्यार्थप्रतिपत्त्यनुकूलपदार्थस्मरणजनकपदपदार्थयोस्सम्बन्धस्तावत् वाचकत्वं नाम सकलवादिप्रसिद्धं। तत्सङ्केतो वा पदार्थान्तरं वेत्यन्यदेतत् ॥ स च सम्बन्धः कुत्र कल्प्यतां जातिमात्रे वा जातिव्यक्त्योर्वेति विमर्शेपि जायमाने जाता-

---

चकताया एव पराभ्युपेतत्वात् । अभिधेयत्वमिति । जातिमात्रशक्यतापक्षे विशेष्यान्तरानभिधानेन जातेरप्रकारतया गवादिपदाभिधाया नित्यप्रकारमात्रवृत्तित्वे बाधक इत्यरुचिं कश्चिदित्यनेनासूचयत् । शक्तयसिद्ध्या तद्धर्मिकवक्ष्यमाणविमर्शानुपपत्तिं परिहरिष्यन्नुपोद्घातेन प्रमाणमाह । वाक्यार्थप्रतिपत्तीति । शक्त्याकारेण सकलवाद्यप्रसिद्धेराह । वाचकत्वं नामेति । सिध्यतूद्बोधकान्तराहेतुकस्मरणहेतुत्वात्सम्बन्धमात्रं हस्तिहस्तिपकादिवद्वाचकत्वं तु कुत इत्यत आह । वाक्यार्थेत्यादि । घटपदाश्रयतया स्मृतस्य गगनादेर्घटमानयेत्यादौ कर्मत्वान्वयप्रतिपत्त्यदर्शनान्न सम्बन्धमात्रं किन्तु सम्बन्धविशेषः कल्प्यते सैव शक्तिरिति नासिद्धिरिति भावः । एवमपि सा यदि पदार्थान्तरं तदा न्यायनयेऽसिद्धिः अथेश्वरेच्छा ततो भट्टनय इत्यत आह । तत्संकेत इति । संकेतत्वादेधर्मितानवच्छेदकत्वात्तेन रूपेण तद्व्यवस्थापनमिदानीमनुपयुक्तमिति भावः । आकृतेरसार्वत्रिकत्वेनाह । जातिव्यक्त्योर्वेति । विशि-

वेव तत्कल्पना ज्यायसी नागृहीतविशेषणान्या येन न तु व्यक्तौ अनन्ताभिर्व्यक्तिभिः(१) सह संबन्धग्रहणस्याशक्यत्वात् । सामान्यलक्षणायाः प्रत्यासत्तेः प्रमाणाभावेनानङ्गीकारात्। तथात्वे वा

ष्ट्योरिति शेषः। अत एवाह नागृहीतेति । न खलु केवला व्यक्तिः शक्या गोपदाद्व्यक्तिमात्रबुद्धिप्रसङ्गात् । नापि जात्युपलक्षिता जात्यन्योपलक्ष्यतावच्छेदकरूपेण व्यक्तेरप्रतीतेः। किन्तु विशिष्टा। तथाच संकेतकग्राहकप्रमाणापेक्षितविशिष्टोपस्थितेर्विशेषणीभूतजातिज्ञानपूर्वकतया प्रथमोपस्थिता लाघवेन सैव शक्येत्यर्थः। न तु व्यक्ताविति। केवलायां विशिष्टायां चेति शेषः। सा हि न तावदेका काचिच्छक्या गां दद्यादित्यादावनध्यवसायप्रसङ्गात्। सर्वापि न सर्वत्वेन तत्रैवाननुष्ठानप्रसङ्गात्। अपि तु प्रत्येकरूपेणेति वाच्यं तत्राह। अनन्ताभिरिति। केवलाभिरिव विशेष्यभेदादनन्ताभिर्विशिष्टाभिरपि व्यक्तिभिर्देशकालविप्रकृष्टाभिः प्रत्येकमसर्वज्ञेन दुर्विज्ञानतयानुपस्थिताभिः संकेतस्य ग्रहीतुमशक्यत्वादिति भावः। ननु न ब्रूमः प्रत्येकमुपस्थितास्विति येनानंत्यबाधकमाशंक्येत किन्तु सामान्येनोपस्थितासु प्रत्येकं सङ्केतग्रह इति तत्राह। सामान्यलक्षणेति। शक्त्यनुभवपदार्थस्मरणवाक्यार्थानुभवानां ज्ञानेच्छाकृतीनां वा व्याप्तिपक्षधर्मताज्ञानयोर्वा समानप्रकारकत्वेन कार्यकारणभावाभ्युपगमेनैवा-

(१) व्यक्तिभिरिति पा० १ पु० नास्ति ।

व्यक्तेरन्यथा लाभसम्भवेन तत्र शक्तिकल्पनस्य गौरवपराहतत्वात्। तदिदमुक्तम्।

विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे इति। व्यक्तेः कथं लाभ इति चेत्। न आक्षेपात्। ननु व्यक्तिं विना किमनुपपन्नं। न ताव-

तिप्रसङ्गवारणात् न समानविषयकत्वनिर्वाहकतया तत्सिद्धिरिति भावः। अनुकूलतर्कानवतारदशायां धूमो वन्हिव्यभिचारी नवेति संशय एव तत्र प्रमाणमित्यत आह। तथात्वे वेति। अन्यथेति। आक्षेपादिनेत्यर्थः। ननूपायस्यानुपायतादोषः न तूपायान्तरसत्त्वमित्यत आह। गौरवेति। अन्यथा लक्षणोच्छेदापत्तेरिति भावः। अत्रैवाभियुक्तसंमतिमाह। तदिदमिति। विशेषणे जातौ क्षीणशक्तिस्तामभिधाय पर्यवसितेत्यर्थः। अन्यथा लाभसम्भवेनेत्युक्तमाक्षिपति। व्यक्तेः कथं लाभ इति। पृष्टं मत्वोत्तरमाहाक्षेपादिति। आक्षेप्ता स्वाशयमुद्घाटयति। ननु व्यक्तिं विनेति। न ह्यव्याप्यस्याव्यापकेन विनाऽनुपपत्तिः। न वानयोर्व्याप्तिर्देशतो गव्येव कालतश्च महाप्रलये व्यभिचारादित्याह। व्यक्तिं विनापीति। जातेर्नित्यत्वादिति भावः॥ न च तज्ज्ञप्तेरनुपपत्तिः। आक्षेपवादिना केवलजातिप्रतीतेरवश्यवाच्यत्वादन्यथाक्षेपानुपपत्तेरिति। या जातिः सा व्यक्तिवृत्तिरित्यत्र न व्यभिचारः। प्रलयकालीनाया

त्जातिः । व्यक्तिं विना जातिस्वरूपावस्थानादिति । मैवं । जातेर्हि(१) व्यक्तिवृत्तिता नियतेति कथमाक्षेपानुपपत्तिः । न च जातिव्यक्त्योर्युगपत्प्रतीतिदर्शनादाक्षेप्याक्षेपकभावानुपपत्तिरिति वाच्यम् । गौरवप्रसङ्गबाधकबलेन युगपत्प्रतीतेर्भ्रान्तत्वकल्पनस्योचितत्वात् । न च जातिभानसामग्री व्यक्तिभानसामग्री(२)नियतेति तदेव

अपि जातेः प्राग्व्यक्तिवृत्तित्वादित्याक्षेपोपपत्तिमाह जातेर्हीति । अन्येतु महाप्रलयानङ्गीकाराभिप्रायमेतत् । नचैवमपि चैत्रत्वादिजातौ कालतो व्यभिचारः भाट्टैस्तज्जात्यनङ्गीकारादित्याहुः । ननु जातिव्यक्त्योर्युगपत्प्रतीयमानत्वात्कथमाक्षेप इत्यत आह । न चेति । गौरवेति । व्यक्तिशक्तिकल्पनालक्षणगौरवप्रसङ्गेनेत्यर्थः । ननु यत्र पदाज्जातिभानसामग्री तत्र तद्व्यक्तिभानसामग्रीति जातिसाक्षात्कारे नियमावधारणात् एकदा ज्ञानद्वयानुपपत्तेश्च समूहालम्बनन्यायेनोभयज्ञानमेकमेवोत्पद्यत इति क्व क्रमकल्पना भेदगर्भेत्याशंक्य निराचष्टे । जातिभानेति । योग्यव्यक्तिगर्भजातीन्द्रियसन्निकर्षजन्ये जातिसाक्षात्कारे व्यक्तिसाक्षात्कारसामग्रीनियमस्यार्थसमाजसिद्धावपि लाघवनियंत्रितशक्त्युद्बोधितसंस्कारपरा-

(१) जातिर्हीति पा० १ पु० ।

(२) ज्ञानसामग्रीति उभयत्र पा० २ पु० ।

व्यक्तेर्भान(१)नियमात्कथमाक्षेप इति वाच्यं। जातिसाक्षात्कारे ह्ययं नियमो न तु तत्स्मरणेपि । ननु जातिमात्रज्ञानाद्व्यक्तिमात्रमाक्षेप्तव्यं तथाच न व्यक्तिविशेषलाभः(२) । जातिविशेषप्रतिसन्धानाद्व्यक्तिविशेषाक्षेप इति यद्यभिमतं तदा जातौ विशेषो व्यक्तिरेव। तस्याश्च भानं जातिज्ञाने वृत्तमेवेति किं केनाक्षेप्तव्यमिति। मैवं। किंचिद्धि वस्तु स्वत एव विलक्षणमिति न्यायेन जातेः स्वत एव विलक्षणत्वात् । अन्यथाऽन्योन्याश्र-

धीनायां स्मृतौ नायं नियम इत्याह । जातिसाक्षात्कारे हीति । आक्षेपकं जातिमात्रज्ञानं जातिविशेषज्ञानं वेति विकल्प्याद्ये दोषमाह । तथाचेति । द्वितीयमनुवदति जातिविशेषेति । दूषयति । तदेति । गवेतरावृत्तित्वेति । गोवृत्तित्वादेरपि व्यक्तिगर्भतया विवक्षितविवेकै व्यक्तिरेव व्यावर्तिकेत्याक्षेपज्ञानकाले आक्षेप्यं ज्ञातमेवेत्याक्षेपानुपपत्तिरित्यर्थः। अंत्यविशेषेषु भवद्भिरिव जातावस्माभिस्तुल्यन्यायतया स्वतोव्यावृत्तत्वाङ्गीकारान्न व्यक्त्यपेक्षेति समाधत्ते मैवमित्यादिना । तदेव विपक्षबाधकेन दृढयति । अन्यथेति। व्यावर्त्तकान्तरापेक्षायां परस्परव्यावर्त्तितयोर्व्यावर्त्तकत्वेऽन्योन्याश्रयाद्व्यावर्तकपरम्परानुसरणेऽनवस्थेति

(१) ज्ञानेति पा० २ पु०।

(२) कथमित्यधिकः पा० २ पु० ।

यावस्थानप्रसङ्गात्(१)। व्यक्तेः प्राधान्यानुभवाल्ल-
क्षणा व्यक्तौ आक्षेपे तु उपसर्जनता स्यादिति
भाट्टैकदेशिनः । तदाहुः ।

जातावस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति ।
नित्यत्वाल्लक्षणीयायास्ते हि व्यक्तेर्विशेषणे इति ॥

भावः । मंडनमत माह । व्यक्तेरिति । गौर्गच्छति
गामानयेत्यादौ न हि व्यक्तिगतं गोत्वमित्यनुभवोऽपि
तु गोत्ववती व्यक्तिरित्याक्षेपे तु गोत्वं व्यक्त्या-
श्रितमिति धीः स्यान्न तु प्रवर्त्तकशब्दोत्पिपादयिषता
यथा च पूर्वं तथा च गवि प्रवृत्त्यनुपपत्तिः ।
जात्युपसर्जनतया प्रतीयमानाया व्यक्तेरन्यान्वये निरा-
कांक्षत्वाद्राजपुरुषमानयेत्यत्र राज्ञ इव कर्मत्वाद्य-
न्वयानुपपत्तिश्चेति भावः । अत्रैवाभियुक्तसम्मतिमाह ।
तदाहुरिति । अविवक्षायां हेतुर्नित्यत्वादिति ।
व्यभिचाराभावाद्बाधाच्चेति भावः । व्यक्तेस्ते हीति ।
ते नित्यत्वानित्यत्वे व्यक्तेर्विशेषणे अनित्यत्वादिति
भावः । गामानयेत्यादिस्थले विभक्त्युपनीतकर्मत्वा-
देर्व्यक्त्यन्वयानुपपत्त्या कल्पितां जरत्प्राभाकराणां
अर्द्धजरतीमुपन्यस्यति । विशिष्टेति ॥ शक्तिर्हि
शक्यकार्यापेक्षा कार्यं चात्र विशिष्टज्ञानमेकमेवेत्येकैव
सा तस्याश्च विशिष्टगोचरता विशिष्टज्ञानविषयतयै-
वेति भावः । सिद्धान्तप्रवादविरोधं परिहरति ।

(१) अनवस्थाप्रसङ्गादिति पा० १ पु० ।

विशिष्टगोचरा एकैव शक्तिः किन्तु जाति-निष्ठतया ज्ञातोपयुज्यते । व्यक्तौ तु सा स्वरूपसती । समानसंवित्संवेद्यतया च व्यक्तेरपि भानमिति गुरुमततत्त्ववेदिनः । व्यक्तेरन्वयप्रकारतया भानमिति गुरुमतैकदेशिनः । अनुमानं

किंत्विति । स्वरूपसतीति । अन्यथा गौरवादिति भावः । कथं तर्हि व्यक्तेर्लाभ इत्यत आह । समानेति । अयमाशयः । यद्विषयत्वेन शक्तिज्ञानं पदसहकारि तदेव तत्पदशक्यमन्यथा पदजन्यज्ञानविषयत्वादन्वयस्यापि शक्यतापत्तेर्लक्षणोच्छेदापत्तेश्च । न चेह जातिशक्तत्वेन पदज्ञाने सति व्यक्तिशक्तिज्ञानविलम्बाद्व्यक्तिज्ञानविलम्बो येन तद्विषयत्वेनापि शक्तिज्ञानं सहकारि कल्प्येत । न च व्यक्तिशक्तिज्ञानेपीतरशक्तिज्ञानविलम्बेन जातिज्ञानविलम्बादर्शनादविनिगमः जातिज्ञापकसामग्र्या व्यक्तिबोधाविनाभूतत्वेनैकत एवोभयज्ञानोपपत्तेर्लाघवाद्व्यक्तिज्ञापकसामग्र्या जातिबोधकत्वं क्लृप्तमिति तदर्थं सामग्रीद्वयकल्पनागौरवात् । एवं च जातिज्ञापकतया सहकारिकल्पितं जातिशक्तिज्ञानं यदि व्यक्तिं न बोधयेत्समानसंवित्संवेद्यां जातिमपि न बोधयेदिति वृथैव तत्कल्पना स्यादतो धर्मिग्राहकमानसिद्धं जातिशक्तिज्ञानस्य व्यक्तिबोधकत्वमिति गुर्वेकदेशिमतमाह । व्यक्तेरिति । केवलजातेरानयनाद्यन्वयायोग्य-

त्वत्र गोव्यक्त्याकृती न गोशब्दवाच्ये गोत्वभिन्नत्वात् पटवदिति ॥

अत्रोच्यते ॥ गामानयेति वाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य गवानयने प्रवृत्तिर्दृश्यते तावत् । सा च गवानयनज्ञानसाध्या । तच्च

तया तद्योग्यताघटकत्वेन घटपदे छिद्रेतरत्ववद्व्यक्तिः प्रतीयत इत्यर्थः । पूर्वोक्तलाघवादितर्कोपकार्यमनुमानमाह । गोव्यक्त्याकृतीति । महिष्यादिव्यक्त्याकृत्यंशे सिद्धसाधनभयादाद्यङ्गोपदं । व्यक्त्याकृतिपदवाच्यतया बाधकवारणाय द्वितीयम् । गोत्वभिन्नत्वादीति । गोपदप्रवृत्तिनिमित्तभिन्नत्वादित्यर्थः ॥ पशुविशेषवृत्तिजातिविशेषान्यत्वे तु जलत्वादौ व्यभिचारप्रसङ्गादिति द्रष्टव्यम् ।

सिद्धान्ताभिधानं प्रतिजानीते । अत्रोच्यत इति । प्रवृत्तिपरवाक्यश्रवणानन्तरोपजायमानव्यक्तिप्रवृत्त्यनुरोध्यतद्बोधाधीनकल्पना शक्तिः समानविषयतालाघवेन व्यक्तौ कल्प्यते जातिधीस्त्वन्यथैव वन्ह्यनुमापकसामग्रीमहिम्नैव वन्हिप्रतीतिरिति युक्तं तत्र कः प्रसंगो जातौ शक्तिकल्पनस्य अथान्यथाभवतो जातिज्ञानस्य शाब्दज्ञानस्य निर्विकल्पकतापत्त्या जातौ शक्तिकल्पनमस्तु तर्हि तत्रापि न तु प्रथमप्रतीतव्यक्तिशक्तित्याग इत्याशयेनाह । गामानयेत्या-

ज्ञानं गामानयेति वाक्यजन्यं वाक्यजे ज्ञाने पदोपस्थापित एवाऽर्थोऽन्वयप्रतियोगितया भासत इति व्यवस्थापितं योगरूढस्थले । तथाच गोपदात् गोव्यक्तेरनुपस्थितौ कथमन्वयप्रत्ययः । आक्षेपोपस्थितस्य वाक्यज(१)प्रत्ययान्वयप्रतियोगित्वाभावात् । अन्यथा घटमानयेति वाक्यं रूप-

दिना । पदोपस्थापित इति । वृत्त्येति शेषः । अन्यथा घटपदोपस्थापिते कुलालादौ व्यभिचारात् । व्यवस्थापितमिति । आशंसायां भूतवच्चेति क्तः । वस्तुतो रूढिवादस्योर्ध्वलेखनमविदितग्रन्थकृदभिप्रेतप्रकरणानुपूर्वीकलेखकप्रमाद एव कथमन्यथात्रैवाग्रे वक्ष्यति न हि तात्पर्यज्ञानं वाक्यार्थज्ञानजनकमिति प्रतिपादितमधस्तादिति । सिद्धां व्यक्तौ शक्तिमुपसंहरति । तथाचेति गोपदादिति । वृत्त्येति शेषः । अन्यलभ्यत्वान्न व्यक्तिः शक्या गच्छ गच्छसि चेत्कान्त इत्यादावगमनवदित्यत आह । आक्षेपेति । उपलक्षणं चैतद्वृत्तीतरस्य गच्छ गच्छसि चेदित्यादावस्ति गमननिषेधयोरन्वयप्रत्ययो न त्वसौ वाक्यज इति भावः । नन्वन्वयप्रतियोगित्वे योग्यतादिमदुपस्थितिमात्रं तन्त्रं न त्वपरप्रतियोग्युपस्थापकसजातीयजन्योपस्थितिरपि गौरवादित्यत आह । अन्ययेति । आक्षिप्येति । तस्येति शेषः । आनयनान्वयप्रतियोगिनो घटस्य रूपादिव्याप्तत्वादिति भावः ।

संख्यापरिमाणपृथक्त्वादिकमाक्षिप्याऽन्वयबोधं विदध्यात् । न चैवं तथानुभवाभावात् । किञ्चाक्षेपे व्यक्तेः प्राधान्येन भानं(१) न स्यात् । न च लक्षणया तदुपस्थितिरिति वाच्यं । शक्यार्थान्वयव्यवहितव्यक्तिबुद्धे(२)रत्रासिद्धेः । किञ्च

इष्टापत्त्या तर्काभासत्वशङ्कां परिहरति । तथानुभवाभावादिति । मंडनोक्तदोषमनुवदति । किञ्चाक्षेप इति । जातिविशेषतयोपस्थितेरिति भावः । अस्तु तर्हि तन्मतमेव(३) तत्राह । न च लक्षणयेति । लक्षणास्थले हि शक्यान्वयानुपपत्तिव्यवहितशक्तिलक्षणाधीने धियौ भवतः । शक्त्यधीनधीकाले व्यक्त्युपस्थापकलक्षणानवतारात् । लाक्षणिककाले शक्त्या शक्योपस्थितौ युगपद्वृत्तिद्वयविरोधप्रसङ्गात् । लक्षणयैव विशिष्टोपस्थितौ तु व्यवधानाविघातात् । न चेह शक्यजात्युपस्थितिर्व्यक्तिं विना शक्यतावच्छेदकान्तरस्य तत्राभावात् । निरवच्छेदकतत्प्रतीतेश्चानुभवबाधितत्वात् । संबन्धितावच्छेदकाप्रकारत्वेन लक्ष्यास्मारकत्वप्रसंगाच्च । न वा लाक्षणिकव्यक्तिप्रतीतिः । शक्यजातिं विना व्यक्तौ लक्ष्यतावच्छेदकान्तराप्रतीतेः । गोपदाद्गोत्वविशिष्टप्रतीतेश्चेति भावः । अपि च किमिह व्यक्तिलक्षणायां बीजमभिमतमायुष्मतः अन्वयानुपपत्तिर्वा

(१) ज्ञानमिति पा० २ पु० ।

(२) वाक्यार्थेव्यवहितव्यक्तिबुद्धेरिति पा० १ पु० ।

(३) मन्मतमेवेति पा० २ पु० ।

यत्र जात्यन्वयानुपपत्तिर्नास्ति गां पश्य घटं पश्येत्यादौ तत्र कथं व्यक्तिलाभः । लक्षणाया अभावात् । व्यक्तितात्पर्यव्यतिरेकेणापि व्यक्तेरन्वयबोधदर्शनाच्च । न हि तात्पर्यज्ञानं वाक्यार्थप्रतिपत्तिजनकमिति प्रतिपादितमधस्तात् । न हि जातिप्रत्ययानन्तरमत्र व्यक्तिप्रतीतिः । किन्तु युगपदेव । न च गौरवभयेन भ्रमकल्पनम् ।

---

तात्पर्यानुपपत्तिर्वा । नाद्य इत्याह । यत्र जात्यन्वयेति । न द्वितीय इत्याह । व्यक्तितात्पर्य्येति । ननु प्रवृत्तिनिवृत्त्यन्यतरपरवाक्यस्य तद्विषयव्यक्तौ तात्पर्यमौत्सर्गिकमिति तद्विरहोऽसिद्ध इत्यत आह । न हि तात्पर्यज्ञानमिति । अस्तु वस्तुतो वक्तुर्व्यक्तौ तात्पर्यं न तु मुख्यार्थताबाधाद्यप्रतिसन्धाने श्रोतुस्तद्ज्ञानं । न च तदज्ञाने व्यक्त्यन्वयस्याप्यज्ञानं शुकादिवाक्ये व्यभिचारेण तस्य वाक्यार्थबाधानङ्गत्वादिति भावः । अधस्तादिति योगरूढिवादस्य पूर्वलेख्यताभिप्रायेण । प्रतीतिभेदाभावादपि न जातिव्यक्त्योः शक्तिलक्षणाव्यवस्थेत्यत आह । न च जातीति । शक्तिलक्षणासाध्यधियो भिन्नयोरनुपपत्तिप्रतिसन्धानव्यवधानं सर्वत्र दृष्टमिह च तन्नास्ति इति व्यवधानाभावपरशक्यार्थेत्यादिग्रन्थः । अयं तु युगपदेवेति स्वरसाद्भेदाभावमात्र इत्यपौनरुक्त्यं वक्ष्यमाणक्रमकल्पनातद्दूषणयोरवतारायोक्तमेव पुनरुक्त्यापि तमिति वा । किन्तु युगपदेवेति । न च तदुपपादकं युगपद्वृत्तिद्वयं सम्भवतीति भावः । क्वचिन्मुख्यं हि क्वचिल्लाक्ष-

प्रमाणवतो गौरवस्यापि न्याय्यत्वात् । किञ्च जातौ निर्विकल्पकोपस्थितायां न शक्तिग्रहः । किन्तु सविकल्पकोपस्थितायां जातौ च विशेषणं व्यक्तिरेव । अन्यद्विशेषणान्यायस्य वैपरीत्यमापतितम् । एवं च जातेः स्मरणमपि सविकल्पकतया विशेषणसापेक्षं । विशेषणं च तत्र व्यक्तिरेवेति समानसंवित्संवेद्यतया कथमाक्षेपः । न चान्वयप्रकारतया व्यक्तेर्ज्ञानमपि तु प्राधान्येन । किञ्च पदार्थोपस्थितावन्वयप्रकारता

---

णिकं भवति । न च जातौ क्वचिन्मुख्यः प्रयोगः व्यक्तिमनादाय क्वचिदपि पदाज्जातेर्व्यवहाराभावा दिति तत्त्वम् । एवं शक्तिसाध्योपस्थितिपर्यालोचनया व्यक्तेः शक्यतामुपपाद्य शक्तिग्राहकोपस्थितिवशादपि तामुपपादयति किञ्च जाताविति । उक्तयुक्तिं स्मृतावतिदिशन् सिंहावलोकनेनाक्षेपपक्षे दोषान्तरमाह । एवमित्यादिना । न केवलं शक्तिग्राहकव्यवहारकालीनोपस्थितिरित्यपि शब्दार्थः । सूचीकटाहन्यायेन गुर्वेकदेशिपक्षं प्रतिक्षिपति । न चान्वयेति । अन्वयप्रकारस्य छिद्रेतरत्त्वादेरशक्यस्यापि शाब्दबोधविषयत्वमभ्युपगम्येदं वस्तुतस्तदेव न स्यादिति द्रष्टव्यम् । अपि च सम्बन्धिविशेषान्वयधीकाले खल्वन्वयप्रकारविशेषोपस्थितिर्न तु पदार्थोपस्थितिकाले न चेह तथा जात्युपस्थितेर्व्यक्तिविषयतानियमादित्याह । किञ्च पदार्थोपस्थि-

स्यात् । व्यक्त्या विना जात्युपस्थितिरेव ना-स्तीति कस्यान्वये व्यक्तिः प्रकारः स्यात् । समानसंवित्संवेद्यतानियमेऽपि जातौ शक्तिर्न व्यक्ताविति चेत् । न शक्तिर्हि सामर्थ्यं । तच्च कार्यापेक्षं । कार्यं ज्ञानात्मकमेवेति कथं गौरवं । न च जातिविषयतया ज्ञानं कार्यं न तु व्यक्तिविषयतयेति वाच्यम् । उभयविषयकं ज्ञानं पदजन्यमित्यस्यैव तदर्थत्वात् । किञ्चास्मन्नये पदानां

---

ताविति । सत्यामिति शेषः । नास्तीति । समानसंवित्संवेद्यत्वादिति भावः । समानसंवित्संवेद्यतानियमाज्जातिशक्तपदजन्यज्ञानस्य व्यक्तिविषयतावश्यम्भाव एव सिद्धो न तूभयत्र तुल्या शक्तिरिति गूढाशयगुरोर्मतमाशङ्कते । समानेति । न व्यक्ताविति । गौरवादिति शेषः । जातावपि न शक्तिः । किन्तु तज्ज्ञाने तद्विषयतया तस्याः शक्यत्वं तत्समानवित्तिवेद्यतया व्यक्तेरपि तदापत्तिरिति तत्र निषेधे व्याघाते। गौरवासिद्धिश्चेत्याशयेन परिहरति । शक्तिर्हीति । गुरोराशयमुद्घाट्य दूषयति । न च जातिविषयतयेति । जन्यज्ञाने विषयतया कार्यतावच्छेदकत्वस्यैव शक्यत्वादिति भावः । माभूद्व्यक्तिविषयतया जन्यत्वं तथापि तद्विषयकज्ञानस्य पदजन्यतामात्रेण व्यक्तेः शक्यता अन्यस्य परिभाषामात्रत्वेनाप्रयोजकत्वादित्याह । उभयविषय इति । अन्वयस्य शक्यतापत्तेरपरितुष्यन्नाह । किञ्चेति । सङ्केत इति । अस्मा-

शक्तिस्सङ्केतो न तु पदार्थान्तरं । स च व्यवहारबलेन जातिवद्व्यक्तावपि गृह्यते । न हि गोपदाञ्जातिमात्रं व्यवह्रियते न च व्यक्तिरिति युक्तिमत् । तस्मात्सङ्केतग्राहकस्य जातिव्यक्तिसाधारणस्य प्रमाणसिद्धत्वादुभयत्रापि सङ्केतरूपा शक्तिरिति न किंचिदनुपपन्नम् । एतेन गुरूणामर्द्धजरती निरस्ता । स्वरूपसत्याः शक्तेः पदार्थोपस्थित्यनङ्गत्वात् । तदर्थमेव तस्याः कल्पनात् ।

---

च्छब्दादयमर्थो बोध्य इतीश्वरेच्छात्मक इत्यर्थः । न त्विति मानाभावादिति भावः । स्वरूपकथनं चैतत् । उभयथा व्यवहारबलेनैव तत्कल्पनादनन्यलभ्यमात्रविषयत्वाविशेषाच्च । व्यवहारस्य शक्त्यंशे असिद्धिमाशंक्याह । न हीति । उपसंहरति तस्मादिति । इति न किंचिदिति । अन्यथा तु शाब्दी ह्याकांक्षा शब्देनैव शाम्यतीति न्यायाद्व्यक्तेः शाब्दान्वयबोधानुप्रवेशो विभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधाद्विभक्त्युपनीतसंख्याकर्मत्वाद्यन्वयश्चानुपपन्न इति भावः । गुरूणामर्द्धजरतीन्यायं निराचष्टे । एतेनेति । वक्ष्यमाणेनेत्यर्थः । किमसौ शक्तिः पदार्थोपस्थितये स्वीक्रियते उताप्रकृत्यर्थे विभक्त्यर्थान्वयानुपपत्तेर्विभक्त्यर्थान्वयायेति विकल्प्य नाद्य इत्याह । स्वरूपसत्या इति । अपभ्रंशादर्थप्रत्ययादिति भावः । न द्वितीय इत्याह तदर्थमेवेति । तदर्थोपस्थित्यर्थमेवेत्यर्थः ।

अन्यथा जातावपि स्वरूपसत्त्वेवास्तामिति वाचालवचसोऽवकाशप्रसङ्गात्। तस्माज्जातिवत् व्यक्तिरपि यथासम्भवमाकृतिरपि पदार्था इति निर्द्धार्य सूत्रितमक्षपादेन "व्यक्त्याकृतिजातयस्तु पदार्थाः" इति तदेव युक्तमिति समञ्जसम् ॥ ॥

॥ इति पदशक्तिवादः ॥

---

शब्दतदनुपस्थितौ विभक्त्यर्थान्वयस्याप्यनुपपत्तिः। शाब्दीत्यादिन्यायविरोधादिति भावः। ननु क एवमाह स्वरूपसती सांगमिति येनापभ्रंशादर्थप्रत्ययो न स्यात्किन्तु जातिविषयतया ज्ञातेत्यत आह। अन्यथेति। अपिरवधारणे। समुच्चयेनोभयत्र स्वरूपसत्ताङ्गीकारे शक्तिभ्रमादर्थप्रत्ययाभावप्रसङ्गात्। एतावता पूर्वपक्षानुमानेऽभावरूपसाध्यप्रतियोगिग्राहकोपजीव्यप्रमाणबाधमुपपाद्य गोव्यक्तिर्गोपदशक्या गोत्वसमानवित्तिवेद्यत्वात् गोत्ववदिति विवक्षितमनुमानं निगमयति। तस्मादिति। ननु प्रत्येकं शक्यत्वे गोगोत्वे इति प्रत्ययोत्पत्तिर्विशिष्टशक्यत्वे गौर्नित्यो गौरनित्य इत्यत्रानन्वयप्रसङ्गः। विशिष्टानामानंत्येन व्यक्तिपक्षोक्तदोषानुवृत्तिश्चेति चेन्न। विशिष्टशक्तस्य विशेषणपरत्वे लक्षणास्वीकारात्। विशिष्टानामानंत्येपि सामान्यलक्षणयोपस्थितेषु विशिष्टेषु सामान्यावच्छेदेन एकशक्तिस्वीकाराददोषात्। आकृतिव्यंग्यजातिप्रवृत्तिनि-

मित्तकपदेषु आकृतिरपि शक्येत्याह । यथासंभवमिति । अत्र रूपरसगंधादिव्यंग्यजातिप्रवृत्तिनिमित्तकेषु पदेषु रूपादिवत् आकृतिव्यंग्यजातिप्रवृत्तिनिमित्तकेष्वप्याकृतेः शक्यत्वे मानाभावः । तत्प्रतीतेस्तद्व्यंग्यजातिलिङ्गकत्वेन रूपादिप्रतीतिवदेव शाब्दत्वासंप्रतिपत्तेरिति चिंत्यमेतत् । सूत्रे पदार्थ इत्येकवचनं विशिष्टगोचरा एकैव शक्तिरिति सूचनाय ॥

इति सकलसामन्तप्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां पदशक्तिप्रकरणं समाप्तम् ।



अथ सहजशक्तिः । तत्र विप्रतिपत्तिः । वह्निर्दाहानुकूलातीन्द्रियादृष्टधर्मसमवायी न वा ।

पदशक्तिसिद्धान्ते शक्तिः सङ्केतो न पदार्थान्तरमित्युपक्षिप्तं तत्र दाहादाहव्यवस्थानुरोधेन शक्तेः पदार्थत्वान्तरत्वस्या(१)वश्यकत्वादियमपि पदार्थान्तरं शक्तित्वात् वन्हिशक्तिवत् । इति परप्रत्यवस्थानसंभवान्निराकरणस्यावसरप्राप्ततामर्थशब्देन दर्शयन्नेव प्रतिजानीते । अथ शक्तिरिति ॥ चिन्त्यत इति शेषः । चिन्तानुकूलसंशयमाह । तत्रेति । वन्हिद्व्यणुके अतीन्द्रियस्पर्शेन सिद्धसाधनतानिवृत्त्यै अयमिति । प्रत्यक्ष इत्यर्थः ॥ वह्नौ स्थितिस्थापकपक्षे तद्वारणाय दाहानुकूलेति । पक्षान्तरे तूद्दिश्यसिद्ध्यर्थं तत् ॥ उष्णस्पर्शनिवृत्त्यै अतीन्द्रियेति । अदृष्टवदात्मसंयोगनिराबायादृष्ठेति । तच्चानेकासमवेतत्वमिति नाग्निमसमवायिपदवैयर्थ्यम् । अनेकवृत्तेरप्यभावस्य तेष्वसमवेतत्वेनादृष्टपदादव्यावृत्तेः । ननु दाहस्य व्यधिकरणगुणादृष्टनिमित्तकतया तदुभयसमानाधिकरणदाह्यादृष्टवदात्मसंयोगजन्यत्वं युक्तं न तु वन्ह्यदृष्टवदात्मसंयोगजन्यत्वं तत्कथं तेनार्थान्तरवारणायादृष्टपदं । न । उष्णस्पर्शस्यापि वन्हिनिष्ठस्य व्यधिकरणादृष्टनिमित्तकतया तत्समानाधिकरणसंयोगजन्यत्वानुमानाद्वन्ह्यदृष्टवदात्मसंयोगस्यापि दाहप्रयोजकत्वात् । बाह्यद्व्यणुकसंयोगवारणायं वा तद्द्रष्टव्यं । समवायिपदमतीन्द्रियादृष्टादिप्रतिबंधकाभावनिरासाय। अनुपलब्धिगम्याभाववादिमते तु प्रतिबंधकाभावमात्र-

(१) धावयजन्येति पा० २ पु० ।

अनुकूलत्वं च कार्याभावनियताभावप्रतियोगित्वं तच्च कारणतदवच्छेदकोभयसाधारणम् । अतीन्द्रियत्वं च साक्षात्कारनियामकप्रत्यासत्त्यनाश्रयत्वं ।

निरासाय । यद्यपि गुरुमते नाभावोऽतिरिक्तस्तथापि प्रतिवादिमतेऽर्थान्तरतानिरासाय तदुपादानं समवायपदं चायुतसिद्धसंबन्धपरं स च भाट्टानुमतोपीति न कोट्यप्रसिद्धिः । नन्वनुकूलत्वं कारणत्वं तदवच्छेदकत्वं वा । नाद्यः । अपसिद्धान्तात् । न द्वितीयः । शक्त्यतिरिक्तस्य कारणतावच्छेदकस्यानङ्गीकारेण साध्याप्रसिद्धेरित्यत आहानुकूलत्वं चेति । कार्याव्यवहितपूर्वत्वाभावनियताभावकसमवधानप्रतियोगिकत्वमित्यर्थः । यथाश्रुते कार्यकालेपि कारणाभावेन व्यभिचारात् पूर्वत्वेति । न च उत्पत्त्यवच्छिन्नत्वविशेषणमास्तां । ध्वंसोत्पत्तिक्षणे प्रतियोग्यात्मककारणाभावे सत्यपि उत्पत्त्यवच्छिन्नध्वंसाभावाभावेन व्यभिचारानुद्धारात् । एवमपि कारणानुत्पत्तिदशायां कार्यपूर्वत्वाभावाभावेन व्यभिचारात् अव्यवहितेति । स्वर्गाव्यवहितपूर्वकाले यागाभावेपि स्वर्गाव्यवहितपूर्वत्वाभावाभावेन व्यभिचारः स्यात्तन्निवृत्तये समवधानेति । नन्वतीन्द्रियत्वं न साक्षात्काराविषयत्वं जन्यसाक्षात्काराविषयत्वं वा । न्यायेन तदप्रसिद्धेः । नाप्यनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यजन्यसाक्षात्काराविषयत्वं तादृशप्रत्यासत्तेः शक्तिवादिनामप्रसिद्धेः इत्यत आह

यद्वा वह्निनिष्ठदाहकारणत्वमतीन्द्रियधर्मावच्छेद्यं न वा । तत्र परेषामयमाशयः । यादृशादेव करतलानलसंयोगाद्दाहो जायते तादृशादेव सति प्रतिबन्धके न जायते । प्रतिबन्धकत्वं च किञ्चित्कार्या-

अतीन्द्रियत्वं चेति । साक्षात्कारनियामकप्रत्यासत्तयः संयोगादयः तदनाश्रयत्वमित्यर्थः । नन्विन्द्रियेष्वव्याप्तिः । तेषु घटादिसाक्षात्कारजनकप्रत्यासत्तिसत्त्वात् । किञ्च साक्षात्कारनियामकत्वं तदुपहितत्वं तत्स्वरूपयोग्यत्वं वा । नाद्यः । घटादिसाधारण्यात् । न द्वितीयः परमाण्वाद्यव्यापनात् । तेषामपि साक्षात्कारजननस्वरूपयोग्यसंयोगप्रत्यासत्त्याश्रयत्वात् । न च साक्षात्कारापत्तिः । कारणान्तरवैकल्यादिति चेन्न । विषयतया साक्षात्काराजनकत्वस्यैवातीन्द्रियपदार्थत्वात् । वन्हिनिष्ठदाहकारणत्वमिति । अदृष्टवदात्मसंयोगनिष्ठदाहकारणत्वे सिद्धसाधनवारणाय वन्हिनिष्ठेति । अदृष्टवृत्तिकारणत्वे विधिकोटिप्रसिद्धिः । संशयजननीं स्वाभिमतविपरीतकोट्युपस्थितिमाह । तत्र परेषामिति । प्रतिबन्धकसमवधानकालीनदाहाभावप्रतिबन्धकत्वान्यथानुपपत्तिभ्यां धर्मान्तरं साधयितुमन्यथोपपत्तिं निरस्यन्नेव वस्तुस्थितिमाह । यादृशादेवेति । उभयसंप्रतिपन्नसकलदाहसहकारिसमवहितादेवेत्यर्थः । अतो न तद्व्यतिरेकेणान्यथोपपत्तिरिति भावः । पृथगन्यथोपपत्तिनिरासे प्रयासगौरवप्रसङ्गात् आद्यामनुपपाद्यैव द्वितीयामप्यर्थापत्तिमुपन्यस्यति । प्रतिबन्धकत्वं चेति । धर्मपदं स्व-

कूलविघटकत्वमेव । तत्र न प्रतिबन्धकस्य दृष्टविघटकत्वं । दृष्टस्य पूर्ववत्प्रमाणसिद्धत्वात् । न चादृष्टविलम्बात्तत्र कार्यविलम्ब इति वाच्यम् दृष्टकारणकलापे सत्यदृष्टविलम्बस्यासिद्धत्वात् । अन्यथा सत्यन्ततन्तुसंयोगे कदाचित्पटानुत्पाद-

रूपकथनाय । इदं च शक्तिवाद्यभिमतं प्रतिबन्धकत्वं घटानुकूलदंडविघटके तदवयवकर्मादाविष्टमेवेति नातिव्याप्तिरिति ध्येयम् । सूचितमुभयत्रान्यथासिद्धिनिरासं स्पष्टयति । तत्रेति । यद्विघटनाद्दाहाभावः प्रतिबन्धकत्वं चोपपद्येतेति भावः । अस्तु तर्हि तथैवेत्यत आहादृष्टस्येति । उभयसंप्रतिपन्नस्येत्यर्थः । तथा पुरुषान्तरेणोष्णत्वाद्युपलम्भादिति भावः । यत्तर्हि तदा नोपलभ्यते अदृष्टतद्विघटकत्वमस्तु तावतापि दाहाभावप्रतिबन्धकत्वयोरुपपत्तेरित्याशंक्याह । न चादृष्टविलम्बादिति । विलंबो व्यतिरेकः । उपलक्षणं चैतत् अदृष्टविघटनात्प्रतिबंधकत्वं चेत्यपि द्रष्टव्यम् । अदृष्टविलंबस्य साक्षात्कार्यविलंबप्रयोजकत्वे दण्डाभावकालीनघटाभावस्यापि सिद्धसर्वोत्पत्तिमत्कारणाभावादृष्टविलंबादेवोपपत्तौ दण्डव्यतिरेकस्य घटव्यतिरेकप्रयोजकतापत्त्या दृष्टकारणोच्छेदप्रसङ्गाद्दृष्टोपसंहारेणैव तस्य कारणतेति तत्सिद्धौ तद्विलंबासिद्धिरित्याशयेनाह । दृष्टकारणेति । विपक्षे बाधकान्तरमाह । अन्यथेति । कर्मणीति । अवि-

प्रसङ्गात् । सत्यपि कर्मणि कदाचिद्विभागानुत्पा-
दप्रसङ्गात् । तस्मादतीन्द्रियकिंचिद्दाहानुकूलविघ-
टकत्वं मण्यादेः प्रतिबन्धकस्यान्यथा(१)नुपपत्त्या
कल्पनीयमिति अर्थापत्तिरेव शक्तौ प्रमाणं । न च
प्रतिबन्धकाभावेनान्यथासिद्धिः । अभावस्यातिरि-
क्तस्य मयानङ्गीकारात् । अङ्गीकारे वा कारण-
त्वस्य भावत्वव्याप्तत्वात् भावत्वस्याभावे निवृ-

नश्यदवस्थकर्मणीत्यर्थः । यद्यपि परंपराकारणस्य तत्त्वा-
नुरोधात्क्वचित्साक्षात्कारणत्वमावश्यकमिति तत्रैव दृष्ट-
कारणकलापेप्यदृष्टविलंबः सिद्धो यथा परमाणुकर्मादौ
यत्रान्यथेत्यादि बाधकं तत्तदा शोभेत यदि दृष्टकारणक-
लापस्यादृष्टविलंबव्याप्तिरिष्येत न तु तथा किन्तु यत्र
दृष्टकारणकलापे कार्यविलंब इति । तथाच संयोगादौ तु
पटाद्युत्पत्तिरेवादृष्टसाधिकेति न तद्विलंबो न वा पटा-
नुत्पादप्रसंगस्तथापि प्रकृतेप्यग्रे दाहदर्शनान्नादृष्ट-
विलंबः । न चान्तरादृष्टोत्पादकान्तरमस्ति । मण्या-
द्यपसारणस्याविहितनिषिद्धत्वादिति भावः । प्रथमा-
र्थापत्तिमुपसंहरति तस्मादिति । दाहाभावोपपादका-
भावप्रतियोगिनोदृष्टस्यादृष्टस्य वाऽनिरूपणादित्यर्थः । द्वि-
तीयामुपसंहरति प्रतिबंधकत्वेति । अर्थापत्तिरिति । जा-
तावेकवचनम् । अस्मिंश्चार्थापत्तिद्वयवर्णने कुसुमांजलि-
प्रकाशसंवादो द्रष्टव्यः । संप्रतिपन्नाभावेनान्यथो-

(१) प्रतिबन्धकत्वान्यथेति पा० २ पु० ।

त्त्या कारणत्वस्य निवृत्तेः । किञ्च न प्रतिबन्धकाभावत्वेन कारणत्वम्। अन्योन्याश्रयातिप्रसङ्गात्(१)। प्रतिबन्धकत्वं हि कारणीभूताभावप्रतियोगित्वं। तच्च कारणत्वग्रहाधीनग्रहं । कारणत्वं च तत्ग्रहाधीनग्रहमिति । नापि मण्याद्यभावत्वेन मणिसमवधानेपि मणितदन्योन्याभावरूपमादाय

पपत्तिं निरस्य विप्रतिपन्नप्रतिबन्धकाभावेन तां निरस्यति । न च प्रतिबन्धकेति । नन्वतिरिक्तानङ्गीकारेपि तत्स्थानाभिषिक्तमेव कारणं स्यात् । अङ्गीकारपक्षेपि कारणत्वस्य भावत्वव्याप्तिग्राहकविपक्षबाधकाभावादनुपलब्ध्यादीनामभावग्रहादिकारणत्वस्वीकाराच्च नानुपपत्तिरित्यरुचेराह किञ्चेति । कारणीभूतेति । नन्विदं दंडप्रागभावादावतिव्यापकं । न च संसर्गाभावत्वेनाभावकारणता विवक्षिता । कारणीभूतपक्षतारूपाभावप्रतियोगिनः सिद्धसाधनस्य विशेषादर्शनस्य च प्रतिबन्धकत्वाभावप्रसंगात् । ध्वंसव्यापारकत्वपक्षे यागादिप्रतिबंधकतापादनानुपपत्तेश्चेति चेन्न । भावरूपकारणीभूताभावप्रतियोगित्वस्य विवक्षितत्वात् । एवं च प्रतिबंधकाभावस्य संसर्गाभावत्वेन कारणत्वादित्यादि वर्द्धमानवचनं प्रतिबंधकविशेषाभिप्रायं द्रष्टव्यम् ।कारणत्वं च तद्ग्रहाधीनग्रहमिति । यद्यपि प्रतिबंधकाभावत्वस्य कारणतावच्छेदकत्वेपि न कारणताग्रहमात्रे तदपेक्षानियमः ससंबंधिकपदार्थप्रत्यक्ष एव।वच्छेदकग्रहनियमात् । अवच्छेदकवैजात्यानुपस्थितावपि शाब्दयागस्वर्ग-

(१) अन्योन्याश्रयप्रसङ्गादिति पा० १ पु० ।

दाहप्रसङ्गात् । नापि मणिप्रागभावत्वेन उत्पन्नविनष्टे मणौ दाहानुत्पादप्रसङ्गात् । नापि ध्वंसत्वेन अनुत्पन्ने मणौ दाहानुत्पादप्रसङ्गात् । नापि मण्यत्यन्ताभावत्वेन उत्पन्नध्वस्ते मणौ अत्यन्ताभावाभावाद्दाहानुत्पादप्रसङ्गात्। नापि मण्यादिसंसर्गाभावत्वेन अन्योन्याभावातिरिक्तस्य संसर्गाभावस्य निर्वक्तुमशक्यत्वात् । तथा हि । किं तत्संसर्गाभावत्वं संसर्गप्रतियोगिकाभावत्वं वा । तादात्म्यातिरिक्तप्रतियोगिकाभावत्वं वा । अन्यद्वा नाद्यः । संसर्गान्योन्याभावेति(१)व्यापकत्वात् । न द्वितीयः । तादात्म्यात्यन्ताभावे अव्यापकत्वात् । नान्त्योऽसंभवात् । किञ्च । मण्यभा-

साध्यसाधनभावबोधस्वीकारात् तथापि कारणताप्रत्यक्ष एवायमन्योन्याश्रयो द्रष्टव्यः । उत्पन्नविनष्ट इति । उत्पन्ने दूरस्थे विनष्टे वेत्यर्थः(२)। अनुत्पन्न इति । दूरस्थे सत्यपीति शेषः ॥ उत्पन्ने ध्वस्ते चेति । अनुत्पन्न इत्यनुषज्यते तेनानुत्पन्ने उत्पन्ने ध्वस्ते चेति । अन्योन्याभावातिरिक्तस्येति । अन्योन्याभावव्यावृत्तस्य संसर्गाभावत्वस्य निर्वक्तुमशक्यत्वादित्यर्थः । एवं प्रथमार्थापत्तौ प्रतिबन्धकाभावेनान्यथोपपत्तिं निरस्य द्वितीयार्थापत्तावपि तां निरस्यति । किंच मण्यभावस्येति । प्रथमार्थापत्तौ प्रकारान्तरेणान्यथोपप-

(१) संसर्गाभावेति पा० १ पु० ।
(२) उत्पन्ने विनष्टे दूरस्थे वेति पाठान्तरम् ।

वस्य च कारणत्वे मणेः प्रतिबन्धकत्वं न स्यात् । प्रतिबन्धकत्वं कार्यानुकूलविघटकत्वम् न च मणिः किंचिदनुकूलं विघटयति स्वत एवानुकूलविघटनरूपत्वात् । किञ्च प्रतिबन्धकसद्भावेपि उत्तेजकसमवधाने दाहदर्शनात् कथं व्यभिचारात् प्रतिबन्धकाभावस्य कारणत्वं । न चोत्तेजकसद्भावेन प्रतिबन्धकसद्भावः । उत्तेजकाभाव(१)विशिष्टप्रतिबन्धकाभावस्तर्हि कारणं विशिष्टं च विशेषणविशेष्यतत्संबन्धातिरिक्तं नास्ति । तथा च विशेषणविशेष्यतत्सम्बन्धाभावाः प्रत्येकं कारणं मिलिता वा । नाद्यः । प्रत्येकं व्यभिचारात् ।

---

त्तिं निरस्यति । किञ्च प्रतिबन्धकेति । ननु मणिमात्रं न प्रतिबन्धकं किन्तूत्तेजकाभावविशिष्टतदभावश्चोत्तेजककालेपीति न व्यभिचार इत्याशंक्याह । न चोत्तेजकेति । एवमंगीकारे मण्यभावः कारणमिति प्रतिज्ञातं तावद्भग्नं न चायमपि विशिष्टानतिरेके सुनिर्वह इत्याह । उत्तेजकाभावेत्यादिना । प्रत्येकं व्यभिचारादिति । मण्युत्तेजकयोरभावे विशेषणाभावस्य मण्युत्तेजकसमवधाने विशेष्याभावस्य व्यतिरेकव्यभिचारात् । मण्युत्तेजकभावकाले तयोरतिरिक्तसंबन्धाभावेन संबन्धाभावस्याप्यन्वयव्यभिचारात् । एकोत्तेजकवत्यपरोत्तेजकशून्यमणौ सत्यपि तदुभयसंबन्धे

---

(१) उत्तेजकाभावे इति पा० २ पु० ।

न द्वितीयः अभावमेलकाभावेपि दाहदर्शनात् । न च विशिष्टाभावोतिरिक्त एवेति वाच्यं । विशिष्टस्य हि विशेषणाद्यनतिरेके विशिष्टाभावस्य विशेषणाद्यभावातिरेके का प्रत्याशा । न च विशिष्टमतिरिक्तमेव प्रतिक्षणं यत्किंचिद्विशेषणावच्छेदकत्वे क्षणभङ्गप्रसङ्गात् । प्रत्यभिज्ञानं च क्वचिदपि

---

दाहदर्शनाद्व्यतिरेकव्यभिचाराद्वेत्यर्थः । द्वितीये व्यतिरेकव्यभिचार इत्याह । अभावमेलकेति । स्वार्थे कः । ननु देवदत्ततत्संबन्धान्यतमाभावे दंडी देवदत्तो नास्तीति जायमानानुगतबुद्धिस्तावदतिरिक्तं अनुगतं विशिष्टाभावं कल्पयति इति स एवानुगतो हेतुः । अस्त्वित्याशंक्य निराकरोति । न च विशिष्टेति । अभावविभाजकैकोपाधिमदनेकाभावप्रतियोगित्वस्यैकत्रासंभवान्न विशेषणादिकमेव प्रत्येकाभावभिन्नानुगताभावप्रतियोगि न च विशिष्टं तस्य तदनतिरेकादित्याह विशिष्टस्य हीति । नन्वनुगतमतिरेवाभावस्येव तत्प्रतियोगिनो विशिष्टस्याप्यतिरेकं कल्पयिष्यतीत्यत आह न च विशिष्टमिति । यत्किंचिद्विशेषणेति । अन्ततस्तल्लक्षणस्यैव सत्त्वादिति भावः । नन्वीदृशक्षणभंगो न दोषायेत्यत आह । प्रत्यभिज्ञेति । ननु नष्टं विशिष्टं न प्रत्यभिज्ञाविषयः तस्या उपलक्ष्यविशेष्यमात्रविषयत्वात्तस्य चानाशादित्यस्वरसादाह विशेषणादिनेति । ननु विशेषणाद्यनतिरिक्तस्यापि विशिष्टस्यातिरिक्ता-

न स्यात् । विशेषणादिनैव विशिष्टव्यवहारोपपत्तावतिरिक्तकल्पनायोगाच्च । किञ्च मण्यादिसमवधानदशायां उत्तेजकसद्भावे(१) यो दाहो जायते स किं प्रतिबन्धकप्रागभावात् । उत प्रतिबन्धकध्वंसात् । उदत्यन्ताभावाद्वा । न तावदाद्योऽसिद्धेः । प्रागभावस्य कार्य्यैकोन्नेयत्वात् । न द्वितीयः । उत्तेजकापनयेपि दाहप्रसङ्गात् ध्वंसस्य विद्यमानत्वात्(२) । अत एव न तृतीयः । अत्यन्ताभावस्य सदातनत्वादुत्तेजकापनयेपि(३)दाहप्रसङ्गात् ।

---

भावसंभवे इष्टापत्तिरसंभवे स एवानुगतमतिसिद्धस्वप्रतियोगिविशिष्टातिरेके मानमित्यस्वरसादाह । किंच मण्यादीति । मण्यादेरुत्पन्नस्य पुनरुत्पत्तेरुत्तेजकसमवधानदशायामेव मणिनाशस्थले विशिष्टस्याप्यनुत्पत्तेः प्रागभावासंभवाद्व्यतिरेकव्यभिचार इत्याह । प्रागभावस्येति । उत्तेजककालीनस्य विशिष्टध्वंसस्य तदपनयेप्यविनाशादन्वयव्यभिचारमाह । उत्तेजकेति । वस्तुतः समवाय्यसमवायिकारणनाशघटितक्लृप्तसामग्र्यभावे विशिष्टध्वंसानुपपत्तेरुत्तेजककाले व्यतिरेकव्यभिचार एवेति ध्येयम् । अत एवेत्यस्यार्थमाह । अत्यन्तेति । ननू-

---

(१) समवधाने इति पा० १ पु० ।

(२) उत्तम्भकापनयेपि ध्वंसस्य विद्यमानत्वाद्दाहप्रसङ्गादिति पा० १ पु० ।

(३) उत्तंभकापनयेपीति पा० १ पु० ।

किञ्च मण्यादिसंसर्गाभावस्य संसर्गाभावत्वेन कारणत्वम्। तथा चेतरसमवधानेपि यत्किंचिन्मणिसंसर्गाभावमादाय मणिसमवधानेपि दाहप्रसङ्गात्। न हीतरसमवहितदंडसमवधाने(१) दंडान्तरविलम्बेन कार्यविलम्बो दृश्यते। किञ्च प्रहरं मा दहेत्यादौ मंत्रस्य प्रतिबन्धकत्वं वाच्यम्। तथा च तदभावस्य कारणत्वे प्रहराभ्यन्तर एव दाहः स्यात्। मंत्रस्य शब्दरूपतया आशुतरविनाशित्वात्। किञ्च तार्णादौ वह्निजनकताप्रयोजकं न तृणत्वादिकं व्यभिचारात्। अन्यस्यानुगतस्याभावात् तृणादीनां एकशक्तिमत्त्वं प्रयोजकं वह्निजनकत्वे स्वीकार्यम्। किञ्च पिपासोपशमनस-

त्तेजकापनयनदशायां प्रतिबन्धकात्यन्ताभावस्वरूपसत्त्वेपि न दाहापत्तिरुत्तेजकसमवधानस्य तत्सम्बन्धस्याभावादित्याह। किंचेति। यत्किंचिदिति। एककारणतावच्छेदकाक्रान्तकिंचित्समवधाने एव कार्योत्पत्तेरिति भावः। एतदेव व्यतिरेकमुखेन द्रढयति। न हीति। प्रतिबन्धकाभावेनान्यथोपपत्तौ दूषणान्तरमाह। किंचेति। आशुतरेति। व्यापारस्य चानिर्वचनादिति भावः। तार्णादावेकजात्यनुपपत्तिरपि शक्तौ मानमित्याह। किञ्च तार्णादाविति। एकैकमन्तरेणाप्यपरस्मात्तदुत्पत्तेरित्यर्थः।

(१) हीतरदंडसमवधाने इति पा० २ पु०।

मर्थमिदं जलत्वादित्यत्र सामर्थ्यं तावदनुमीयते । तत्तावन्न पिपासोपशमनकारणत्वम् । तदपि पिपासोपशमनस्वरूपयोग्यत्वं वा सहकारियोग्यत्वं वा । नाद्यः । स्वरूपयोग्यत्वस्य प्रत्यक्षेणैव ग्रहणात् । न द्वितीयो व्यभिचारात् । न हि सर्वं जलं पिपासोपशमनसहकारियोग्यं भवतीति नियमः । तस्मात्कारणत्वातिरिक्तमेव सामर्थ्यमनुमेयम् । तदेव(१) शक्तिः । एवं व्यवस्थिते(२)ऽनुमानमप्युच्यते । अयं(३) वन्हिर्दाहानुकूलातीन्द्रियैकवृत्तिधर्मसमवायी दाहकारणत्वात् आत्मवत् । न चात्मत्वमुपाधिः । तेजोद्व्यणुक एव साध्याव्यापकत्वात् ।

अनुगतस्येति । अनतिप्रसक्तस्य चेति शेषः । एकशक्तिमत्त्वमिति । एकजातीयशक्तिमत्त्वमित्यर्थः । अन्यथा कार्यैकजात्याऽनुपपत्तेरिति भावः । शक्तिपदापरपर्यायस्य सामर्थ्यस्य कारणतातिरेकं विना जलत्वादिलिङ्गानुमेयत्वानुपपत्तिरपि शक्तिं गमयतीत्याह । किंच पिपासेति । प्रत्यक्षेणैवेति । कारणतावच्छेदकधर्मस्यैव स्वरूपयोग्यत्वादिति भावः । व्यभिचारमेव स्पष्टयति । न हीति । स्वमतेनार्थापत्तीरभिधाय तत्प्रामाण्यपार्थक्ये विप्रतिपन्नं परं प्रत्यनुमानाभिधानं प्रतिजानीते । एवमिति । कृते कंटकोद्धार इत्यर्थः । वन्हिरिति प्रतिज्ञावि-

(१) सैव चेति पा० २ पु० ।
(२) एवं स्थिते इति पा० १ पु० ।
(३) अयं—नास्ति १ पु० ।

तत्रापि हि दाहानुकूलस्यातीन्द्रियस्य स्पर्शस्य विद्यमानत्वात् । न चासौ न दाहहेतुः । उद्भूतोष्णस्पर्शमात्रस्यैव तत्त्वात्(१) । यद्वा करतलानलसंयोगः कार्यानुकूलातीन्द्रियधर्मसमवायी कारणत्वात् आत्मवत् । अत्रात्मत्वोपाधेः साध्याव्यापकत्वं स्फुटमेव । न च द्रव्यत्वमुपाधिः । धर्माधर्मादौ साध्याव्यापकत्वात् । अत्र धर्मत्वादेरेव तथाभूतस्य विद्यमानत्वात् । न चातीन्द्रियप्रतियोगिकसादृश्येन सिद्धसाधनम् । सादृश्यपदार्थस्याभावान्तर्भावेनासमवेतत्वात् । वन्हिः

शेषणानि विप्रतिपत्तौ दर्शितप्रयोजनानि । आकाशादौ व्यभिचारनिरासाय हेतौ दाहपदम् । नन्वात्मत्वमत्रोपाधिरित्यत आह । न चेति । साध्याव्यापकतां स्फुटयति । तत्रापीति । ननु नासौ दाहानुकूल इत्यत आह न चेति । उद्भूतेति । अनभिभूतोद्भूतोष्णस्पर्शत्वस्यैव दाहजनकतावच्छेदकत्वादित्यर्थः । अद्विष्ठपदानुपादानलाघवेनानुमानान्तरमाह यद्वेति । संयोगविशेषोपादानं बुद्धिस्थतामात्रेण । कार्यानुकूलपदमुद्देश्यसिध्यर्थम् । नन्वत्रात्मत्वमुपाधिरित्यत आह । अत्रेति । स्फुटमेवेति । गुरुत्वादिमति घटादावेवेत्यर्थः । अस्तु तर्हि द्रव्यत्वमुपाधिरित्यत आह । न चेति । धर्मेति । आदि-

(१) तथात्वात्–१ पु० ।

कार्यानुकूलातीन्द्रियैकवृत्तिधर्मसमवायी कारणत्वात् आत्मवदिति वा । एवं प्राप्तेऽभिधीयते(१) । अन्यथानुपपत्त्या शक्तिः कल्पनी-

---

पदेन गुरुत्वभावनादेर्ग्रहणम् । नन्वतीन्द्रियप्रतियोगिकसादृश्येन सिद्धसाधनमित्यत आह । न चातीन्द्रियेति । ऐन्द्रियकप्रतियोगिकस्यैन्द्रियकतयातीन्द्रियपदेनैव निरस्तत्वात् । अतीन्द्रियप्रतियोगित्वोपादानं मन्मतसिद्धेन वा भवन्मतसिद्धेन वा तेन न सिद्धसाधनम् तस्यासमवेतत्वादित्यादिभंग्यन्तरेण हेतुमाह । सादृश्यस्येति । ध्वंससदृशोत्यन्ताभाव इत्यादिप्रतीतेरभावेष्वपि मध्ये परस्परसादृश्यस्य भावत्वेन तत्र च समवायासंभवेन तुल्यन्यायतया अन्यत्रापि भावरूपस्यापि तस्यासमवेतत्वादिति गुरुमतेऽर्थः । यद्यपि गुरुमतेऽभावस्यापि भावरूपत्वान्न तत्र समवायानुपपत्तिस्तथाप्यतिरिक्ताभावाभ्युपगमेनेदमुक्तम् । न्यायमते त्वभावस्यान्तर्भावः सादृश्यमध्ये प्रवेशस्तेनेत्यर्थः । असाधारणान्यतद्गतभूयोधर्मवत्त्वस्य सादृश्यस्याभावगर्भत्वेनासमवेतत्वादिति भावः । सकलवन्हिकार्यानुकूलां वन्हौ शक्तिं साधयितुमाह । वन्हिःकार्येति । अन्ये तु सादृश्येन सिद्धसाधनभयादेवाह । अयं वन्हिरिति । न चात्रापि तत्तस्य द्विष्ठत्वादित्याहुः । पूर्ववत्प्रत्यक्षो वन्हिः पक्षः कार्यं च स्वनिमित्तकं विवक्षितम् तेन वन्हौ स्थितस्यापकपक्षेऽपि

---

(१) प्राप्ते ब्रूमः इति पा० १ पु० ।

या । न चात्र सा । प्रतिबन्धकाभावेनोपपत्तेः । न चान्योन्याभावमादायातिप्रसङ्गः प्रागभावत्वादिनाऽननुगमो वा । संसर्गाभावत्वेनैव कारणत्वे तयोर्निरासात् । न चान्योन्याश्रयः । मण्यादिसंसर्गाभावत्वेनैवोपस्थिते कारणत्वग्रहस्य सुकरत्वात् । न चान्योन्याभावसंसर्गाभावयोरभेदः । आपाततः[१] संसर्गावच्छिन्नप्रतियोगिकाभावत्वप्रतियोग्यवृत्तिसदातनाभावत्वयोर्व्यावर्त्तकयोर्विद्यमानत्वात्[२] । न च संसर्गावच्छिन्नप्र-

न तेनार्थान्तरम् । तस्य वन्हिसमवायिकर्मकार्यानुकूलत्वात् तदभावपक्षे तु भाट्टाभिमतातीन्द्रियकर्मव्युदासार्थं तत् । अस्मिंश्च पक्षद्वये यद्यपि कारणत्वमात्रं परनयेऽभावसमवाययोर्व्यभिचारि तथापि निमित्तेतरकारणताश्रयत्वं तदर्थः । सिद्धान्ताभिधानं प्रतिजानीते । एवमिति । अर्थतो दूष्यमनुभाष्य दूषणमनुवदति । अन्यथेति । ननूक्तमतिप्रसङ्गव्यभिचाराभ्यां न प्रतिबन्धकभावेनान्यथासिद्धिरित्यत आह । न चेति । नन्वन्यथातिप्रसङ्गात्प्रतिबन्धकसंसर्गाभावत्वेन कारणता वाच्या तथा चान्योन्याश्रयः कारणीभूताभावप्रतियोगिनः प्रतिबन्धकत्वादित्याह । न चान्योन्याश्रयेति । आपा-

(१) आपाततः—नास्ति १ पु० ।

(२) भावत्वयोर्विद्यमानत्वात्—१ पु० ।

तियोगिकाभावत्वमन्योन्याभावविशेषेतिप्रसक्तम् । तथा हि गृहधृतबहुघटमध्यादेकस्मिन्बहिरानीते घटेऽधुना गृहसंसर्गिघटभिन्नोऽयं घट इति व्यवहारोऽस्ति । न च तद्घटवृत्त्यन्योन्याभावस्य प्रतियोगितावच्छेदकं घटत्वं घटत्वस्य तत्राप्यनुयोगिनि वृत्तेः । तस्मादवश्यं तदन्योन्याभावस्य संसर्गः प्रतियोगितावच्छेदक इति स्वीकर्त्तव्यमिति वाच्यम् । अभावस्थले निरसनीयत्वात् । न च प्रतियोग्यवृत्ति सदातनाभावत्वं घटपटौ नायं घट इति व्यासज्यप्रतियोगिकान्योन्याभावत्वव्यापकमिति वाच्यम् । त-

तत इति । ननु भूतले घटाभाव इति न संसर्गः प्रतियोगितावच्छेदकः किन्तु घटत्वादिकमेवान्यथा सम्बन्धितावच्छेदकरूपेण सम्बन्धिनि भासमान एव सम्बन्धिकपदार्थनिरूपणमिति नियमेन प्रतियोग्यंशे संसर्गप्रकारतापत्तेः दण्डी नास्तीतिवदित्यव्याप्तिः । तथा नित्यत्वात्यन्ताभावस्य स्वप्रतियोगिनि नित्यत्वे वृत्तौ तदनित्यत्वापत्तेः नित्यानामनित्यताप्रसङ्गात् प्रतियोग्यवृत्तित्वमेष्टव्यम् इत्यग्रिमलक्षणस्य तत्रातिव्याप्तिरित्याशयेनोक्तमापातत इति । अभावविचारेऽन्यदपि वक्ष्यत इति भावः । संसर्गान्योन्याभावव्यावृत्त्यै अवच्छिन्नेति । प्रतियोगीति अत्यन्ताभावव्यावृत्त्यै पूर्वं प्रागभावध्वंसव्यावृत्त्यै चोत्तरं विशेषणम् । अत्यन्ताभावः प्रयोगिवृत्तिः अन्यथात्माश्रयात् । प्रागभावध्वंसौ तद्वृत्ती

स्याप्यभावस्थले निरसनीयत्वात् । न चाभावकारणत्वे मणेरकिंचित्करत्वेन प्रतिबन्धकत्वानुपपत्तिः मणेः प्रतिबन्धकत्वाभावात् । किन्तु मण्यादिकमेव सामग्रीविघटनं तत्प्रयोक्ता तु

---

अपि न सदातनौ इति नातिप्रसक्तिरिति भावः । अवच्छिन्नत्वविशेषणेऽप्यतिप्रसक्तितादवस्थ्यमित्याशंकामुपपाद्य परिहरति । न च संसर्गावच्छिन्नेत्यादिना । अनुयोगीति । अवच्छेद्यान्यूनातिरिक्तवृत्तेरेवावच्छेदकत्वादिति भावः । अभावस्थल इति । अनुयोग्यवृत्तेरेवैतद्घटत्वस्य तत्प्रतियोगितावच्छेदकत्वेन तत्र वक्ष्यमाणत्वादिति भावः । अन्योन्याभावलक्षणे व्यासज्यप्रतियोगिकाभाववादिमतेनाव्याप्तिमाशंक्य निरस्यति । न च प्रतियोग्यवृत्तीति । तस्यापीति । प्रत्येकप्रतियोगिकाभावेनैव व्यवहारोपपत्तावतिरिक्तस्य व्यासज्यप्रतियोगिकाभावस्याप्रामाणिकत्वादित्यस्य तत्र वक्ष्यमाणत्वादिति भावः । द्वितीयामर्थापत्तिमनूद्य दूषयति । न चाभावकारणत्व इति । यद्यपि कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमभावकारणत्व एवोपपद्यते इति मणेस्तत्त्यागोऽनुचितस्तथापि एवुलर्थाननुसारित्वादिदमनादृत्य कार्यानुकूलकिंचिद्धर्मविघटकत्वं प्रतिबन्धकत्वं पराभिमतमभ्युपगम्येदमुक्तं यदाह । अकिंचित्करत्वेनेति । प्रतिबन्धकत्वाभावादिति । एवुलन्तप्रतिबन्धकपदार्थत्वाभावादित्यर्थः । ननु प्रतिबन्धकसंसर्गाभावत्वेन मण्याद्यभावकारणतायाः

पुरुषः प्रतिबन्धकः । न च विशिष्टस्यानतिरेके तद्भावातिरेकानुपपत्तिः । प्रतियोगिभेदेनेवाव- च्छेदकभेदेनाप्यभावभेदस्वीकारात् । भवति हि

---

सिद्धान्तितत्वात् । अवश्यं मण्यादेः प्रतिबन्धकत्वमे- ष्टव्यमकिञ्चित्करत्वात् वानुपपन्नमिति महत्सङ्कटमि- त्यनुशयेन पृच्छति । किन्त्विति । कार्यानुकूलकिञ्चिद्ध- र्मविघटकत्वस्य प्रतिबन्धकपदार्थत्वे मणिर्न प्रतिबन्धकः किन्तु कार्यानुकूलस्वाभावविघटनरूपतयाऽप्रतिबन्धक ए- वेत्युत्तरमाह । मण्यादिकमिति । सामग्रीविघटनमेवेति । प्रतिबन्धः सामग्रीपदं तदेकदेशपरम् । न चैवं मण्या- द्यभावस्य प्रतिबन्धकाभावतया कारणत्वानुपपत्ति- रिष्टापत्तेः मण्याद्यभावत्वेनैव कारणत्वात् । कारणीभू- ताभावप्रतियोगिनि पदप्रयोगमात्रस्य स्वार्थिककेनाप्यु- पपत्तेः । न चैवमोषधी प्रतिबन्धिकेति स्त्रीलिङ्गत्वानुपप- त्तिः स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते इति न्यायेन चातुर्वर्ण्यवैनयिकादिवल्लिङ्गव्यत्ययोपपत्ते- रिति भावः । वस्तुतस्त्वनुत्पादस्य प्रतिबन्धकपदार्थत्वे तत्प्रयोजकतया ण्वुलन्तपदप्रयोगस्यापि मण्यादौ सुव- चत्वान्न विशेष्यलिङ्गतानुपपत्तिः न चानुत्पादस्यानादि- तया तदुत्तरसमयसम्बन्धस्यापि तदुभयाभिन्नतया मण्यादेः तत्प्रयोजकतानुपपत्तिर्योगक्षेमसाधारण्यात्तस्यास्तत्रापि प्रायश्चित्तवत्सुवचत्वादिति ध्येयम् । ननूक्तविशिष्टा- भावे का प्रत्याशेत्यत आह । न च विशिष्टस्येति । अव-

केवलदण्डसद्भावे केवलपुरुषसद्भावे तदुभयाभावे च दण्डी पुरुषो नास्तीति व्यवहारः । विशिष्टाभावस्यातिरेकेपि कतमोऽसाविति चेत् । न तदनुपन्यासेप्यक्षतेः । प्रतिनिर्बन्धकरणेऽत्यन्ता-

च्छेदकेति । प्रतियोगितावच्छेदकेत्यर्थः । पृथिव्यादिप्रत्येकरूपाभावनिश्चयेपि वायौ रूपमस्ति न वेति इत्यादिसंशयदर्शनात्सामान्यावच्छिन्नप्रतियोगिकाभावभेदाभ्युपगमादिति भावः । ननूक्तसंशयानुपपत्त्याऽस्तु तत्सिद्धिर्न चेह काचिदनुपपत्तिरित्यत आह । भवति हीति । सन्तु वस्तुतो विशिष्टाभावस्थले विशेषणाद्यभावाः । न तु तद्विषयेयं प्रतीतिस्तदननुगमेप्यनुगताकारत्वात् । विशेषणादीनां प्रतियोगित्वेनानुल्लेखाच्चेति तद्बलात् त्रितयाऽनुगताभावान्तरसिद्धिरिति भावः । अत्र दण्डी पुरुषो नास्तीति व्यवहार इति विशिष्टस्यैव प्रतियोगित्वोल्लेखं वदतो नानुगतसम्बन्धाभावेनान्यथासिद्धिः विशिष्टाभावधीमात्रे सम्बन्धस्य प्रतियोगित्वानवगमात् । अन्यथा घटो नास्तीत्यत्रापि सम्बन्धाभावेनान्यथासिद्धिप्रसङ्गात् । न चात्र प्रतियोगितावच्छेदकसम्बन्धत्वप्रकारकज्ञानाभावान्न तथा संसर्गविधया दण्डदेवदत्तसम्बन्धे भासमानेपि दण्डी देवदत्तो नास्तीति प्रतीतावपि तुल्यत्वात् । सम्बन्धत्वेन तज्ज्ञानस्थलीयविशिष्टाभावप्रतीतेश्च सम्बन्धाभावविषयत्वाभ्युपगमादिति भावः । अत्र-

भाव इति गृहाण । न चात्यन्ताभावस्य सदातनत्वात् उत्तेजकापनयेपि दाहप्रसङ्ग इति वाच्यम् । विशेषणाद्यन्यतमाभावस्य विशिष्टाभावप्रत्या-

---

त्तयावद्विशेषबाधेन बाधं शङ्कते । विशिष्टाभावस्येति । अक्षतेरिति । प्रमाणबलादतिरिक्ताभावसिद्धौ तदन्तर्भावानन्तर्भावचिन्ताया अशक्तिवादत्वादिति भावः । ननु यावद्विशेषबाधादतिरिक्तस्य चानिर्वचनादतिरिक्तसिद्धेरेवासिद्धेः कथं न क्षतिरित्यत आह । अनीति । गृहाणेत्यनेन स्वस्य विशिष्टाभावसिध्यैव कृतार्थतां सूचयति । ननूक्तमुत्तेजकापनयेपि दाहः स्यादित्यत आह । न चेति। विशेषणाद्यन्यतमाभावकाले कार्यं नाम्यदेति कार्यदर्शनादेव विशेषणाद्यन्यतमाभावस्य प्रत्यासत्तित्वकल्पनान्नाप्रत्यासन्नात्ततः कार्यमित्याह विशेषणेति । विशेषणतादिप्रयोजकसम्बन्धपुरस्कारेण विशेषणाद्यवच्छेदकधर्मावच्छिन्नप्रतियोगिकस्य विशेषणाभावादेरित्यर्थः । तेन समवायितया दण्डाभावो चक्रत्वावच्छिन्नदण्डाभावो वा दण्डिन्यपि इति तस्यापि विशिष्टाभावप्रत्यासत्तितापत्तिरिति निरस्तम् । न चैवमावश्यकत्वात्स एव हेतुरस्त्विति वाच्यम् । अननुगमात् । न च प्रत्यासत्तित्वेपि तुल्यता प्रत्यासत्त्यननुगमस्याकिञ्चित्करत्वात् । अननुगमो हि व्यभिचारः कारणताग्रहे विरोधी न प्रत्यासत्तित्वग्रहे । अपि च प्रत्या-

स्वप्यननुगमस्य प्रत्यासन्नकारणताग्रहविरोधित्वे चाक्षुषत्वादिज्ञानत्वावच्छिन्ने चक्षुरादीनामकारणतापत्तिः। संयोगादिप्रत्यासत्तीनामननुगमात्। प्रत्यासत्तितावच्छेदकानुगतधर्माभावाच्च। न चेन्द्रियनिरूपितधर्मत्वादि तथाऽन्योन्याभावादावतिप्रसक्तित्वात्। प्रत्यासत्तिरपि कारणमिति चेत् अस्तु वस्तुतो यत्र येन रूपेणानुगता तत्र तथा को विरोधः। प्रत्यासत्तित्वं पुनरन्यथापीत्येतावत्। यदाहुर्गङ्गेशचरणाः प्रत्यक्षविशेषे इन्द्रियार्थसंनिकर्षविशेषो हेतुरनुगत एवेति। तथापि प्रत्यासत्तीनां वस्तुतः कारणत्वादिहापि तत्प्रसङ्ग इति चेन्न। दाहसामान्ये व्यभिचारात् दाहविशेषे तूभयसमाधेयत्वादिति। एतदेव चास्मिन्पक्षे अनुगमकमनादृत्य कारणतापक्षे विशिष्टविरोध्यभावत्वमनुगमकं वक्ष्यतः शशधरस्य हृदयम्। एवं च प्रत्यासत्तितावच्छेदकानुगतधर्माभावादित्यादिचिन्तामणिकृतो दूषणमलग्नकमिति मन्तव्यम्। ननु भिद्यतामभावः प्रतियोगितावच्छेदकभेदात् यत्र पुरुषस्य प्रतियोगिता इह तु सैव नास्ति तत्र विद्यमानस्य तत्रैवाभावविरोधात्, इति कस्यावच्छेदकं दण्डित्वं यद्भेदादभावभेदः स्यात्। प्रतियोगितावच्छेदकावच्छिन्नेनैवाभावविरोधो न प्रतियोगिमात्रेणेति चेत्। न लाघवेन प्रतियोगित्वस्यैव देशतोत्यन्ताभावविरोधितावच्छेदकत्वात्। अन्यथा घटसत्त्वे घटपटौ न स्त इति तयोः प्रतियोगित्वोल्लेखबलाद्व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिकाभावकल्पनाप्रसङ्गात्साधकबाधकयो-

सत्तात्वेनेष्टत्वात् । यद्वा विशेषणाद्यभावेनैव(१) विशिष्टाभावव्यवहारोपपत्तौ नातिरिक्तविशिष्टाभावकल्पनम् । न चानुगमाभावः विशिष्टविरोध्यभावत्वेनैवानुगमात् । न च किञ्चित्प्रतिबन्धकसद्भावे प्रतिबन्धकान्तराभावमादाय दाहापत्तिरिति । प्रतिबन्धकजातीयासमानाधिकरणप्र-

स्तुल्यत्वात् । पाकरक्ते नायं श्याम इति प्रत्ययादन्योन्याभावस्याव्याप्यवृत्तितापूसङ्गात् । न चैवं सामान्याभावासिद्धिप्रसङ्गः तत्काले सामान्यावच्छिन्नप्रतियोगिमात्रासत्त्वेन तत्र प्रतियोगितावच्छेदकभेदेनाभावभेदे बाधकाभावात् । तस्मात्पुरुषाभावप्रतीतिरसिद्धैव प्रयोगस्तु सविशेषणे हीतिन्यायेनाहं स्वर्गी स्यामितिवदित्यस्वरसादाह । यद्वेति । विशिष्टविरोध्यभावत्वेनेति । विशिष्टधीविरोधिधीविषयाभावत्वेन विशिष्टधीविषयाभावत्वेनेति वार्थः । तेन सहानवस्थाननियमात्मा विरोधो न परस्परविरहरूपतया विशेषणविशेष्याभावस्य प्रत्येकविशिष्टाभावतया तत्प्रत्येकाभावस्य विशिष्टत्वापत्तेः । तदभावाभावस्य तत्त्वात् । न चोभयाभावे उभयं विशिष्टम् एवं भावद्वयं विशिष्टाभावो न तु प्रत्येकाभाव इति प्रत्येकाभावाद्विशिष्टाभावव्यवहारो न स्यात् इति गङ्गेशदूषणमलग्नकं वेदितव्यम् । आदि-

(१) विशेषणाद्यन्यतमाभावेनेति पा० १ पु० ।

तिबन्धकसंसर्गाभावस्य कारणत्वात्। तथैवान्वयव्यतिरेकाभ्यामवधारणात्। परेणापि शक्तिं प्रति प्रतिबन्धकाभावहेतुतायाश्च व्यवस्थाप्यत्वात्। प्रहरं मा दहेत्यादौ तथाभूताभिप्रायविषयसमयस्यैव प्रतिबन्धकत्वम्। तथा च नातिप्रसङ्गः। न च तार्णादावैकजात्यप्रयोजकतया शक्तिस्वीकारः। शक्तिं विनापि पवनादिकारणादेवोपपत्तेः। शक्ति-

पदेन सम्बन्धाभावमपि संगृह्णता यत्र सम्बन्धत्वप्रकारकसम्बन्धज्ञानपूर्विका विशिष्टाभावधीस्तत्र सम्बन्धाभावोऽपि विशिष्टाभावत्वेनाभ्युपगम्यत एव स एवेति परं न संसर्गविधया सम्बन्धभानस्थले प्रतियोगितावच्छेदकप्रकारकतज्ज्ञानाभावादिति सूचितम्। अन्वयव्यभिचारमनूद्य दूषयति। प्रतिबन्धकजातीयेति। प्रतिबन्धकजातीयानधिकरणाधिकरणकप्रतिबन्धकसंसर्गाभावस्येत्यर्थः। परोक्तसर्वदोषेषु साधारणं परिहारमाह। परेणापीति। तथा च स्वव्याघातकरतया सर्वे त्वदीयहेतवो जातय इति भावः। मंत्राभावस्यान्वयव्यभिचारं निरस्यति प्रहरमिति। तथाभूतः कालविशेषावच्छिन्नदाहाभावविषयः अभिप्रायः सङ्कल्पः स च विषयविषयिभावेन समयविशेषस्योपलक्षको न विशेषक इति न तन्नाशेऽपि प्रहराभ्यन्तरे दाहापत्तिरिति भावः। तेन सङ्कल्पनाशे समयस्य स्वतोऽविशेषादित्याद्यस्व-

वादिनापि विजातीयानां कारणानामेकजातीयशक्तिमत्त्वस्यानभ्युपगन्तव्यत्वात् । अन्यथा कार्यविशेषात्कारणविशेषानुमानं कारणविशेषाभावात्कार्यविशेषाभावानुमानं च क्वचिदपि न स्यात् । तज्जातीयशक्तिमतोऽन्यस्मादपि कार्योत्पत्तिसम्भावनाया जागरूकत्वात् । तथापि तृणादीनां वन्हिं प्रति कथं कारणत्वग्रहः । तेषां दहनमात्रं प्रति व्यभिचारात् । दहनावान्तरविशेषस्य च कारणताग्रहोत्तरकल्प्यत्वात् । न चान्यतमत्वं नियामकम् । विशकलितसमवधानेपि कार्यप्रसङ्गात् ।

---

रमपूर्वमुद्देश्यत्वज्ञानाहितसंस्कारविषयकालस्य प्रतिबन्धकत्वाभिधानं चिन्तामणिकृतः किमर्थं ? कथं वा तत्रापि रोगादिना संस्कारविनाशे समयस्य स्वतो विशेषात्प्रहराभ्यन्तरे न दाहः । प्रहरादूर्ध्वमपि संस्कारानुवृत्तौ न दाहप्रतिबन्ध इत्यादि चिन्त्यम् । तृणारणिमणिभवस्याशुशुक्षणेनैकजात्यमप्यन्यथोपपत्तेर्न शक्तिगमकमित्याह । न च तार्णादाविति । पवनादीति । तदुत्कर्षेण वन्हेरुत्कर्षादिति भावः । आदिपदेन दाहकस्य स्पर्शवदवयवतत्संयोगसङ्ग्रहः । न च शक्तिकल्पनेप्यैकजात्यमुपपाद्यत इति मुधा तत्कल्पनमित्याह । शक्तिवादिनापीति । न स्यादिति । दृश्यते चेति शेषः । जागरूकत्वादिति ।

व्यक्तिविशेषान्वयव्यतिरेकयो रासभादिसाधारणत्वादिति । मैवं । तुल्यत्वात् । तत्रापि हि नैकशक्तिमत्त्वेन कारणत्वं गृह्यते किन्तु कारणत्वग्रहानन्तरं शक्तिकल्पनं युक्तम्। अन्यथा रासभस्यापि वन्हिशक्तिकल्पनाप्रसङ्गात्। तथापि सुहृद्भावेन यदि पृच्छसि तदोच्यते । यज्जात्तीयमेलकात् तृणासमवधाने(१) कार्यं न जायते तज्जातीयमेलकादेव तृणसमवधाने जायत इत्येवंरूपान्व-

व्याप्तिग्रहविघटनाय प्रवर्तमानत्वादित्यर्थः । तृणादिकारणताया अन्यथानुपपत्तेरवश्यं तृणादावेकजातीयशक्तिरभ्युपगन्तव्या विजातीयेष्वेकशक्तिकत्वानभ्युपगमस्यौत्सर्गिकत्वेनाप्युपपत्तेरिति शङ्कते तथापीति । कथमिति । किन्नु वन्हिसामान्ये उत तद्विशेषे इत्यर्थः । नाद्य इत्याह तेषामिति । न द्वितीय इत्याह दहनावान्तरेति । नन्वस्तु तृणाद्यन्यतमत्वेन वन्हिसामान्य एव कारणतेत्याशंक्याह । न चान्यतमत्वमिति । विशकलितेति । निर्मन्थने तृणस्य फूत्कारेण मणेस्तरणिकिरणैश्चारणेरित्यादिरूप इत्यर्थः । यथा तृणादीनामन्यतमत्वेन वन्हिकारणत्वम् एवमेव फूत्कारादीनां तथा च फूत्कारादिसमवधाने कारणतावच्छेदकावच्छिन्नसकलसद्भावाद्वन्ह्युत्पत्तिर्दुर्वारेति भावः । यद्यप्येकजातीयशक्ति-

(१) तृणासमवधाने- नास्ति १ पु० ।

व्यतिरेकाभ्यामेव तदवधारणात् । न चैतद्रा-
सभादिसाधारणं तृणासमवहितेपि तस्मिन्मेलके
रासभसमवधानेपि कार्यानुत्पादात् । दण्डव्य-

मत्त्वेन कारणतावादेपि तुल्यमिदम् अन्वयव्यतिरेकाभ्यां तृणफूत्कारादिशक्त्योः सहकारितानियमकल्पनस्य च कार्यैकजात्येऽनुपपत्तेः । शक्त्योरकारणत्वेन परस्परसहकारितानुपपत्तेः । तृणफूत्कारयोरेव तथा नियमस्य सुवचत्वाच्च तथापि परमतदूषणाभिनिवेशेनैवमुक्तम् । अत एवाग्रे तुल्यत्वेनैवोत्तरयिष्यतीति द्रष्टव्यम् । नन्वव्यभिचारादस्तु व्यक्तिविशेषे कारणत्वग्रह इत्यत आह । व्यक्तीति । प्रवृत्तिविषये तृणव्यक्तिविशेषे वन्हिविशेषान्वयव्यतिरेकग्रहायोगाद्रासभादितुल्यत्वाच्चेति भावः । एकशक्तिकत्वेनापि न कारणत्वमन्यतमत्वपक्षोक्तदूषणातुल्यत्वादित्याह । मैवं तुल्यत्वादिति । न च कारणताग्रहकाले तदुपस्थितिरपीत्याशयेनाह । तवापीति । विपर्ययः किं न स्यादित्याह । अन्यथेति । अविनिगमादिति भावः । कथं तर्हि तृणादीनां वन्हौ कारणताग्रह इत्यत आह । तथापीति । तज्जातीयमेलकादिति । अरणिमण्यभाववत इत्यर्थः । तदवधारणात्कारणतावधारणात् । नन्वगृहीतकारणताके शक्तेरिवागृहीतशक्तिके कारणताया अपि कल्पनमयुक्तं रासभादिसाधारण्यादत आह । न चैतदिति । अन्वयव्यतिरेकरूपं ग्राहकमित्यर्थः । तथापि विरोधिनि व्यभि-

तिरेकेणापि पटोत्पत्तिदर्शनवत्तृणव्यतिरेकेपि दहनोत्पत्तिदर्शनात् कथं तृणकारणताग्रह इति चेन्न । एवम्भूतव्यभिचारग्रहस्य पूर्वोक्तान्वयव्यतिरेकापरिपन्थित्वात्। यत्र तु न तथाभूतान्वयव्यतिरेकग्रहः तत्र तथाभूत(१)व्यभिचारस्य विरो-

चारज्ञाने कथं नियमगर्भकारणताग्रह इति शंकते दण्डेति । व्यभिचारज्ञानं स्वावच्छेदकावच्छिन्नकारणताग्रहे विरोधि न कारणताग्रहमात्रे तद्वन्हित्वेन व्यभिचारग्रहेपि वन्हित्वेन धूमत्वावच्छिन्नकारणताग्रहाद्वन्हौ धूमार्थिप्रवृत्तिदर्शनात् । तदिह तृणत्वेन व्यभिचारज्ञानं तेनैव रूपेण कारणताग्रहं विरुणद्धु । अवच्छेदकौदासीन्येन तृणत्वसमानाधिकरणकारणताग्रहे तु को विरोध इत्याह । एवंभूतेति । नन्वेवं रासभत्वेन व्यभिचारज्ञानमपि तदनवच्छिन्नतत्समानाधिकरणवन्हिकारणताग्रहे न प्रतिबन्धकं स्यादत आह । यत्र त्विति । नन्वेवमप्यवच्छेदकरूपानुपस्थितौ कथमवच्छेद्यकारणताग्रहः । न च यागस्वर्गकार्यकारणभावग्रहवदेतत्स्यादिति वाच्यम् । कारणतायाः ससंबन्धिकपदार्थत्वेन तत्प्रत्यक्षे संबन्धितावच्छेदकप्रकारकसंबन्धिज्ञानस्यासाधारणकारणत्वादिति चेन्न । अयं घट इति समवायप्रत्यक्षे व्यभिचारात् । अथ येन समवायत्वा-

(१) तथा व्यभिचारस्येति-पा० १ पु० ।

धित्वात् । अन्यथा वह्न्यर्थिनां तृणादिषु निःशङ्क-प्रवृत्त्यनुपपत्तेः । यद्वा प्रदीपादिष्ववान्तरजातिभेदस्य प्रत्यक्षसिद्धत्वात् इति विशिष्यैवान्वयव्यतिरेकाभ्यां कारणत्वग्रह इति न किंचिदनुपपन्नम् । पिपासोपशमनसमर्थं जलमित्यादौ सह-

दिना रूपेण ससंबन्धिकता तत्त्वेन तत्प्रत्यक्षे तस्य हेतुत्वान्न व्यभिचारः । तथापि संबन्धिमात्रवृत्तित्वस्यैव तत्रावच्छेदकपदार्थत्वात्प्रकृते चेयं वन्हिस्तृणजन्येति कारणताप्रत्यक्षस्यापि तृणकार्यताश्रयमात्रवृत्त्येतद्वन्हित्वप्रकारकज्ञानसाध्यत्वसंभवात् । अस्यैव कल्पनाद्वयस्याप्रामाणिकत्वं निरस्यति । अन्यथेति । यद्यप्युपलक्षकरूपव्यभिचारोपस्थित्या तदन्यूनानतिरिक्तवृत्तिरूपानुपस्थित्या च न कारणताप्रत्यक्षमित्यर्थः । तृणाद्युत्कर्षेण वन्हेरुत्कर्षानुपपत्तेश्चेत्यपि द्रष्टव्यम् । प्राचां मतमाह यद्वेति । आलोकतारतम्यप्रयोजकतावच्छेदकस्येति शेषः । प्रत्यक्षसिद्धत्वादिति । तथाच तद्दृष्टान्तेन विवादपदमग्नयो वन्हित्वावान्तरजातिमन्तः नियतसहकार्यनुप्रवेशेन जायमानत्वादित्यनुमानेन तार्णादावपि जातिभेदस्यापि कल्पनादिति भावः । वैजात्यानुमितेः पूर्वं नियतसहकार्यनुप्रवेशजन्यत्वस्य हेतोरग्रहात्पूर्वपक्षोपजीवनमावश्यकमित्यस्वरसो यद्वेत्यादिनास्यया सूचितः । न किंचिदनुपपन्नमिति । तथा च किमतिरिक्तया शक्त्येति शेषः । पिपासोपशमनसामर्थ्यानुमानान्यथोप-

कारिविरहप्रयुक्तकार्याभाववत्त्वमेव अनुमेयन्तथा चैतदनुरोधेनापि शक्तिसिद्धिः । ननु दीपस्य बीजोपरि नयनं नाङ्कुरप्रतिबन्धकं तदनन्तरमङ्कुरोत्पादप्रसङ्गात् । तस्मादगत्या(१)ङ्कुरोत्पादानुकूलं बीजनिष्ठं किंचिदतीन्द्रियं दीपोपरि नयनस्य विनाश्यमवश्यं स्वीकरणीयमिति । मैवं । दीपोपरि संबन्धात्यन्ताभावस्यानादितत्संसर्गाभावस्य वा कारणत्वात् । न चानुमानाच्छक्तिसिद्धिः ।

पत्तिं स्वरूपासिद्ध्या दूषयति । पिपासेति । ननु सामग्रीसमवधानात्पिपासामुपशमयति जले व्यभिचारात्सज्जातीयत्वं वाच्यम् । तच्च जलत्वमेव तत्र चोक्तमेव दूषणम् प्रत्यक्षेणैव ग्रहणादिसीति चेन्न स्वरूपेण जलत्वस्य ग्रहेपि अनेनोपहितस्याग्रहादिति भावः । शक्तौ साधकान्तरं शङ्कते ननु दीपस्येति । तदनन्तरमिति । दीपोपरि नयनादित्यर्थः । नयनकर्मणः क्षणिकतया कारणीभूतस्य सुलभत्वादिति भावः । अन्यथोपपत्त्या दूषयति मैवमिति । अत्यन्ताभावपक्षे अङ्कुरशिरस्कतादशायां जातदीपोपरि सम्बन्धाद्बीजात्प्रत्यभिज्ञासिद्धेः । भेदे पूर्वबीजे दीपोपरि सम्बन्धप्रागभाव एव नास्तिताभाव इत्यस्वरसाभासादाह । अनादीति । ध्वंसनिरासायानादीति । अन्योन्याभावव्यावृत्त्यै संसर्गेति ।

(१) अगत्या-नास्ति २ पु० ।

प्रथमानुमानेऽचाक्षुषद्रव्यत्वस्यो(१)पाधित्वात् । द्वितीयानुमाने प्रत्यक्षगुणान्यत्वस्य संयोगेतरत्वस्य वोपाधेः सत्त्वात् । एकवृत्त्या साध्यविशेषणे द्रव्यत्वस्योपाधेः सत्त्वात् । तृतीयानुमाने स्थितिस्थापकेन सिद्धसाधनत्वात् । अचाक्षुषद्र-

---

वस्तुतः प्रथमकल्पो युक्तः । अङ्कुरजननात्पूर्वं दीपसम्बन्धेऽङ्कुरानुत्पादात् । उत्तरकालं जनकस्य बीजस्यैवाभावात् । अङ्कुरशिरस्कस्य परिमाणादिभेदेन पूर्वबीजादन्यत्वात्तत्रात्यन्ताभावाविरोधादिति द्रष्टव्यम् ? प्रथमानुमानेऽचाक्षुषद्रव्यत्वस्येति । चाक्षुषद्रव्यान्यत्वस्येत्यर्थः । अतोऽखण्डाभावलाभान्न द्रव्यपदवैयर्थ्यं न वा तेजोद्व्यणुके साध्यव्यापकतेति भावः । द्वितीयानुमाने उद्देश्यसिद्ध्यर्थं कार्यानुकूलत्ववदवृत्तित्वं विशेषणं विवक्षितम् । न वेति विकल्प्यान्त्ये दोषमाह । द्वितीयानुमाने प्रत्यक्षगुणान्यत्वस्येति । आत्मनि साध्याव्यापकतानिवृत्त्यै गुणेति । धर्माधर्मयोस्तत्त्वे प्रत्यक्षेति । प्रत्यक्षं च लौकिकमभिमतम् । न च करवन्हिद्व्यणुकसंयोगात्पक्षैकदेशाद्व्यावृत्तिरुपाधेर्दोषः अन्धकारो द्रव्यं स्वातन्त्र्येण प्रमीयमाणत्वादित्यादावश्रावणत्वस्यैव व्यभिचारोन्नायकत्वाभिघातादिति भावः । आद्ये दोषमाह । एकवृत्त्येति । एकवृत्तिघटितसाध्यकरण इत्यर्थः ।

---

(१) अद्रव्यद्रव्यत्वस्येति पा० १ पु० ।

व्यत्वस्यैवोपाधेस्तथैव सत्त्वात् । सर्वेषामप्रयोजकत्वाच्चेति । इति सहजशक्तिवादः ।

---

तेन वाद्यनुक्तविशेषणप्रक्षेपेण साध्यमुत्प्रेक्ष्योपाध्यादिदोषोद्भावनमनुचितमिति निरस्तम् । तृतीयानुमाने स्थितिस्थापकेनेति तस्यापि स्वकार्यानुकूलत्वादित्यर्थः । द्रव्यत्वावान्तरजात्या सजातीये सुवर्णादितेजसि दर्शनेन तैलादाविव वन्हावपि स्थितिस्थापककल्पनादन्यथा तैलादावपि तदसाधारणकार्यादर्शनान्न स्थितिस्थापकः सिध्येदिति भावः । ननु कार्यपदेन स्वनिमित्तकमेव तदुक्तमतो दूषणान्तरमाहाचाक्षुष इति । तथैव प्रथमानुमानवदित्यर्थः । एवं च गुरुत्वादिकमादाय घटादौ साध्याव्यापकतापरिहारार्थं पृथिवीजलभिन्नद्रव्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकतोपवर्णनमनुपयुक्तम् । ननु साध्यव्याप्यहेत्वव्यापकतया सर्वेषां साध्याव्यापकत्वादनुपाधित्वमत आह । सर्वेषामेवेति । तथाच साध्याव्यापकतानुमापकहेतोरसिद्धिरिति भावः । बहिरिन्द्रियप्रत्यक्षाणि दाहजनकानि तद्दाहानुकूलाद्विष्टातीन्द्रियसमवायीनि बहिरिन्द्रियप्रत्यक्षत्वात् घटवत् । न चेह दाहाजनकत्वमुपाधिः । प्रतिबन्धकाभावे साध्याव्यापकत्वादिति चकारार्थः ।

इति सकलसामन्तप्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां सहजशक्तिप्रकरणम् ॥

नन्वस्त्वाधेयशक्तिः । तथाहि । व्रीहीन्प्रोक्षतीत्यादौ व्रीह्यादीनां प्रोक्षणादिकर्मता प्रतीयते । सा च तत्फलाधारत्वव्यतिरेकेणानुपपद्यमाना व्रीह्यादेः तत्फलाधारतामवगमयति । कथं वाऽन्यथाप्रोक्षितस्यैव व्रीह्यादेरुत्तरत्रोपयोगः । प्रोक्षणस्य चिरध्वस्तत्वात् । न च

आधेयशक्तावन्यथोक्तिमप्रतिसन्धानः श्रौतं प्रोक्षणादि व्रीहिसमवेतातीन्द्रियकिंचिज्जनकं न वेति संशये शंकते । नन्विति । श्रौतं प्रोक्षणादि व्रीह्यादिनिष्ठातीन्द्रियकिंचिद्धर्माधायकमस्त्वित्यर्थः । तेन नाप्रसिद्धिः । तत्र कर्मत्वानुपपत्तिरूपामर्थापत्तिं प्रमाणयति । तथाहीत्यादिना । तत्फलाधारत्वव्यतिरेकेणेति । परसमवेतक्रियाफलशालिन एव कर्मपदार्थत्वादिति भावः । तत्फलाधारतामवगमयतीति फलस्य च शक्तेरेव परिशेषादिति भावः । अवघातादौ प्रोक्षितव्रीह्युपादाननियमावगमितप्रोक्षणकारणतानुपपत्तिरूपमर्थापत्त्यन्तरमाह । कथं वेति । उपयोगः कारणता निर्व्यापारत्वेन प्रोक्षणकारणताभङ्गे प्रोक्षितव्रीहीणामप्यप्रोक्षिताविशेषादिति भावः । ननु व्यापारवन्निर्व्यापारं प्रोक्षणमेव कारणं विशेषः स्यादित्यत आह । प्रोक्षणस्येति । चिरध्वस्तकारणतायाश्च व्यापारव्याप्तत्वादिति भावः । अस्तु तर्हि स्वरूपव्यापाराभ्यामभावादिकारणमेव प्रोक्षणम-

प्रोक्षणमुपलक्षणं ध्वंसव्यापारकत्वं वा । यागादावपि तथाभावप्रसङ्गात् । प्रोक्षणस्य पुरुषसमवेतसंस्कारजनकत्वे व्रीहिकर्म्मत्वानुपपत्तेरुक्तत्वाच्च । न च संस्कारेण परम्परासम्बन्धात्कर्मतोपपत्तिः । साक्षात्सम्बन्धाबाधे परम्परासम्बन्धस्य कल्पनानर्हत्वात् । अतिप्रसङ्गाच्च । किञ्च ।

---

वघातादौ उपलक्षणतया व्यावर्त्तकन्तु व्रीहेस्याद्‌गुरुकुरु इव टीकाक्षेत्रयोरित्याशंक्याह । न चेति । आनुपूर्वीसंस्थानविशेषयोस्तत्रैवात्रोपलक्ष्यतावच्छेदकस्याननुगतानतिप्रसक्तस्य दुर्निरूपत्वान्नोपलक्षणत्वमपि युक्तमित्यरुचेराह । ध्वंसव्यापारकत्वेति । प्रोक्षिता व्रीहयोऽवघाताय कल्पन्त इति वाक्यशेषे क्तप्रत्ययबलेन तद्ध्वंसस्यावघातहेतुतावगमादिति भाव इति वदन्ति । वाक्यशेषोयमप्रामाणिक इत्यपरे । तथाभावो यच्चोपलक्षणत्वं ध्वंसव्यापारकत्वं वा । तथाच स्वीकुरु वा शक्तिं परिहर वा पूर्वमिति दुस्तरा प्रतिबन्दिः । कल्पनाहेतोर्लाघवस्योभयत्र तुल्यत्वादिति भावः । अस्तु तर्हि यागवदेवापूर्वद्वारकत्वं नेत्याह । प्रोक्षणस्येति । व्रीहिकर्मत्वेति । तेषामपूर्वानाश्रयत्वादिति भावः । पुरुषस्य तदापत्तेश्चेति द्रष्टव्यम् । परम्परासम्बन्धादिति । साक्षात्फलशालित्वस्यालक्षणत्वादिति भावः । साक्षादिति । लाघवानुगृहीतेन फलकल्पकप्रमाणेन साक्षा-

कामिनीचरणाघातात्पुष्पोदयदर्शनादाघातजन्यातिशयाश्रयत्वमशोकस्य कल्पनीयम् । तथा कांस्यादौ भस्मादिसंयोगेनावश्यमस्यातिशयाश्रयत्वं स्वीकर्त्तव्यम् । अन्यस्य तत्र शुद्धिपदार्थस्य निर्वक्तुमशक्यत्वात् । एवं प्रतिमादावपि प्रतिष्ठादिप्रयोज्यमतिशयाधानमूहनीयम् । किञ्च कलमबीजादेरापरमाण्वन्तभङ्गात्परमाणुष्ववान्तरजातेरभावात्कथमतिशयमन्तरेण तेभ्यः(१) कार्यविशेषो जायत इति ।

अत्रोच्यते । प्रोक्षणजन्यसंयोगरूपफलभा-

त्संबन्धस्यैवोत्सर्गतः प्रमितेरिति भावः । ननु तर्हि पदार्थान्तरकल्पनागौरवमपवादः स्यादत आह । अतिप्रसङ्गाच्चेति । करणादिष्विति भावः । अर्थापत्त्यन्तरमाह । किञ्च कामिनीत्यादिना । व्यवहितोत्तरकाल इति शेषः । आधेयशक्तौ मानान्तरमाह । तथेति । यद्यप्युत्पत्तिशिष्टचाण्डालाद्यस्पृष्टे कांस्यादौ भस्मादियोगं विनैव विद्यमानायाः शुद्धेर्नैसर्गिकशक्तित्वमुचितं न भस्मादियोगाधेयशक्तित्वं तदाधेयाया अपि आवश्यकं तद्वदेव शक्यनिर्वचनत्वं तथापि भस्मादियोगाधेयायाः शुद्धेः शक्तित्वमेव शुद्धेराधेयशक्तित्वं विवक्षितमिति ।

सिद्धान्ताभिधानं प्रतिजानीते अत्रोच्यत इति ।

(१) तेभ्य इति नास्ति १ पु० ।

गित्वेनैव व्रीहिकर्मतोपपत्तौ न तदर्थं व्रीहिनिष्ठातिशयकल्पनम्। न च संयोगस्य न प्रोक्षणफलत्वम् उत्तरसंयोगावच्छिन्नद्रवद्द्रव्यकर्मविशेषस्यैव प्रोक्षणपदार्थत्वादिति वाच्यम्। ग्रामं गच्छतीत्यादावपि तथात्वेन ग्रामकर्मत्वानुपपत्तिप्रसङ्गात्। तस्माद्यथा तत्र संयोगस्य गमनविशेषत्वेपि तदाधारतया ग्रामकर्मत्वं भवति तथात्रापीति वाच्यम्। कथमन्यथा सक्तून् प्रोक्षतीत्यादौ लौकिकप्रोक्षणे सक्तूनां कर्मत्वम्।

---

कर्मत्वमन्यथोपपत्तेर्न शक्तिगमकमित्याह। प्रोक्षणेति। लौकिकप्रोक्षणकर्मतोपपादकतयाऽवश्यकल्प्येनेत्येवकारार्थः। व्रीहिनिष्ठेति। संयोगान्येत्यपि द्रष्टव्यम्। संयोगस्य स्वविशेषितफलत्वं शत आत्माश्रयात्फलान्तरं सेत्स्यति इत्याशंक्याह। न चेति। तथात्वेन संयोगस्य फलत्वाभावेन। अथ संयोगो न गमने विशेषणम् किन्तु स्पन्दनविशेषस्योपलक्षणम्। अन्यथावच्छेदकरूपापरिचये जनकत्वस्यैवाग्रहापत्तेः। तत्त्वे च तस्यैवावश्यकस्याव्यभिचारेण संयोगजनकत्वस्य वैयर्थ्यादतो नात्माश्रय इत्याशंक्य प्रकृतेपि तुल्यमित्याशयेनोपसंहरति। तस्मादिति। विशेषणत्वे परिचायकत्व इत्यर्थः। नन्वनन्यगतिकतया गमने तथा न तु प्रोक्षणेपि विशेषणत्वस्यौत्सर्गिकत्वादत आह। कथमन्यथेति। संयोगस्योपलक्ष-

किञ्च व्रीहेः प्रोक्षणजन्यसंस्काराश्रयत्वे कल्प्यमाने प्रतिव्रीहि भिन्नसंस्काराः कल्पनीयाः । तावद्वृत्तिरेक एव वा । न तावदाद्यः । गौरवप्रसङ्गात् । न द्वितीयः । किंचिद्व्रीहिविनाशे तन्नाशस्यावश्यकत्वात् व्रीह्यन्तरस्यापि उत्तरत्र प्रयोगो न स्यात् । न च यावदाश्रयनाशात्तन्नाश इति युक्तम् । यावत्त्वस्यापि गौरवकरत्वेनानवच्छेदकत्वात् । यद्वा पुरुषसमवेतेनापि संस्कारेण स्वरूपसंबन्धाद्व्रीहेः कर्मतोपपत्तिः । किञ्च किं तत्कर्मत्वम् यस्यात्रानुपपत्तिः । न तावत्क्रि-

णत्वानभ्युपगम इत्यर्थः । न च वैदिकप्रोक्षणपदार्थ एव तथा लोकवेदाधिकरणविरोधादिति भावः । न केवलमन्यथोपपत्तिः किन्तु तदङ्गीकारे बाधकमपीत्याह । किंचेति । व्रीहेरिति जातावेकवचनम् । गौरवेति । न चेदं प्रामाणिकमुक्तवक्ष्यमाणयुक्तिभ्य।मन्यथोपपत्तेरिति भावः । आवश्यकत्वादिति । आश्रयनाशेनैवाश्रितकार्यनाशहेतुत्वावगमादिति भावः । अनवच्छेदकत्वादिति । कारणतायामिति शेषः । प्रोक्षणस्यापूर्वजनकत्वे व्रीहिकर्मत्वानुपपत्तिरतिप्रसङ्गो वेति यदुक्तं तदुद्धरति । यद्वेत्यादिना । ज्ञानसंस्कारवदिति शेषः । न चातिप्रसङ्गोऽपि स्वरूपसम्बन्धस्य फलबलकल्प्यत्वादिति भावः । न च व्रीहिनिष्ठातिशयानङ्गीकारे प्रोक्षितप्रो-

याफलभागित्वम् । घटं जानाति देवदत्त इत्यादौ ज्ञानलक्षणक्रियाजन्यसंस्कारफलभागित्वेनात्मनः कर्मत्वप्रसङ्गात् । न चान्यसमवेतक्रियाफलभागित्वं कर्मत्वम् । आत्मनात्मानं जानामीत्यत्रात्मनोऽकर्मत्वप्रसङ्गात् । न चात्मनोऽत्रामुख्यकर्मत्वम् । मुख्यत्वे बाधकाभावात् । तस्मात् करणव्यापा-

क्षितव्रीहीणामविशेषादवघातादौ प्रोक्षितोपादाननियमानुपपत्तिः । अपूर्वीयत्वस्यैव स्वरूपसम्बन्धप्रयुक्तस्य विशेषत्वात् । किन्तु फलभागित्वं कर्मत्वमेव न किं स्वरूपसम्बन्धादिकुसृष्टयेत्याह । किंच तदिति । संस्कारफलभागित्वेनेति । विषयतया घटस्येव समवायितयात्मनोपि संस्कारभागित्वादित्यर्थः । उपेक्षते घटमित्यादौ संस्काराव्यापारापिफलाभावेन घटादेरकर्मत्वापत्तेश्चेत्यपि द्रष्टव्यम् । अन्यसमवेतेति । ज्ञानक्रिया चात्मसमवेतैवेति नातिव्याप्तिरिति भावः । आत्मनेति । न च स्वरूपभेदादुपपत्तिः । अन्योन्याभावस्य व्याप्यवृत्तित्वादिति भावः । बाधकाभावादिति । न च लक्षणानुपपत्तिर्बाधिका लक्षणत्वसिद्धेरमुख्यत्वासिद्ध्यधीनतयान्योन्याश्रयप्रसङ्गादिति भावः । किञ्चान्यसमवेतत्वं क्रियाविशेषणं फलविशेषणं वा । आद्येपि अन्यत्वं क्रियापेक्षया फलाश्रयापेक्षया वा । नाद्यः क्रियाश्रयादन्यत्र क्रियाया असंभवात् । न द्वितीयः । ग्रामं गच्छतीत्यादौ गमन-

क्रियायाः संयोगरूपफलाश्रयाद्देवदत्तशरीरादन्यत्राव-मवेतत्वेन ग्रामादेरकर्मत्वप्रसङ्गात् । अन्योन्याभावस्य व्याप्यवृत्तित्वात् फलात्यन्ताभावत्वमन्यत्वमिति चेत् । न संयोगात्यन्ताभाववति गन्तर्यप्रसङ्गात् । न द्वितीयः । उक्तविकल्पक्रमेणातिव्याप्त्यसंभवप्रसङ्गात् । गमनक्रिया-श्रयदेवदत्तान्यग्रामनिष्ठयोः संयोगरूपफलभागिनि देव-दत्त एवातिव्याप्तेः । फलाश्रयादन्यत्र फलासंभवाच्च । कर्मापेक्षमेवान्यत्वं विवक्षितमिति चेन्न । आत्माश्रय-प्रसङ्गात् । कर्त्रैवान्यपदार्थ इति चेत् । न कर्तर्येवाति-व्याप्तेः । तत्क्रियानधिकरणत्वे सति तत्क्रियाफलशालि-त्वम् समुदायार्थ इति चेत् न । अपादानेऽतिव्याप्तेः । वस्तुतस्तत्कर्मापि । तत्त्वाविवक्षया तु वृक्षात्पर्णं पततीत्यादौ द्वितीया नेति चेत् वस्तुसतस्तस्य कदाचिद्विव-क्षायामेवमपि प्रसङ्गात् । अपादाने तन्न विवक्ष्यत एवेति शाब्दिकरीतिरिति चेद्ब्रूतैवं सर्वथा निवृत्तकर्मव्यवहारेऽपि तत्र स्वकृतलक्षणानुरोधेन कर्मत्वं ब्रुवन्वस्तुत्वमेव तत्किं न ब्रूषे । अपादानान्यत्वमस्तु विशेषणमिति चेन्न । घटं करोतीत्यादौ घटादेरकर्मत्वापत्तेः । घटस्यैव कृत्यर्थफलत्वात् । न च घटपदेऽवयवलक्षणास्वीकारा-त्तेषामेवाकर्मत्वं बोध्यते तच्च युक्तमेव कृतिफलघटा-श्रयत्वादिति वाच्यम् । प्रतीतिमुल्लङ्घ्यापि स्वकृतलक्ष-णानुरोधेन लक्षणाकल्पने कर्त्तुरीप्सिततममेव कर्म तथा युक्तानीप्सितादौ तु लक्षणया प्रयोग इत्यस्यापि सुवच-त्वप्रसङ्गात् । प्रतीतिसिद्धविषयत्वमात्रलक्षणाया द्विती-

रविषयकारकत्वादिकमन्यत्कर्मलक्षणं वाच्यम् । तथा च व्रीहेः प्रोक्षणफलानाश्रयत्वेपि न कर्मत्वानुपपत्तिः । न च(१) कामिनीचरणाघातव्यापारकत्वेन वृक्षस्यातिशयकल्पनमपि वाच्यम् । कामिनी(२)चरणाघातजनिताध्यात्मिकवायुक्रियाजनितभागान्तराकर्षणेन वृक्षोपष्टंभादपि तदुपपत्तेः ।

योपपत्तौ घटपदे प्रतीयमानावयवलक्षणायां मानाभावाच्च । अस्तु त्वदुक्त्यैव परिहारः । किं नः छिन्नमिति चेन्न । करोत्यादीनां सकर्मकत्वमेवेत्यवेहि । किञ्च दुह्याद्यकथितकर्मण्यव्याप्तेः । न हि वस्तुतोपादानाधाराद्यकथितत्वमात्रेण तदन्यदिति युक्तिमत् । किञ्च वृक्षश्चलतीत्याकाशतद्वृत्तिपरमाण्वादेः कर्मतापत्तिरित्यलमिह क्षोदीसि भूयसायासेन । करणव्यापारविषयत्वादिकमिति । नन्वत्र करणं किंचिद्विवक्षितम् यावद्वा । नाद्यः । देवदत्त आत्मना हस्तेन दात्रेण तृणं छिनत्तीत्यादौ हस्तादिकरणव्यापारविषये दात्रादावतिव्याप्तेः । न द्वितीयः । मनसात्मानं ध्यायतीत्यादावेकमात्रकरणकेनेकाश्रयवाचि यावत्पदार्थायोगात् । किञ्च कारणं वस्तुसद्विवक्षितं पदोपात्तं वा नाद्यः । वर्द्धते वृक्ष इत्यादौ वस्तुसत्कारणीभूतपयःप्रभृतिसेकादिव्यापारविषये वृ-

(१) नच–नास्ति २ पु० ।

(२) कामिनी–नास्ति १ पु० ।

चरणाघातेन तत्तत्कर्तृ समवेतमपूर्वमुत्पाद्यत इति केचित् । न चान्यस्य शुद्धिपदार्थस्य निर्वक्तुमशक्य-

---

त्वादावतिव्याप्तेः । सेकवृक्षयोर्विषयविषयिभावानभ्युपगमे सिञ्चतीत्यादावपि तदभावप्रसङ्गात् । न द्वितीयः । ग्रामं गच्छतीत्यादौ करणस्य पदानुपात्तत्वेनातिव्याप्तेरित्यस्वरसादाह इत्यादिकमिति । अनुगतकर्मत्वनिर्वचने प्रयोजनाभावात् । द्वितीयादीनामनेकार्थताया एव युक्तत्वात्कर्तुरीप्सिततमत्वादि पृथगेव वाच्यमित्यर्थः । तृतीयार्थापत्तावन्यथोपपत्तिमाह । कामिनीचरणेति । अतिशयकल्पनेऽपि समवाय्यादिनिरपेक्षैव पुष्पोत्पत्तिरिति तदावश्यकत्वे तेनैवान्यथोपपत्तिरिति भावः । आध्यात्मिको वायुप्राणः क्षतभग्नसंरोहणादिना वृक्षेष्वपि प्राणकल्पनात् । यद्यपि चरणाघातेन वायुक्रियैवोर्द्ध्वदेशसंयोगजनिका भागान्तरक्रियापि संभवतीति आध्यात्मिकवायुक्रियया तदाकर्षणाभिधानमनर्थकम् । अत एव कामिनीचरणाभिघातेनैव वृक्षोपष्टम्भकभागान्तराकर्षणमुक्तं चिन्तामणिकृता तथापि प्राणक्रियाकृतस्यैवावयवसंयोगविशेषस्य देहाद्यारम्भकत्वं प्राणप्रयोज्याश्रितपीतावयवसंयोगेनेवान्नलेपादिना तादृशशरीरपुष्टयदर्शनादिति भावः । आघातकृतायास्तज्जनितवायुक्रियाकृताया वावयवक्रियाया अनन्तरक्षण एव पुष्पोत्पत्तिदर्शनप्रसङ्गात् । व्यवहितमासादिकाले च तदभावात्तत्परम्पराकल्पने च गौरवान्न पुष्पोत्पादः स्यादिति व्यवहितफलो-

त्वात् कांस्यादौ भस्मसंयोगप्रयोज्यातिशयकल्पन-
मिति युक्तम्। तत्तत्समयावच्छेदेन भस्मादिसंयोग-
प्रतियोगिकानादिसंसर्गाभावविरहस्य तत्समान-
कालीनचाण्डालस्पर्शादिप्रतियोगिकयावदनादि-
संसर्गाभावसमानाधिकरणस्य शुद्धिपदार्थत्वात् ।

---

पपादकतया क्लृप्तमपूर्वमेव कल्पयितुं युक्तमिति मन्वा-
नानां मतमाह । चरणाघातेनेति । अपूर्वं नाधर्मस्तस्या-
निषिद्धत्वात् । न धर्मः तज्जनकत्वे शौचशिखाबन्ध-
पवित्राचमनप्रयोगादिसाधारणाङ्गान्वयप्रसङ्गात् । कर्तुः
पुण्योपयोगाभावे तत्रापूर्वानुपपत्तिः । अलौकिकफुल्लका-
पूर्वस्य च विश्वजनीनपुष्पोपभोगसाध्यस्याघाताजन्य-
त्वादाघातस्याविहितत्वाच्च नापूर्वं युक्तमिति सूच-
यति केचिदिति । आहत इति भूतानुशिष्टानिष्टो-
पस्थापितस्याघातध्वंसस्यैव स्थायिनो नियतकालादि-
सहकृतस्य पुष्योदयहेतुत्वमिति गङ्गेशचरणाः । तदन्यस्य
शुद्धिपदार्थस्यानिर्वचनं विघटयति । नेत्यादिशुद्धि-
पदार्थत्वादित्यन्तेन । तत्तत्समयावच्छेदेनेति । अभा-
वविरहः शुद्धिरित्युक्ते सामान्याभावविवक्षायामसम्भवः
ताम्रादेर्यत्किंचिदभावाश्रयत्वात् । अन्ततोभावविरहाभा-
वस्यैवाश्रयत्वात् । यत्किंचिदभावविवक्षायां त्वशुद्धेऽति-
व्याप्तिः । तत्रापि यत्किंचिदभावविरहस्य स्वसमानका-
लीनचाण्डालादिस्पर्शादिप्रतियोगिकयावदनादिसंसर्गा-

भावसमानाधिकरणस्य सत्त्वादतः संसर्गेत्यभावविशेषणम् । एवमपि पूर्वोक्तपक्षद्वयाश्रये यथाक्रममसम्भवातिव्याप्ती । अतो भस्मादिसंयोगप्रतियोगिकेति संसर्गाभावविशेषणम् । यद्यपीतरभेदसाधने वैयर्थ्यमादिपदार्थस्य तथापि यच्छुद्धेर्निर्वचनं तदा तच्छुद्ध्यापादकमेवादिपदार्थो द्रष्टव्यः । न चाननुगमः । शुद्धेरप्यननुगतत्वात् । एवं च भस्मयोगप्रतियोगिकसंसर्गाभावविरहमात्रविवक्षायां तद्वत्यम्लासंयोगिन्यशुद्धताम्रे तिव्याप्तिः । न च तच्छुद्धमेव गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि काकोपहतान्यपीति स्मृत्या कांस्य एव भस्मनः शोधकत्वबोधनात् । आदिपदार्थविवक्षायां चाम्लादिसंसर्गाभाववति भस्मादिसंसर्गाभावविरहवति कांस्येतिव्याप्तिरिति निरस्तम् । एवं चाण्डालादिस्पर्शादित्यत्रापि तत्तदशुद्ध्यापादकमेव तत्तल्लक्षणे विवक्षितम् । अत एव शूद्रभोजनोत्तरकालं तथाभूतकांस्येऽतिव्याप्तिः । न च तच्छुद्धम् । यावच्छूद्रा न भुञ्जत इत्यादिस्मृत्या शूद्रभोजनाभावकाल एव भस्मनः शोधकत्वबोधनादिति निरस्तम् । भस्मादियोगप्रतियोगिकसंसर्गाभावविरहोक्तावपि पूर्वोक्तपक्षद्वयाश्रयणे यथाक्रमं भस्मादियोगध्वंसवच्छुद्धकांस्येऽव्याप्तिः । भस्मादियोगध्वंसात्मकतत्संसर्गाभावविरहिणि भाविभस्मादियोगे कांस्येतिव्याप्तिश्चेति संसर्गाभावविशेषणमनादीति । न चैवमपि चाण्डालस्पृष्टे भस्मयोगप्रागभाववति तदत्यन्ताभावविरहाच्छु-

द्भुधापत्तिः। अग्रे परिहरिष्यमाणत्वात्। चाण्डालस्पर्शो- त्तरकालीने तादृशकांस्येऽतिव्याप्तिनिवृत्तये चाण्डाला- दिस्पर्शादिप्रतियोगिकाभावसमानाधिकरणस्येत्युक्तमपि तदन्योन्याभावसामानाधिकरण्यमादाय मा तत्रातिप्र- सांक्षीदिति संसर्गविशेषणम्। स्पर्शपदं संयोगपरम्। अन्यथा चाण्डालस्पर्शप्रतियोगिकयावदनादिसंसर्गाभा- वान्तर्गतप्रागभावसामानाधिकरण्यानुपपत्तेरसम्भवप्रस- ङ्गात्। समानकालीनपदादूर्ध्वं समानाधिकरणपदप्रक्षे- पात्समानकालीनतत्समानाधिकरणचाण्डालस्पर्शादिप्र- तियोगिकयावदनादिसंसर्गाभावसमानाधिकरणस्येत्यर्थो द्रष्टव्यः। तेन तत्समानकालीनान्यनिष्ठचाण्डालादिस्प- र्शप्रतियोगिकप्रागभावसामानाधिकरण्यानुपपत्तेर्यावद- नादिसंसर्गाभावसामानाधिकरण्यासम्भव इति निर- स्तम्। एवं स्थिते भाविचाण्डालस्पर्शे शुद्धेऽव्याप्तिः। समानकालीनसमानाधिकरणस्पर्शध्वंससामानाधिकर- ण्यस्य तत्समयावच्छेदेनाभावादतोऽनादीति संसर्गाभाव- विशेषणम्। एवमपि वृत्तचाण्डालस्पर्शेऽपि भाविचाण्डा- लस्पर्शप्रतियोगिकप्रागभावरूपानादिसंसर्गाभावसामाना- धिकरण्यसम्भवादतिव्याप्तिः तदर्थं यावदिति। समान- कालीनत्वमनुपादाय समानाधिकरणचाण्डालस्पर्शप्र- तियोगिकयावदनादिसंसर्गाभावसमानाधिकरणस्येत्युक्ते चाण्डालस्पर्शोत्तरकालेपि भस्मादिसंयोगानादिसंसर्गा- भावविरहस्य चाण्डालस्पर्शप्रतियोगिकयावदनादिसं-

सर्गाभावसामानाधिकरण्यानपायादःतिव्याप्तिः न ह्येक-कालीनयोरेव सामानाधिकरण्यम् । न चैतदनुपादाने-तत्समयावच्छेदेनेत्येतदपि विवक्षितविशेषोपस्थापकमतः समानकालीनेति । तथा च किञ्चिन्नाण्डालस्पर्शाद्युत्पत्तौ तत्प्रागभावात्मकसंसर्गाभावसमानकालीनत्वापाया-न्नातिप्रसङ्गः । तथापि चाण्डालप्रतियोगिकयावदनादि-संसर्गाभावसमानाधिकरणस्य प्राक्समानकालीनस्यैवो-त्तरत्रानुवृत्तेरुत्तरकालेतिव्याप्तिः स्यादतस्तत्समयावच्छे-देनेति । यत्समयवृत्त्या समानकालीनत्वनिर्वाहस्तद-वच्छेदेनेत्यर्थः । अतो नातिव्याप्तिः । नन्वत्र पूर्व-खण्डेऽनादिसंसर्गाभावत्वावच्छिन्नविरहो विवक्षितः । यत्किंचित्तद्विरहो वा । नाद्यः । अभूतभाविभस्मयोग उत्पन्नशुद्धविनष्टे तत्प्रागभावविरहसम्भवेपि तदत्यन्ता-भावविरहासम्भवादव्याप्तेः । न च द्वितीयपक्षेपि तत्र-त्यस्य प्रागभावविरहस्य चाण्डालस्पर्शात्यन्ताभावसा-मानाधिकरण्येपि यावदर्थान्तर्गततत्प्रागभावसामानाधि-करण्यानुपपत्तेस्तुल्याऽव्याप्तिरिति वाच्यम् । प्रागभा-वस्यासमानाधिकरण्यात्प्रकृते च समानाधिकरणतत्समा-नत्वस्योक्तत्वादतः प्रथमपक्ष एवायं दोषः । न द्वितीयः । प्रागभावदशायामत्यन्ताभावविरहमादायातिव्याप्तिप्रस-ङ्गात् । किञ्च । अनादिसंसर्गाभावत्वेन प्रागभावात्यन्ता-भावयोरुपादानमनर्थकम् । प्रागभावविरहस्यैवानतिप्रस-क्तित्वात् । अग्रिमखण्डे तु न प्रागभावेन निस्तारः ।

एवमेतद्विपर्ययेणाशुद्धिपदार्थो निर्वक्तव्यः । यद्वा

अभविष्यच्चाण्डालस्पर्शे तत्सामानाधिकरण्यानुपपत्तेरिति चेन्न । प्रागभावविरहस्य शुद्धित्वेऽनुत्पन्नचाण्डालस्पर्शे भस्मादियोगप्रागभाववति शुद्धोत्पन्नेऽव्याप्तिप्रसङ्गात् न द्वितीयदोषः । नापि प्रथमो दोषः द्वितीयपक्षस्यैवाश्रयणात् । न च प्रागभावदशायामतिव्याप्तिः चाण्डालास्पृष्टे तद्दशायां शुद्धत्वस्येष्टत्वात् । तत्स्पृष्टे त्वत्यन्ताभावविरहसमानाधिकरणस्य पूर्वचाण्डालस्पर्शस्योत्पत्त्या तत्प्रागभावरूपयावत्पदार्थान्तर्गतसंसर्गाभावसमानकालावच्छिन्नत्वस्याभावादिति । यत्तु चिन्तामणिकृता लक्षणमुक्तम् तस्य संयोगध्वंसस्य तत्समानकालीनचाण्डालस्पर्शादिप्रतियोगियावदनादिसंसर्गाभावसहितस्य शुद्धित्वादिति तत्स्वतःसिद्धशुद्धिविनष्टे भूतभविष्यद्भस्मादियोगेऽव्याप्तमिति तदपेक्षयेदमेव ज्याय इति द्रष्टव्यम् । नन्वन्यनिष्ठभस्मयोगप्रागभावात्यन्ताभावमादायान्यत्रातिप्रसङ्ग इति चेत् । स किं चाण्डालस्पृष्टेऽस्पृष्टे वा । नाद्यः सदातनतन्निष्ठतत्प्रागभावविरहसमानाधिकरणसमानकालीनचाण्डालास्पर्शप्रतियोगिकयावदनादिसंसर्गाभावसामानाधिकरण्यस्य तत्कालावच्छेदेनासत्त्वात् । नान्त्य इष्टापत्तेरिति । ननु यथोक्तस्य भस्मादियोगानादिसंसर्गाभावविरहस्य शुद्धित्वे तदनादिसंसर्गाभावोऽशुद्धिः स्यात् । तथा च

शुद्धिजनकत्वाभिमतेन स्नानादियोगेन तन्त्रादौ तत्तद्देवतासंनिधिरेव क्रियते स एव शुद्धिपदार्थः। अस्पृश्यसम्बन्धेन तु तद्विरहः । स एव चाशुद्धिपदार्थः । अन्ये तु भस्मादिप्रयोक्तृनिष्ठ एव संस्कारस्तेन जन्यते स शुद्धिपदार्थः इति । अशौचापादकेन तदपनयो जन्यते स एवाशुद्धिपदार्थः इत्याहुः । प्रतिमादौ तु प्रतिष्ठादिना

चाण्डालास्पृष्टतन्निष्ठभस्मादियोगप्रागभावदशायां तस्याशुद्ध्यापत्तिरत आह । एवमेतद्विपर्ययेणेति । शुद्ध्यापादकत्वाभिमतस्य स्थानेऽशुद्ध्यापादकत्वाभिमतस्यास्य च स्थाने तस्य प्रक्षेपेणेत्यर्थः । ब्रह्मविष्णुरुद्रादयो जीवा एवेति शुद्ध्यापादकेन स्वस्वदैवत्ये वस्तुनि तेषामहङ्कारममकारात्मा संनिधिः सम्भवत्येव । नित्यसर्वज्ञदैवत्यन्तु वस्त्वेव नास्तीति नानुपपत्तिरिति मन्वानानां मतमाह । यद्वा शुद्धिजनकत्वाभिमतेनेति । ज्ञानरूपस्य तस्याशुतरविनाशित्वादनन्तरक्षण एवापूज्यतापत्तिरनवच्छिन्नतद्धाराभ्युपगमे च देवतानां विषयान्तरसंचारानुपपत्तिरित्यरुचेराह । केचिदिति । कालान्तरभावव्यवहार्यतानुपपत्तेर्विहितत्वाच्च प्रयोक्तर्यपूर्वं जन्यते तेन समं स्वरूपसम्बन्धात्तत्र शुद्धिव्यवहारः अत एव स्वरूपसम्बन्धेन तन्निष्ठस्यापूर्वस्य समानाधिकरणचाण्डालस्पर्शादिना कर्मनाशापारगमनादिनेव नाशोपपत्तिरिति माना-

देवतासन्निधिरेव क्रियते । स चाहङ्कारममकार-
लक्षणः । तथा घटादावपि शुद्धिप्रतिज्ञादिकम-

न्तरमाह । अन्ये त्विति । प्रयोक्तृगतफलाप्रतीतेस्तत्त्वसा-
क्षात्कारवत्कृतभस्मादियोगस्याकिञ्चित्करत्वप्रसङ्गाच्चान्य-
त्वोत्कीर्त्तनम् । प्रतिष्ठाविधेरन्यथोपपत्तिमाह । प्रतिमादौ
त्विति । तुशब्देन प्रतिष्ठापकेन प्रतिष्ठाप्यदेवतासालो-
क्यादि फलबलकल्प्यं तत्प्रयोजकमपूर्वमभ्यनुजानाति ।
तत्पूज्यताप्रयोजकं नापूर्वमन्यधर्मस्यान्यत्रानुपयोगात् ।
भोगापवर्गादिना तन्नाशेऽपूज्यतापत्तेश्च । नापि पूर्व-
पूर्वप्रतिष्ठितत्वप्रमा तदज्ञानेपि वस्तुतः सत्प्रतिष्ठि-
तपूजनादेव पामरैरप्यपेक्षितफललाभादित्येवकारार्थः ।
नन्वेकस्या देवतायाः कथं युगपद्भिन्नदेशप्रतिमासन्नि-
धिरत आह । स चेति । नन्वेवं विषयान्तरसञ्चारानु-
पपत्तिरुपपत्तौ तद्दैवापूज्यतापत्तिरिति वाच्यम् । संस्का-
रस्योपलक्षणात् । न च स्मृत्यादिना तन्नाशे तादवस्थ्यम् ।
विधिबलादस्पृश्यस्पर्शनादिना तन्नाशो न स्मृत्यादि-
नेति कल्पनात् । न च देवतानां विशेषदर्शित्वात् भ्रमा-
नुपपत्तिः प्रतिष्ठाविधिदोषबलादाहार्यारोपस्वीकारात् ।
न च रामकृष्णादिभगवत्प्रतिमास्वपूज्यतापत्तिः । तस्य
तज्जन्याहङ्कारममकारभ्रमानुपपत्तिरिति वाच्यम् । जी-
वत्वाभिप्रायेणैव तदभिधानात् । ईश्वरत्वपक्षे तु प्रति-
ष्ठितं पूजयेदितिविधौ भूतानुशिष्टनिष्ठाबलेन प्रतिष्ठा-

पेक्ष्य प्रतिष्ठादिविधिना जयप्रयोजकीभूतधर्मो जन्यते । अशुद्धप्रतिज्ञामपेक्ष्य भङ्गप्रयोजकोऽधर्मो जन्यते । एवं परमाणुगतपाकजगुणविशेषात्तत्तत्पार्थिवकार्यविशेषो द्रष्टव्यः । जलादौ मन्त्रिते विशेषस्त्वदृष्टादिनिमित्तभेदात्कार्यवै-

ध्वंसस्यैव स्वप्रतियोगिसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसमानाधिकरणस्य पूज्यताप्रयोजकत्वमिति ध्येयम् । ननु तुलाधिवासविधिना तुल्यावनमनोन्नमनप्रयोजकशक्त्याधानं तुलायामवश्यमभ्युपेयम्।कथमन्यथा मिथ्याप्रतिज्ञस्य तुल्यस्योपवासादजनितलाघवस्यापि अवनमनं सत्यप्रतिज्ञस्य तून्नमनम् यादृच्छिकतुलारोहेण तु न किञ्चिदिति व्यवस्थेत्यत आह घटादाविति । सत्यासत्यप्रतिज्ञाभिशस्ततुलारोहणस्येष्टानिष्टफलकत्वेनोन्नीतयाऽभिशस्तसत्यप्रतिज्ञो जयकामस्तुलामारोहेन्नासत्यप्रतिज्ञ इति श्रुत्याधिकारिभेदेन विधिनिषेधव्यवस्थितेरिति भावः । अविशुद्धिमिति । प्रतिज्ञाया इति शेषः । कलमाङ्कुरादौ जातिनियममन्यथयति । एवमिति । शक्तिवादेपि कार्येषु प्रतीयमानस्य रूपरसादिवैलक्षण्यस्योपपादकतया परमाणुरूपरसादिवैलक्षण्यस्यावश्यकत्वात्तेनैवान्यथोपपत्तौ किं शक्त्येति भावः । नन्वभिमन्त्रिते पयसि पाकजविशेषाभावे कथं तेन विषनिर्हरणादि कथं वा तेजसि उद्भवानुद्भवव्यवस्थेत्य-

च्चित्र्यमूहनीयम्। न च शक्तिःव्यवहारेणानुपपत्त्या-तिरिक्तपदार्थकल्पनम्। कारणत्वेनैवोपपत्तेरि-त्युपरम्यते इति ॥ आधेयशक्तिवादः ॥

---

चाह। जलादौ त्विति। आदिपदेन देवतासन्निधिसं-ग्रहः तेनाभिमन्त्रितजले देवतासन्निधिनिमित्तभेदाददृ-ष्टभेदाच्च तेजस्युद्भवानुद्भववैचित्र्यमित्यर्थः। यद्वा जलं करकादि अदृष्टादीत्यादिपदेन भर्जनकपालजलप्रक्षेो-पसङ्ग्रहः। कार्यवैचित्र्यं करकादेर्द्रवजन्यस्यापि काठि-न्यमुद्भूतरूपाधस्तनवन्हिजनितस्यापि तेजसो भर्जनक-पालेनुद्भूतरूपत्वम्। अतितप्ततैलवृत्त्यनुद्भूतरूपवन्ह्या-रब्धस्यापि जलप्रक्षेपादुद्भूतरूपत्वमिति द्रष्टव्यम्। अयमत्र शक्तो नायमिहेति व्यवहारादपि शक्तिरेव सिद्ध्येन्न तु तस्याः क्लृप्तपदार्थातिरेकोपीत्याह। न चेति॥

इतिश्रीसकलसामन्तप्रतापराजोद्योजितशेषानन्त-विरचितायां न्यायसिद्धान्तदीपप्रभायामाधेयशक्तिप्रक-रणम् संपूर्णम्।



मनस्त्वं परमाणुवृत्ति न वा । मूर्तत्वं निःस्पर्शवृत्ति न वा । इत्यादिविप्रतिपत्तिसम्भवे विचारावतारः । सुखप्रतीतिः सकरणिका क्रियात्वात् रूपप्रतीतिवत् इत्यनुमानं न समीचीनम् । शरीरादिना सिद्धसाधनात् । नाप्यसाधारणकर-

परमाणुवृत्तित्वस्य विधिकोटेर्मीमांसकम् प्रति अप्रसिद्धेर्विप्रतिपत्त्यन्तरमाह । मूर्त्तत्वमित्यादिना । सुखेन प्रतीतिरिति विगृह्य कर्त्तृकरणे कृतेतिसमासक-रणादिह सुखजन्या प्रतीतिः पक्षः । तेन नांशतो बाधा-सिद्धी न वाऽनुमित्याद्यंशे सिद्धसाधनं प्राचीनमते दोषो न वा सामान्यलक्षणादिजन्यतत्प्रत्यक्षेपीति द्रष्टव्यम् । वस्तुतः सुखस्य प्रतीतिरिति कर्मषष्ठीसमासेपि न पूर्वार्थदौर्लभ्यम् तदन्तर्गतेन कारकत्वेनैवाभिमतसिद्धेः । सकरणिकेति । व्यापारवज्जन्येत्यर्थः । क्रियात्वात्कार्य-त्वाद्रूपप्रतीतिवज्जन्यरूपप्रतीतिवत् । सकारणिकेति तु न युक्तः पाठः । तत्र जन्यत्व एव साध्यपर्यवसाने पक्ष-तावच्छेदकेऽवश्यान्तर्भूतेन जन्यत्वेन स्पष्टे सिद्धसाधने शरीराद्यनुधावनानौचित्यात् । साध्यहेत्वोरविशेषप्रस-ङ्गाच्चेति । शरीरादीत्यादिपदेनात्मसङ्ग्रहः । अस्तु तर्हि प्रतीत्यन्तरव्यावृत्तव्यापारवज्जन्येति साध्यं तत्राह । नाप्यसाधारणेति । शरीरवत्तस्यापि प्रतीत्यन्तरसाधा-रणत्वादिति भावः । ननु न साधारणभिन्नत्वं कारणे विशेषणम् किन्तु कारणतायां तथा च साधारणेतरकार-

णिकेति साध्यनिर्देशेपि मनसः सिद्धिः। निःस्पर्श-त्वाद्यनुल्लेखितयाऽर्थान्तरत्वात्। नापीन्द्रिय-करणिकेति साध्यनिर्देशे तत्सिद्धिः। त्वचैव सिद्धसाधनत्वात्। अतिरेकेप्यणुत्वाद्यसिद्धिः वि-भुत्वेनैवोपपत्तेः। सर्वदा स्पर्शरहितद्रव्यत्वादेर्वि-

णताश्रयव्यापारवज्जन्येति साध्यार्थो भवति च मन-इन्द्रियत्वावच्छिन्ना कारणता जन्यात्मविशेषगुणत्वाव-च्छिन्नकार्यतानिरूपितमनस्त्वावच्छिन्नकारणताभिन्ना अवच्छेदकभेदेनावच्छेद्यकारणताभेदात्। न चैवं शरीर इति न तेन सिद्धसाधनमपीत्यत आह। निःस्प-र्शत्वादीति। आदिपदेन परमाणुवृत्तित्वग्रहः। मूर्त्तत्वं निःस्पर्शवृत्ति न वेति विप्रतिपत्तौ तत्कोटिभूतं निःस्प-र्शत्वाद्येव साधयितुमुचितम्। नाप्रस्तुतमेतदित्यर्थः। स्पर्शानुपग्रहे त्वचा सामर्थ्यान्न सिद्धसाधनमत आह। अतिरेकेपीति। आदिपदेन विप्रतिपत्तावणुत्वविशेष-णस्य परमत्वस्य ग्रहः। मनस्त्वं परमाणुवृत्ति न वेति विप्रतिपत्तौ तत्कोटिः परमाणुत्वं साधयितुमुचितं न चा-मेनाणुत्वमपि सिद्ध्यति न वा तस्य पारम्यमित्यर्था-न्तरमेवात्रापीत्यर्थः। अवयवकल्पनागौरवनियन्त्रितमि-दमेवाणुत्वे पारम्ये च विश्राम्येदित्यत आह। विभुत्वे-नैवेति। परपक्षं निरस्य स्वपक्षे साधकमाह। सर्व-देति। द्रव्यत्वं घटादौ व्यभिचारि स्पर्शरहितत्वविशिष्ट-मप्युत्पत्त्याऽवच्छिन्ने तत्रैवेति। सर्वदेति। स्पर्शव्यावृत्त्यै

भुत्वसाधकस्य विद्यमानत्वात् (१)। न च विभुत्वपक्षे व्यासङ्गानुपपत्तिः। व्यासङ्गस्यैव ज्ञानान्तरोत्पत्तौ प्रतिबन्धकत्वात् एकदानेकक्रियाप्रयोजकद्रव्येति। ननु राहित्यं सामान्याभावो विशेषाभावो वा? नाद्यः। प्रागभावप्रध्वंसयोः सामान्याभावत्वासम्भवेन परिशिष्टस्यात्यन्ताभावस्य समवायिन्युत्पत्त्यवच्छिन्नघटादावसम्भवेन सर्वदापदवैयर्थ्यापत्तेः। न द्वितीयः। किञ्चित्स्पर्शरहिते कुत्रचित्स्पर्शवत्येव व्यभिचारादिति चेत्। न यावत्स्पर्शसंसर्गाभाववत्त्वस्य विवक्षितत्वात्। उत्पत्त्यवच्छिन्ने घटे च स्ववृत्तेः स्पर्शस्य प्रागभावोऽन्येषाञ्च सर्वेषामत्यन्ताभाव इति व्यभिचारसम्भवे सर्वदापदसार्थक्योपपत्तेरिति। आदिपदेन ज्ञानासमवायित्व(२)परिग्रहः। ननु विभुत्वे सर्वेन्द्रियसंयोगस्य सर्वदाऽविशेषात्प्रतिनियतज्ञानकाले ज्ञानन्तरानुत्पत्तेरसम्भव इत्यत आह। न चेति। जायमानज्ञानसामग्र्या एव ज्ञानान्तरोत्पत्तिप्रतिबन्धकत्वं फलबलादित्याह। व्यासङ्गस्यैवेति। विषयविशेषैकाग्र्यस्य तज्ज्ञानसामग्र्या इति यावत्। ननु सर्वेषां सम्भृतसामग्रीकत्वेऽविनिगमनात्सर्वेषामुत्पत्तिरेकस्यापि वा न स्यात्परस्परप्रतिबन्धादित्यत आह। एकदेति। यद्योकस्यैव शब्दस्यैकदावच्छेदभेदेनानेकशब्दजनकत्ववत्प्रकृतेपि तत्तदिन्द्रियावच्छेद-

(१) दृश्यमाणत्वात्—पा० २ पु०।

(२) समवायिसमवायित्व—२ पु०।

त्वानुपपत्तेश्च(१)। न च सुखादिप्रादेशिकत्वानुपपत्तिः। विषयसम्बन्धप्रादेशिकत्वेनैवोपपत्तेः। मनसोऽणुत्वपक्षेऽपि तस्यैवोपजीव्यत्वात्। अन्यथाऽणुमात्रदेशवृत्तिता सुखस्य स्यात् सर्वाङ्गीणे तु विषयसम्बन्धे सर्वाङ्गीणमेव सुखमुत्पद्यते। बुभुभेदेनानेकज्ञानजननं भवति। एकावच्छेदेनापि रूपरसादिवद्विजातीयानेकचाक्षुषादिज्ञानजननञ्च। तथाप्येकं ज्ञानक्रियाकरणम् एकदैकामेव ज्ञानक्रियां जनयति न त्वनेकामिति ज्ञानक्रियाकरणस्वभावान्न तथेत्यर्थः। ननु मनोवैभवे सुखादीनां प्रादेशिकत्वं न स्यात् असमवायिकारणस्यात्ममनोयोगस्याप्रादेशिकत्वात्। विभुकार्यविशेषगुणानां चासमवायिकारणप्रादेशिकत्वेनैव प्रादेशिकत्वस्य शब्दादाववधारणादित्यत आह। न चेति। विषयेति। निमित्तचन्दनादिप्रादेशिकत्वेनेत्यर्थः। ननु शब्दादावसमवायिप्रादेशिकत्वस्यैव नियामकत्वं क्लृप्तम् न निमित्तप्रादेशिकत्वस्येति तत्कल्पने गौरवमित्यत आह। मनोऽणुत्वेति। तस्यैव निमित्तप्रादेशिकत्वस्यैव कथमित्यत आह। अन्यथाऽणुमात्रेणेति। असमवायिकारणस्यात्ममनोयोगस्याणुमात्रदेशत्वादिति भावः। ननु विषयसम्बन्धस्य नियामकत्वेऽप्यतिप्रसङ्ग इत्याशङ्क्येष्टापत्त्या परिहरति। सर्वाङ्गीणे त्विति। ननु मा नाम जीजनदनेकानि ज्ञानानि युगपदनेकज्ञानं तु केन वार्यताम्।

(१) जनकत्वा—पा० ३ पु०।

त्साया एव व्यासङ्गे नियामकत्वात्। अन्यस्य कस्यचिन्न नियामकत्वम्। कथमन्यथा मनोऽणुत्वपक्षे वीणानादाकर्णनव्यासक्तस्य न पुनर्भेरीरवाकर्णनमिति नियमः। कथं वा द्वित्रिच्छिन्ने गोधाशरीरे चेष्टोद्गमः। प्रयत्नवदात्मसंयोगस्य तत्कारणत्वात्। तस्य मनोयोगं विनानुपपत्तेः।

अत्रोच्यते। व्यासक्तस्य देवदत्तस्य घटस्कैन्द्रियजन्यसमूहालम्बनवशफलविरोधेनेति चेन्न। फलस्य सामग्रीपरतन्त्रस्य तदननुरोध्यत्वात्। चित्ररूप इव ज्ञाने वैजात्यसम्भवेन फलविरोधाभावाच्चेति पूर्वत्रापरितुष्यन् सिंहावलोकितेन व्यासङ्गे नियामकान्तरमाह। बुभुत्साया एवेति। अन्यस्य संयोगादृष्टविशेषादेः। नन्वणुत्वपक्षेऽणुमनःसन्निकर्षादेव व्यासङ्गोपपत्तेः किं नियामकान्तरेणेत्याशङ्क्यावश्यकतामाह। कथमन्यथेति। न हि तदैव मनसः श्रवसा सन्निकर्षोऽसन्निकर्षश्च घटत इति भावः। ननु न कथमित्याह। प्रयत्नेति। चेष्टोद्गम इति परिणम्यानुषञ्जनीयम्। नन्वेवं मनोवैभवे किमागतमित्यत आह। तस्य चेति॥

सिद्धान्ताभिधानं प्रतिजानीते। अत्रोच्यत इति। धर्मिग्राहकमेव वक्ष्यमाणविपक्षबाधकगौरवसहकृतमणुत्वं साधयिष्यतीत्याशयेनाह। व्यासक्तस्येति। घटसाक्षात्कारजनकत्वकपक्षत्वे बाधासिद्धी वारयितुं व्यासक्तस्येति। कामिनीस्पर्शादिमात्रज्ञानवत इत्यर्थः। तेन

संयुक्तं त्वगिन्द्रियम् घटसाक्षात्कारकारणकिञ्चिद्द्रव्यसंयोगरहितं तदा घटसाक्षात्काराजनकायव्यूहावस्थायामन्यज्ञानवतोपि त्वगादीनां स्वस्वविषयज्ञापकतया तत्र बाधासिद्धी इत्यपास्तम् । घटसंयोगशून्यतया सिद्धसाधनव्यावृत्त्यै घटसंयुक्तमिति । शरीरसंयोगशून्यतया बोधास्फूर्तिदशायामर्थान्तरं वारयितुमिन्द्रियमिति । शरीरसंयुक्तमित्यर्थो नाधिको वैयर्थ्यात् । साध्ये किंचित्पदानुपादाने सामान्याभावपर्यवसायि तत्तत्पक्षे बाधितम् अतो विशेषाभावतात्पर्य ग्राहयितुं किञ्चिदिति । न च तादृशचक्षुर्घटसंयोगशून्यतया सिद्धसाधनमिति वाच्यम् । साक्षात्कारपदेन त्वाचस्यैव तस्य ग्रहणात् । ननु तथापि प्राणशरीरसंयोगशून्यत्वेन सिद्धसाधनमिति चेत् । न । तत्समवधानशून्यत्वस्यैव साध्यत्वात् । तत्समवधानस्य च तदा तत्र सत्त्वात् । अन्यथा कामिनीस्पर्शादिज्ञानस्याप्यभावप्रसङ्गात् । ननु तथापि घटत्वाचसाक्षात्कारकारणसंयोगमात्रसमवधानशून्यता बाधिताऽविवक्षिता च । विशेषसमवधानशून्यता च सिद्धसाधनग्रस्ता अतीतत्वाचसाक्षात्कारव्यक्तिकारणत्वकघटसंयोगव्यक्तिसमवधानशून्यतायास्तदानीमपि सत्त्वादिति चेत् । न । त्वाचघटसाक्षात्कारकारणतावच्छेदककिञ्चिदेकधर्मावच्छिन्नसंयोगमात्रसमवहितत्वस्य साध्यत्वेन विवक्षणात् । हेतोरजनकत्वं साक्षात्काराजनकत्वं वाऽसिद्धं कामिनीसाक्षा-

कत्वात् । त्वगिन्द्रियासंयुक्तघटवदिति तावदव्यापककरणसिद्धिः । तस्य सावयवत्वकल्पनायां गौरवमित्यनवयवत्वे व्यवस्थिते न च तत्स्पर्शवत् । स्पर्शवतो गन्धग्राहकस्य घ्राणत्वप्रसङ्गरूपाद्यग्राहत्कारजनकत्वादतो घटेति । अजनकत्वमात्रं फलानुपहितत्वं तत्कदाचित्तदनुपहिते जननदशायां व्यभिचारीति तदेत्युक्तम् । न चासिद्धिवारकतया घटसाक्षात्पदयोर्वैयर्थ्यम् । अखण्डाभावे तदभावात् । दोषाभाव इत्यधिकमत्र द्रष्टव्यम् । तेन दोषवशात्तदजनके न व्यभिचारः । न च साक्षात्काराव्यवहितपूर्वक्षणे व्यभिचारः । तदनन्तरोत्तरत्वस्य तदापदार्थत्वात् । अव्यापकेति । व्यापकत्वे मूर्त्तायास्त्वचस्तत्संयोगशून्यतानुपपत्तेरिति भावः । तावत्पदसूचितायां क्रमिकाणुत्वसिद्धावुपायमाह । तस्य सावयवत्व इति । अवयवतत्स्पर्शकल्पनागौरवादेव बाधकानवयवत्वे व्यवस्थितेऽणुत्वसिद्धिरिति शेषः । नन्वेतावता मूर्तत्वसिद्धावपि न विप्रतिपत्तिकोटिकृतनिःस्पर्शवृत्तित्वसिद्धिरित्यत आह ॥ न च तत्स्पर्शवदिति । सावयवत्वे हि निःस्पर्शानामारम्भकत्वाऽनुपपत्त्या स्पर्शवदारब्धे तस्मिन्कल्पेताऽपि स्पर्शः । न त्वनवयवत्वे स्थिते गौरवादिति भावः । बाधकान्तरमाह । स्पर्शवत इति । गन्धग्राहकं मनो यदि गन्धग्राहकत्वे सति स्पर्शवत्स्यात् । तथा च रूपाद्यग्राहकं स्यादिति प्रसङ्गः । यद्यपि शब्दग्राहकं मनो यदि निःस्पर्शत्वे शब्दग्राहकं

कत्वप्रसङ्गात्। एवं तैजसत्वे चाक्षुषत्वप्रसङ्गेनापि गन्धाद्यग्राहकत्वमापादनीयम्। यद्वा। सुखादिप्रतीति(१)रिन्द्रियकरणिका जन्यसाक्षात्कारप्रतीतित्वात् रूपप्रतीतिवदित्यपि मनसि मानम्। न च त्वचा सिद्धसाधनम्। स्पर्शोपग्रहेणैव तत्कारणत्वा-

स्यात् श्रोत्रं स्यात् रूपादिग्राहकं च न स्यात् इति प्रसङ्गस्तुल्यः न च निःस्पर्शस्यापि शब्दस्यात्मनश्च शब्दग्राहकत्वे श्रोत्रत्व त्पर्शशियलमूलता । स्पर्शवत्त्वे सति गन्धग्राहकस्यापि कुङ्कुमकेशरादेर्घ्राणत्वेन तुल्यत्वात्। एतेनेन्द्रियत्वगर्भापादकविवक्षापि प्रत्युक्ता ग्रहकरणत्वविवक्षायां चापादकासिद्धिरधिका तथापि पूर्वसाधन एव तात्पर्यम्। अत एव प्रकरणान्ते वक्ष्यति स्पर्शत्वकल्पनायां गौरवमेव बाधकमिति। एवमिति। गन्धपदे रूपपदप्रक्षेपवता पूर्वतर्केणेत्यर्थः। इन्द्रियत्वेन तत्सिद्धये मानान्तरमाह। सुखाद्युपलब्धिरिति। पक्षनिर्वचनं पूर्ववत्। इन्द्रियकरणिका इन्द्रियवृत्तिमात्रकारणताप्रतियोगिककार्यताश्रयः। रूपप्रतीतिवत् जन्यरूपप्रतीतिवत्। सर्वशरीरव्यापित्वेनासम्भावितव्यभिचारया त्वचार्थान्तरमाशङ्क्य निरस्यति। न च त्वचेति। सिद्धसाधनमर्थान्तरम्। स्पर्शोपग्रहेणेति। स्पर्शविषयीकारेणोपलक्षित एव ज्ञाने तस्यास्त्वचः कारणत्वाद्बाधेनार्थान्तरवारणादित्यर्थः। प्रकारान्तरेणार्थान्तरं दृढीकृत्य निरा-

(१) सुखाद्युपलब्धि—पा० २ पु०।

वधारणात् । न चैवमणुत्वाद्यसिद्धिः व्यासङ्गस्य धारावाहिकज्ञानक्रमवत् उपपत्तेरिति(१) वाच्यम् तत्र हि पूर्वपूर्वज्ञाने चोत्तरस्य(२) विशेषणज्ञान-

चष्टे न चैवमिति । इन्द्रियकरणकत्वमात्रानुमान इत्यर्थः । ननु व्यासङ्गान्यथानुपपत्तिसहकृतादित एवाणुत्वं सेत्स्यतीत्याशंक्याह । व्यासङ्गस्येति ज्ञानान्तरानुत्पादस्येत्यर्थः । स हि तदीयकिञ्चित्कारणवैकल्यप्रयुक्तो नेन्द्रियसंयोगवैकल्यमात्रप्रयुक्तो येनेन्द्रियमव्यापकं सिद्ध्येदिति भावः । धारावहनेति । हि तत्रेन्द्रियार्थसंयोगक्रमः प्रयोजकः एकस्मादेव ततस्तदुत्पत्तिसम्भवे विरलग्नसंयोगधारायां मानाभावात् । अत एव नेन्द्रियमनःसंयोगक्रमोपि किन्त्वन्यत एव कुतश्चिज्ज्ञानकारणस्वाभाव्यादेरिति वाच्यम् तदेवात्र नियामकमास्तामिति भावः । स्थैर्यपक्षे तादृशकरणस्वाभाव्यमपि कारणवैकल्यादेवेति न तत्रावयोर्विवादः । संयोगवैकल्यात्कारणान्तरवैकल्याद्वेति तु परिशिष्यते । तत्र धारावहनस्थले स्पष्टदृष्टकारणान्तरवैकल्यादेव तदुपपत्तेर्न द्रव्यान्तरसंयोगवैकल्यं कल्पते । व्यासङ्गस्थले तु क्लृप्तकारणसाकल्येपि ज्ञानान्तरानुत्पत्तेर्द्रव्यान्तरसंयोगवैकल्यमेव युक्तमित्यव्यापकद्रव्यप्रसिद्धिरिति समाधत्ते । तत्र

(१) धारावाहिकज्ञानक्रमवत् व्यासङ्गोपपत्तेः—पा० ३ पु० ।

(२) पूर्वपूर्वज्ञानापेक्षितत्वमेवोत्तरस्य—पा० ५ पु० ।

हीति। ननु पूर्वपूर्वघटज्ञानानां घटत्वरूपविशेषणज्ञानत्वेनोत्तरोत्तरघटज्ञानजनकत्वादेकज्ञानकाले द्वितीयादिसकलोत्पत्तिर्दुर्वारा कारणतावच्छेदकविशेषणज्ञानत्वावच्छिन्नस्यैवापेक्षितत्वात्तस्य चासत्त्वादिति चेत्। अत्र वदन्ति। तत्तत्क्षणत्वेनासाधारणताश्रयतत्तत्क्षणविरहादेव क्रमोपपत्तिः। ग्रन्थस्तूपलक्षणम्। पूर्वं ज्ञानं यस्मिन्निति व्युत्पत्त्या तत्तत्क्षणपर एव वा। न चैवमुपपादकाग्रिमग्रन्थासङ्गतिः। पूर्वपूर्वविशेषणज्ञानव्यक्तिविलम्बादेव कार्यविलम्बो न तत्तत्क्षणविलम्बादित्येव किं नेष्यत इति शङ्कमानं प्रति तत्तद्विशेषणज्ञानत्वेनाकारणत्वाद्विशेषणज्ञानत्वेन च कारणत्वे तदवच्छिन्नयत्किञ्चिदेकविशेषणज्ञानादेकविशिष्टज्ञानकाले सकलतदुत्तरधारावाहिकोत्पत्तिप्रसङ्गेन तत्तत्क्षणविलम्बस्यैव नियामकत्वमित्याशयेन तदुपन्यासादिति। इदं त्ववधेयम्। कार्यैककाल्यनिरासाय तत्तत्क्षणत्वेन कालस्येव कार्यैकदेश्यनिरासाय देशस्यापि तत्तद्देशत्वेन कारणता वाच्या। कथमन्यथेह सामग्रीसमवधानादेतद्घटोत्पत्तिवद्देशान्तरीयघटोत्पत्तिरपि न स्यात्। देशत्वेनैव कारणत्वे देशविशेषासत्त्वस्याकिञ्चित्करत्वात्। तत्तन्नतित्वादिना नत्यादीनां चेष्यत एव विघ्ननिवृत्तिः। तथा च किमपराद्धं विशेषणज्ञानेन यदस्यैव विशेष्यकारणता नेष्यते। किञ्च तत्क्षणत्वेन कारणत्वे प्रागभावस्याकारणतापत्तिः। उत्पन्नस्य पुनरनुत्पत्तेः क्षणविशेषविलम्बादेव सूपपादत्वात्।

त्वेनापेक्षणात्। ननु तथापि बुभुत्सैवास्तु नियामिका। तस्या अवश्यं नियामकत्वेनाङ्गीकर्तव्यत्वात्। घटाद्योन्मीलने पटप्रकाशनं क्रमेण

---

वस्तुतस्तु कार्यकारणभावो व्याप्तिविशेष एव स च सामान्यतो विशेषतश्चास्त्येव किन्त्वगृहीतसाध्यसाधनविशेषावच्छिन्नायास्तस्या अबुभुत्सितानुमानस्थले दुर्ग्रहत्वेनानुमित्यप्रयोजकतया सामान्यावच्छिन्नव्याप्त्यन्तरग्रहस्तासामेव वा विशेषव्याप्तीनां वन्हिहनिरूपितधूमनिष्ठव्याप्तित्वेनानुगतीकृतानां धूमत्ववन्हित्वावच्छेदेन ग्रहः कारणमास्थीयते इत्येतावत्। एवमिहाप्यसिद्धसाध्यविशेषाय साधनविशेषे प्रवर्तमानस्य न तद्व्यक्तिविशेषावच्छिन्नकार्यकारणभावग्रहः सम्भवतीति सामान्यावच्छेदेन कारणताग्रहः प्रवृत्त्यर्थमिष्यते न तु प्रतिव्यक्तिविशेषकारणत्वाभाव इति अत एव तत्तन्नतित्वेन तत्तद्विघ्नध्वंसे कारणत्वमाहुर्गङ्गेशचरणाः। तथा च यथाश्रुताबाधे तात्पर्यान्तरकल्पनमनर्थकमिति। एवं चाग्रिमग्रन्थस्य विशेषणज्ञानत्वेनेत्यस्य तत्तद्विशेषज्ञानत्वेनेत्यर्थो द्रष्टव्यः। तथाप्यर्थान्तरतादवस्थ्यमित्याशयेन शङ्कते। ननु तथापीति। धारावहनक्रमवदुपपत्त्यभावेपीत्यर्थः। ननु सा न बोधहेतुः अबुभुत्सितबोधदर्शनात्। नाप्यबुभुत्सितबोधप्रतिबन्धिका घटाद्योन्मीलनेपि पटप्रकाशदर्शनात् किन्त्वबुभुत्सितार्थग्राहकादिन्द्रियादाकृष्य

भवति । बुभुत्सापगमे वा । तस्मादन्यथासिद्धस्य व्यासङ्गस्य कथं मनोणुत्वसाधकत्वमिति । मैवम् । सुखादिप्रादेशिकत्वनियमार्थं प्रादेशिकमसमवा-

---

बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती तद्बोध उपयुज्यते तथाऽऽवश्यकत्वान्मनःसंयोगतदभावावेव नियामकौ तौ चाणुत्व एव युज्येते इति घटभानमापतित-मित्याशंक्याह । तस्या अवश्यमिति । वीणानादग्राहिणि श्रोत्रे विकटाहतपटहध्वनेरावश्यकतया तदवच्छेदेन मनःसंयोगावश्यम्भावादेकमात्रग्रहे बुभुत्सैव नियामिका वाच्या । तथा चोभयसमाधेयव्यभिचारया तयैव व्यासङ्गोपपत्तेर्नाणुत्वसिद्धिरिति भावः । सुहृद्रूपत्वात् समाधानमप्याह । घटायेोन्मीलन इति । क्रमेणेति । घट-बुभुत्साधीनघटज्ञानानन्तरोत्पन्नपटबुभुत्साक्रमेणेत्यर्थः । प्रतिबन्धकघटबुभुत्साया अपगमे क्लृप्तसामग्रीतः पट-ज्ञानेन पटबुभुत्सापेक्षेत्याह । बुभुत्सापगमे वेति । व्यासङ्गस्याणुत्वसाधकत्वमुपसंहरति । तस्मादिति । माभू-द्व्यासङ्गानुपपत्त्याऽणुत्वसिद्धिः प्रादेशिकं सुखादि प्रादे-शिकसमवायिकारणकं कार्यविभुविशेषगुणत्वाच्छब्दवदि-त्यनुमानात्तु स्यादिति समाधत्ते । मैवं सुखादीति । सुखादीनां च स्वसमवाय्यव्याप्यवृत्तिनियमार्थमित्यर्थः । व्याप्तिं ग्राहयति । विभुकार्य इति । कार्यविभुविशे-षगुण इत्यर्थः । देशज्ञानव्यवच्छेदायाद्यं घटरूपादि-

यिकारणमङ्गीकर्त्तव्यम् । विभुकार्ये तथैवावधारणात् । न च शरीरसंयोगस्य तथात्वम् । सकलशरीरावच्छेदेन तदुत्पत्तिप्रसङ्गात् । न च तदवयवानामवच्छेदकत्वम् अवयवाव्यापिसुखस्यापि

---

निरासाय द्वितीयम् । व्याप्यवृत्तिघटकर्मजघटाकाशसंयोगव्यावृत्त्यै तृतीयं विशेषणम् । विभुकार्यविशेषगुणस्य न स्वसमवायिकारणन्यूनदेशत्वमिति नियमः निमित्तं त्वधिकदेशतामात्रप्रयोजकमिति भावः । नन्वस्तु तर्हि शरीरात्मसंयोग एवासमवायिकारणमित्यत आह । न च शरीरेति । शरीरावच्छिन्नस्य संयोगस्य नासमवायिकारणत्वमित्यर्थः । अव्यवहितोक्तं भावमभिप्रेत्याह । सकलशरीरेति । प्रादेशिकं सुखादि यदि तदितरदेशासमवायिकारणकं स्यात्तदन्यदेशं स्यादित्यर्थः । ननु संयोगस्याव्याप्यवृत्तित्वादवच्छेदकमावश्यकं तथा च यदवयवस्यापि सुखमुपलभ्यते तदवच्छिन्न एव शरीरात्मसंयोगो समवायिकारणमास्तामत आह । न च तदवयवानामिति । स्यादप्येवं यदि सर्वं सुखमवयवव्यापि स्यान्न तु तथेत्यत आह । अवयवाव्यापीति । तत्रावयवाव्यापिनि सुखे । अन्यस्यापि तदवयवस्येत्यर्थः । तथा सति व्यभिचारात्सकारणमेव न स्यात् क्वासमवायिकारणं क्वतरां प्रादेशिकतानियामक इत्याहाननुगमादिति । विभु-

तथादर्शनात्। न च तत्राप्यन्यस्यावच्छेदकत्वम् अननुगमात् (१)।न च विभुमनस्संयोग एवासमवायिकारणम्। प्रादेशिकत्वानुपपत्तिप्रसङ्गात्। न च तत्राप्यव्याप्यवृत्त्यवच्छेदककल्पना। शरीरादीनामवच्छेदकत्वे दोषस्योक्तत्वात्। अतिरिक्तस्यासिद्धत्वात्। सिद्धत्वे वा तदेव मनःस्थानेऽभिषिच्यताम्। योगशास्त्रबोधितप्रत्याहारान्यथानुपपत्त्या मनोऽणुत्वसिद्धिरिति केचित्। न च मनोऽणुत्वपक्षेऽणुमात्रदेशवृत्तितापत्तिः सुखादीनामिति वाच्यम्। यावदवच्छेदेनासमवायिकारणं वर्तते तावदवच्छेदेन कार्यमपि। न च तावदवच्छेदे-

मनःसंयोग एवेति। अजसंयोगस्वीकारादिति भावः। तत्रापि मनःसंयोगेपि। अव्याप्यवृत्तित्वमविभुत्वम्। असमवायिकारणतया शङ्किते शरीरात्मसंयोगे शरीरतदवयवादीनामवच्छेदकतायामुक्तदोषादेव मनःसंयोगावच्छेदकत्वमपि निरस्तप्रायमित्याह। शरीरादीनामिति। कल्प्यमानमप्यतिरिक्तं न विभु न वा शरीरादिपरिमाणं पूर्वदोषानुषङ्गात्। अथाणु तत्राह। सिद्धत्वेति। लाघवादावश्यकत्वाच्चेति भावः। छान्दसानां मतमाह।

(१) अननुगतत्वादिति पाठान्तरम्।

नैवेति नियममङ्गीकुर्मः । न च द्वित्रिच्छिन्नगोधाचलनानुपपत्तिः । मनोन्तरप्रवेशस्यादृष्टवशादुपपत्तेः । समयसूक्ष्मत्वानाकलनाद्वा तत्र यौगपद्याभिमानः । वेगवत्प्राणपवनसंयोगाच्चलनोपपत्तिरिति केचित् । एवमणुत्वे सिद्धे पूर्वन्यायेन

---

योगशास्त्रेति । बहिरर्थग्राहीन्द्रियेभ्यो मनसो निवर्त्तनं प्रत्याहारो न चायममूर्तत्वे तस्य युज्येतेति भावः । इतरथाणुत्वात्याग एव प्रत्याहारपदार्थस्तत्र स्यादित्यरुचेराह । केचिदिति । अदृष्टवशादिति । कियत्कालदुःखभोजकादृष्टवशादित्यर्थः । न चैकत्रात्मन्येकदानेकाशुविनाशिगुणोत्पत्तिविरोधः । कायव्यूहानुरोधेनावच्छेदभेदे तदविरोधकल्पनादिति भावः । अत्र शिरश्चरणावच्छेदेन युगपदनुभूयमानयोः सुखदुःखयोरपि कुतः क्रमः नानामनःप्रवेशेन युगपदेवोत्पत्तिसम्भवात्तस्य च फलबलकल्पनया न व्यासङ्गानुपपत्तिरपि । किञ्चैकस्मादेवात्ममनःसंयोगात् युगपद्विंशत्यङ्गुलीचालनकालेऽनेकप्रयत्नवत्कुतो न गोधाभागचालनं कायव्यूहचेष्टादिकं वा देहैक्ये सुखं दुःखादियौगपद्यं वाऽनुभवसिद्धपञ्चावधानयौगपद्यं वोपपद्यत इति चिन्त्यम् । प्राचां मतमाह वेगवदिति । वायुसंयोगात्तृणादाविवेति भावः । एवमपि निःस्पर्शत्वं कुत इत्यत आह । एवमिति । स्पर्शवत्त्वम् ह्यस्याव-

पृथिव्यादिभिन्नत्वे च स्पर्शकल्पनायां कल्पनागौरवमिति न किञ्चिदनुपपन्नम् ।

इति मनोणुत्ववादः समाप्तः ॥ ७ ॥

---

यवारब्धत्वात्स्यादनारब्धस्यापि चतुर्विधपरमाणुवत्पृथिवीत्वादेर्वा नोभयमपीति क्रमेणाह । अणुत्वे सिद्धे इति । पूर्वन्यायेनेति । रूपाद्यग्राहकत्वप्रसङ्गेनेत्यर्थः ॥

इतिश्रीसकलसामन्तप्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां मनोणुत्वप्रकरणम् ।



इह शब्दस्य स्वातन्त्र्येण प्रामाण्यमनिच्छन्तो अनुमानभावेन तत्प्रामाण्यमिच्छन्ति वैशेषिकादयः । तत्र(१) तेषामयमाशयः । सामान-

शब्दस्य स्वतन्त्रप्रमाणतां व्यवस्थापयिष्यन् प्रमाणत्वं प्रत्यक्षादित्रिकातिरिक्तवृत्ति न वा पर्वतो वन्हिमानितिपदसमुदायज्ञानं पर्वतवह्निसंसर्गगोचरानुमित्यतिरिक्तज्ञानकरणम् न वा शक्तत्वमनुभावकत्वावच्छेदकम् न वेत्यादिसंशयमभिप्रेत्य तज्जननीं स्वाभिमतविपरीतकोट्युपस्थितिमाह । इह शब्दस्येति । इह प्रमाणेषु शब्दस्य शक्तमात्रस्येति गुरुमतव्यवच्छेदाय स्वातन्त्र्येणानुमानान्तर्भावेनेति सौगतमतव्यावर्त्तनाय तै. प्रामाण्यस्यैवानङ्गीकारादित्यपव्याख्यानम् । तथा सति वैशेषिकादय इत्यादिपदार्थानन्वयप्रसङ्गात् । तैरपि वक्तृविवक्षानुमापकत्वस्वीकाराच्च । यथाहुः सौगताः । वक्तुरभिप्रायं सूचयेयुरिति । अत एवास्याप्रामाण्येप्येतदुत्थाप्यानुमानेत्यादिना चिन्तामणिकृता तथैव तन्मतं विवृतं किन्त्वसदनुवाददोषनिरासाय । शक्तत्वं नानुभावकत्वावच्छेदकम् तत्रान्यथासिद्ध्यवच्छेदकत्वात् । इन्द्रियकर्मवदित्यनुमाने विवक्षिते हेतोरसिद्धिमप्रयोजकतां च निराकुर्वन् पूर्वपक्ष्याशयमनुवदति । तेषामिति । पदार्थमात्रशक्ततया तत्स्मारकतैव पदानां नान्वयानुभावकताऽसंसर्गाग्रहनिबन्धनस्तु संसर्गव्यवहार इति

(१) तत्र इति नास्ति । २ पु० ।

येति वाक्यश्रवणानन्तरम् अन्वयप्रतीतिस्तावदनुभूयते। वाक्ये चाकांक्षादिमत्त्वप्रतिसन्धानम् तदर्थप्रतिपत्त्यनुकूलतयाऽवधृतम्। तथा चाकांक्षादिमत्पदकदम्बकप्रतिसन्धानस्यावश्यकतया तस्य स्वस्मारितार्थसंसर्गज्ञप्तिपूर्वकत्वनियमेनानुमानादेव तदुत्पत्तिफलसिद्धौ किमिति शब्दस्य प्रमा-

---

प्रामाण्यमेव नास्ति क्वान्तर्भावबहिर्भावचिन्तेति तटस्थशङ्कायामाह। गामानयेति। ननु तथापि नानुमानता ज्ञानस्य पदत्वमात्रस्य व्यभिचारित्वेनालिङ्गत्वात्। आकांक्षादिविशेषितस्य व्यभिचारिव्यावृत्तत्वेऽप्यज्ञानात्स्वरूपसदाकांक्षादिमत एव शब्दात्संसर्गबोधसंभवादित्यत आह। वाक्ये चेति। तदवधारणस्य प्रकृतोपयोगमाह। तथाचेति। ननु तादृशपदकदम्बकत्वस्य तदर्थसंसर्गेण समं देशतः कालतो वा न व्याप्तिरिति कथं तेन तदनुमानमत आह। तस्य स्वस्मारितेति। अस्तु वस्तुतो व्याप्तिर्न त्वाकांक्षादिमत्पदकदम्बकज्ञानमिव तज्ज्ञानमनुभूयते यत्संसर्गमनुमापयेदित्याशंक्याह। अनुमानादेवेति। फलं संसर्गविगमः प्रमाणान्तरकल्पनाद्वरं क्लृप्तानुमितिहेतुभावव्याप्तिज्ञानकल्पनमिति भावः। तदेवमनुमित्यन्तरे क्लृप्तपूर्ववर्तिना व्याप्तिविशिष्टपक्षधर्मताज्ञानेन विशेषसहभावित्वात्पदज्ञानस्यान्यथासिद्धिं दर्शयता हेत्वसिद्धिः निराकृता। सम्प्रति तदेव

णान्तरत्वाभ्युपगमः। तथाहि। एतानि पदानि तात्पर्यविषयस्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि आकांक्षादिमत्पदकदम्बत्वात् गामभ्याजेतिपदकदम्बवदिति ज्ञानावच्छेदकतया संसर्गसिद्धिरनुमानादेव भवति। अर्थपक्षकेऽनुमाने साक्षादेव संसर्ग-

स्फुटीकुर्वन्ननुमानमभिनयति। एतानि पदानीति। प्रतियोगिविशेषोपरक्तसंसर्गसिद्ध्यर्थमाह एतानीति। विशिष्य श्रूयमाणानीत्यर्थः। धूमोऽस्तीतिवाक्ये धूमसंसर्गज्ञानेनार्थान्तरतानिवृत्त्यै स्वस्मारितार्थेति। वृत्त्या स्मारितत्वम् तदर्थः। अन्यथा वन्हेरपि स्वहेतुधूमोपस्थापकधूमपदस्मारितत्वसम्भवेनार्थान्तरतादवस्थ्यात्। न च शुकाद्युच्चारिते धूमोऽस्तीत्यादिवाक्ये व्यभिचारः। तदीयसंसर्गज्ञानाभावेपीश्वरीयतदर्थसंसर्गज्ञानपूर्वकत्वसम्भवात्। साध्ये ज्ञानप्रमा अन्यथा वस्तुसत्त्वासिद्धिप्रसङ्गादित्याहुः। अन्ये तु स्वस्मारितपदार्थयोर्यः संसर्गः तज्ज्ञानपूर्वकानीति साध्यार्थकरणे प्रमाणमेव पर्यवसानम्। भ्रमस्थले परस्परसंसर्गस्यासत्त्वेन दुर्ज्ञानतयैकस्मिन्नेवापरसंसर्गभानस्वीकारादित्याहुः। गामानय दण्डेनेत्यत्र कर्मकरणव्यत्ययेन संसर्गसिद्ध्याऽर्थान्तरवारणाय तात्पर्यविषयत्वमपि संसर्गविशेषणं द्रष्टव्यम्। तज्ज्ञानं च न विशिष्य विवक्षितम्। तदवच्छेदकतयैव संसर्गसिद्धावनुमानवैयर्थ्यात्। नापि सामान्यतः। लवणपरस्य सैन्धवपदस्य सैन्ध-

वपदार्थकर्मत्वे तात्पर्यावधारणेऽश्वादिसंसर्गसिद्ध्यार्थान्तरप्रसङ्गात्। किन्तु लवणादिपदार्थकर्मत्वे तात्पर्यमित्यादिरूपं विवक्षितम्। हेतौ नदीकच्छसंसर्गपरतयोच्चारिते अहो विमलं जलं नद्या इत्येकदेशे व्यभिचारवारणाय तात्पर्यगर्भाकांक्षोपादानम्। न चेश्वरतात्पर्यमादाय तत्रापि तद्गर्भाकांक्षोपपत्तिः। अजनितान्वयबोधस्यैव व्यभिचारोदाहरणस्य वारणीयत्वात्तस्य चेश्वरतात्पर्याकल्पनात्। एवं च यद्यपि सत्तात्पर्यकत्वमेव व्यभिचारवारकम् तथापि तात्पर्यस्यान्वयविशेषणत्वेनाकांक्षाप्रविष्टतया यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यम्। ननु तथाऽपि सत्तात्पर्यकत्वघटितहेतोरप्येतत्साध्यव्याप्यत्वात् तस्य च घटः कर्मत्वमित्यादावपि सुवचत्वात्ततोपि संसर्गबोधः स्यादिति चेत् न लिङ्गत्वविधयेष्टत्वादिति वदन्ति। आदिपदेन योग्यतासत्तिपरिग्रहः। नदीतीरे पञ्च फलानि सन्तीत्ययोग्यवाक्ये व्यभिचारनिरासाय योग्यतोपादानम्। योग्ये साकांक्षेऽसङ्केतादजनितपदार्थस्मरणे व्यभिचारवारणायासत्त्युपादानम्। तदन्तर्गताव्यवधानभागस्तु सम्पातायात एव। नचैवं व्यवधानसन्देहादावुक्तहेतुविज्ञानविघातादानुमानिकसंसर्गबोधापत्तिः स्वातन्त्र्यपक्षेपीष्टत्वस्यैव परिहारत्वादिति। गामभ्याजेतिपदकदम्बः स्वप्रयुक्तो दृष्टान्तः परप्रयुक्तस्य पक्षतुल्यत्वात्। ज्ञानावच्छेदकतया विषयीभूतज्ञाने व्यापकतावच्छेदकतयेत्यर्थः। अत्र गोकरणकदण्डकर्मकानयनतात्पर्य-

सिद्धिः। एवं हि तत् । एते पदार्थाः तात्पर्यविषयमिथःसंसर्गवन्तः आकांक्षादिमत्पदकदम्बकस्मारितपदार्थत्वात् गामभ्याजेतिस्मारितपदा-

कादव्युत्पन्नवक्तृकाद्गामानयेतिवाक्यादनुमानविधया संसर्गबोधाभ्युपगमे व्युत्पन्नस्यानुभवविरुद्धसंसर्गबोधप्रसङ्गः तथा तज्जनितधूमसंसर्गबोधे वह्निसंसर्गमात्रतात्पर्यके धूमोस्तीत्यादिवाक्ये व्यभिचारश्च । अजनितबोधत्वेनेश्वरतात्पर्यस्याप्यकल्पनात् । किञ्च पदेषु स्वार्थसंसर्गज्ञानपूर्वकत्वानुमितौ रजतत्वाद्यप्रकारकतया प्रवृत्तिविशेष्ये इष्टतावच्छेदकवैशिष्ट्यानवगाहित्वेन ततस्तत्र प्रवृत्त्यनुपपत्तिः । न च पक्षीकृतरजतादिपदजन्यस्मृत्युपनीतं रजत्वादिकमपि प्रकारीभवत्यनुमितौ । उपनीतभानानभ्युपगमात् अतः प्रवर्तकं ज्ञानं शब्दादेवेत्यस्वरसादाह । अयपक्षके त्विति । साक्षादन्यानुपसर्जनत्वेन । एते पदार्था इति । गामानयेत्यादिपदेभ्यो गोत्वादिनेष्टतावच्छेदकरूपेणैवोपस्थितौ इत्यर्थः । वह्निसंसर्गतात्पर्यकेण धूमोस्तीति वाक्येन प्रतिपादितेषु पदार्थेषु तात्पर्यविषयवह्निसंसर्गसिद्ध्यार्थान्तरनिवृत्त्यै मिथःपदम् । न च प्रमेयत्वे प्रमेयत्वमित्यत्र मिथोर्थघटितसाध्याभावाद्व्यभिचारः । एतत्पदार्थः एतत्पदार्थसंसर्गी एतत्पदनिरूपिताकांक्षादिमदेतत्स्मारित्वात् । यो यन्निरूपिताकांक्षादिमद्यत्पदस्मारितः स तत्संस-

र्थवदिति । न च संसर्गविशेषासिद्धिः । प्रतियोगिन एव विशेषत्वात् । तस्य च पक्षधर्मताबलात्सिद्ध्यविरोधादिति ।

अत्रोच्यते । घटमानयेत्यस्य वाक्यस्य वक्तृज्ञानानुमापकत्वेपि तत्र प्रतियोगिविशेषोपर-

र्गीति पृथक् पृथक् अनुमानस्यैव मिथःपदेन सूचितत्वात् । व्यत्ययेन संसर्गसिद्ध्याऽर्थान्तरवारणाय तात्पर्यविषयत्वविशेषणम् । अजनितान्वयबोधशुकोदीरितपदकदम्बस्मारितपदार्थेषु व्यभिचारवारणाय हेतावाकांक्षेति । सा च तात्पर्यघटिता बोध्या अतो न व्यभिचारतादवस्थ्यम् । अयोग्यपदार्थेषु तन्निरासायादिपदेन योग्यतोपग्रहः । आसत्तिलाभः स्मारितपदादेव । न च घटोस्तीति योग्यसाकांक्षेण शक्तिभ्रमात् स्मारितेऽयोग्यपदार्थे व्यभिचारः । स्मारितत्वांशे योग्यतात्वस्य विवक्षणत्वात् । स्मारितत्वं च वृत्त्या विवक्षितमिति आश्रयतया पदस्मारिते नाकाशादौ व्यभिचार इति । नन्वेवमपि नेष्टतावच्छेदकप्रवृत्तिविशेष्यसंसर्गसिद्धिः । स्तम्भकुम्भयोर्यो मिथः संसर्गस्तेनाऽर्थान्तरत्वादित्याशङ्क्य बाधेनार्थान्तरनिवृत्तौ तत्सिद्धिरविरुद्धेत्याह । नचेति प्रतियोगिविशेषसिद्धावेवमेतत् तत्रैव तु न मानमत आह तस्य चेति ॥

(१)पदपक्षकानुमाने दूषणमाह । घटमानयेत्यस्ये-

(१) सिद्धान्तमाह पदेति ।

क्तसंसर्गगोचरत्वेपि न घटकर्मकानयनसिद्धिः(१)। तत्र पक्षधर्मताया असामर्थ्यात्। घटानयनयोरन्यथापि संसर्गसम्भवात्। एवमर्थपक्षकेपि दूषणमूहनीयम्। यत्र वा वक्तुः न संसर्गज्ञानम् शुकवद्वाक्यमात्रमसौ प्रयुङ्क्ते तत्र कथं वक्तृज्ञानानुमानम्। न च संसर्गप्रत्यय एव न जायते।

ति। प्रतियोगिविशेषेति। वस्तुतो यः प्रतियोगिविशेषस्तदुपरक्तसंसर्गगोचरत्वेपीत्यर्थः। अनुमितेरिति शेषः। न घटकर्मतेति। घटकर्मत्वानयनानां तात्पर्यविषयोपि संसर्गः तात्पर्यविषयसंसर्गत्वेनैव प्रतीयेतानुमितेः व्यापकतावच्छेदकप्रकारकत्वनियमान्न तु शब्दादिवेति भावः। घटानयनयोरिति। क्रियाकरणभावादिप्रकारकेत्यपव्याख्यानम्। करणत्वस्य प्रवृत्त्या पदास्मारितत्वात्। किन्त्वमर्थेनानयनस्य आख्यातार्थेन घटस्येति। न च तात्पर्यविषयत्वविशेषणादिष्टसिद्धिः तस्मादपि हि तात्पर्यविषयत्वेनैव तत्सिद्धिर्न तु यथा तात्पर्यविषयस्तथेति भावः। अर्थपक्षकानुमानेप्याह। एवमिति। एते पदार्था इति। समप्राधान्योपस्थितपदार्थविशेष्यकसंसर्गवत्त्वप्रकारकज्ञानसिद्धावपि प्रवृत्तिविषये इष्टतावच्छेदकवैशिष्ट्यानवगाहित्वेन तस्याप्रवर्तकतापत्तिः इत्येवं रूपमित्यर्थः। वक्तृज्ञानानुमानाभावेपि वाक्यार्थबोधदर्शना-

(१) गोचरत्वेपि घटकर्मकानयनासिद्धिः-पा० ३ पु०।

बाधकाभावात् । प्रतीतेरनुभवसाक्षिकत्वाच्च । किन्नु केयमाकांक्षा यया हेतुर्विशेषणीयः । न-तावत्प्रतिपाद्यजिज्ञासा । घटो भवतीत्यत्र रूपा-दिविशेषाकांक्षायां साकांक्षत्वप्रसङ्गात् । तथा च किञ्चिदपि वाक्यं निराकांक्षं स्यात् । समभिव्या-हृतपदार्थविषया सेति चेत् । न एतस्याः सर्व-त्राभावात् । यथाहि । अनिच्छन्निव चक्षुरादेरिव

च्छन्दः पृथक् प्रमाणमित्याह । यत्रेति । छान्दसोक्त-श्लोकादावित्यर्थः । नन्वीश्वरप्रमावच्छेदकतया तत्रा-स्तु संसर्गसिद्धिरयोग्ये का गतिरिति चेत् । तत्त्वेन ज्ञाते संसर्गाभावसिद्धिरेव । अज्ञाते तु लिङ्गभ्रमाद्धूमरूपासंसर्ग-प्रमापूर्वकत्वानुमितिरेवेत्यपरितुष्यन् विशेषणानासिद्ध्या हेतुं विघटयितुमुपक्रमते । केयमिति । यत्पदार्थज्ञाने सति प्रतिपाद्यस्य यत्पदार्थविषया जिज्ञासा जायते सैव तस्य तेन साकमाकांक्षेत्याशङ्क्याह न तावत्प्रतिपा-द्येति । असमभिव्याहृतेनापि साकांक्षत्वे दोषमाह । तथाचेति । अत्रासमभिव्याहृतसाकांक्षतया न तावच्छ्रु-तान्वयबोधरोधः शक्यतच्छेत्वादिधीसत्त्वात् । नाप्यश्रु-तान्वयबोधः पदविशेषजन्यपदार्थोपस्थितिरूपासत्त्व-भावात् । कुतश्च किञ्चिदपि वाक्यम् न निराकांक्षं स्यात् । न हि प्रतिपाद्यजिज्ञासया भवितव्यं सर्वत्रेति नियमः आकांक्षाया उत्थाप्यतालोपप्रसङ्गादिति चि-

वाक्यादन्वयमनुभवति । एवमपि सा ज्ञाता न कारणम् । प्रमाणाभावात् । तथा च कथमनया हेतुर्मनस्संयोगादिमेव विशेषणीयः । न चान्वयानुपपत्तिराकाङ्क्षा । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र पुरुषान्वयेनाप्युपपन्नसमभिव्याहारस्य राज्ञ इत्यस्य पुत्रे साकाङ्क्षताविरहप्रसङ्गात् । न चान्वयापर्यवसानं सापेक्षत्वम्

न्त्यम् । समभिव्याहृतेति । एकान्वयपरतया प्रतिसन्धीयमानानां पदानामर्थेषु या जिज्ञासा सैवाकाङ्क्षेत्यर्थः । श्लोकगतव्यस्तपदार्थाकाङ्क्षायामव्याप्तिनिरासाय प्रतिसन्धीयमानान्तम् । अव्याप्त्या दूषयति । एतस्या इति । तामेवोपपादयति । यथाहीत्यादिना । किञ्च ज्ञानेच्छा स्वरूपसत्त्येव फलेच्छात्वेन स्वोपाये पुरुषं प्रवर्तयन्ती ज्ञानं जनयिष्यति किं तज्ज्ञानेनेत्याहैवमपीति । प्रकृते सङ्गमयति । तथाचेति । स्वरूपसद्धेतुनापि हेतुविशेषणेऽतिप्रसङ्ग इत्याह मनःसंयोगादिनेति । व्याप्तिग्रहोपयोगिरूपेण ज्ञातस्यैव हेतुत्वादिति भावः । अन्यथानुपपत्तेरिति । येन विना यस्य यद्रूपस्वार्थान्वयाननुभावकत्वं तत्तेन तत्रान्वये साकाङ्क्षमित्यर्थः । पुत्रपदेन विनापि पुरुषपदमुपादायान्वयानुभावकस्य राजपदस्य तदनाकाङ्क्षताप्रसङ्गेन दूषयति । अयमेतीत्यादिना । ननु तात्पर्यविषयत्वमन्वयविशेषणस्

वा आकाङ्क्षा । अनयोर्निर्वक्तुमशक्यत्वात् । नाप्यविनाभाव आकाङ्क्षा(१) । घटवद्भूतलमित्यत्राविनाभावाभावेऽप्यन्वयबोधदर्शनात् । यथाकथञ्चिदविनाभावस्य गौरश्व इत्यादावपि भावात् । तस्माज्जिज्ञासां प्रति योग्यताकाङ्क्षा । सा तु

अस्ति चेहापि पुत्रपदं विना तात्पर्यविषयपुत्रान्वयाननुभावकत्वं राजपदस्येति चेन्न । तात्पर्यज्ञानस्यान्वयबोधानङ्गत्वात्तात्पर्यसंशयेऽप्यन्वयबोधस्यानुभवसिद्धतया तत्रैव तात्पर्यगर्भाकाङ्क्षाविशेषितलिङ्गसन्देहेऽनुमित्ययोगप्रसङ्गाच्चेति भावः । अनयोरिति । अनुपपत्तिजिज्ञासातिरिक्तयोरिति शेषः । तयोश्च निरस्तत्वादिति भावः । अविनाभाव आकाङ्क्षेति त्वमपि न स्वीकुरुषे किं तद्दूषणेनेत्यत आह । नाप्यविनाभाव इति । स हि पदार्थतावच्छेदकरूपेण वा विवक्षितोऽन्यथा वा । नाद्य इत्याह घटवद्भूतलमिति । यद्यप्यनुभाव्यान्वयप्रतियोगिघटभूतलव्यक्त्योरविनाभाव एव तथापि अनुभवपूर्वकाले व्यक्तिविशेषावच्छिन्नाविनाभावस्य दुर्ज्ञानतया पदार्थतावच्छेदकपुरस्कारेणैव तद्ग्रहो वाच्यः । स च प्रकृते न सम्भवतीति भावः । न द्वितीय इत्याह । यथाकथञ्चिदिति । प्रमेयत्वाभिधेयत्वावच्छेदेनेत्यर्थः । शब्दत्वात-

(१) नाप्यविनाभावमाकाङ्क्षां स्वीकुरुषे पा० ५ पु० ।

समभिव्याहारविशेषः । यथाभूते कदाचिज्जा-
यते जिज्ञासा । स च गौरश्व इत्यादौ नास्ति ।
तेन कदाचिदपि समभिव्याहृतपदार्थविषयजि-

ज्ञासपक्षे यादृशी सहकारिणी सैव हेतुविशेषमस्त्वित्यत आह । तस्मादिति । अजिज्ञासोरपि वाक्यार्थबोधे योग्यतास्त्येवेति भावः । तदवच्छेदकमाह । सा तु समभिव्याहारेति । विशेषमेव विशदयति । यथाभूत इति । यदन्वयप्रकारकजिज्ञासाजनको यः समभिव्याहारः स तत्रान्वयबोधे आकाङ्क्षा गौरश्व इत्यभेदान्वये साकाङ्क्षमेवायोग्यतया नान्वयबोध इत्यन्यदेतत् । अन्वयान्तरेषु निराकाङ्क्षं तज्जिज्ञासायां स्वरूपायोग्यत्वादिति भावः । "अत्र कदाचिदिति विशेषणमुपाददानः अहो विमलं जलं नद्या कच्छे महिषश्चरति इत्यत्र नदीपदमुभयत्र साकाङ्क्षमन्वयबोधजनकं च । अन्यतरान्वयाबोधमात्रतात्पर्यग्रहे त्वनेकान्वयबोधसामग्रीसमवधानस्थलीयस्य तस्येतरान्वयबोधप्रतिबन्धकतयेतरान्वयबोधक्लृप्तसामग्री न, प्रकृतान्वयबोधश्चेति न तात्पर्यज्ञानकरणताप्रसङ्गो न वोभयान्वयबोधप्रसङ्गः । न च तात्पर्यसंशयव्यतिरेकनिश्चययोरन्वयबोधप्रतिबन्धकता । येन तन्निश्चयः कारणं स्यात् । धूमोऽस्तीति वाक्यं न धूमान्वयपरमित्यवगतेऽपि व्युत्पन्नस्य तदन्वयबोधावश्यम्भावादिति स्वाशयं सूचयति ।" ननु मात्सर्यमपहाय ज्ञानयोग्यतैवाकाङ्क्षा स्वीक्रियतां न चान्वययोग्यतया

ज्ञासाया अजननात् । एतदेवाभिसन्धायोक्तम् । श्रोतरि तदुत्पाद्य संसर्गावगमप्रागभाव आका-

ङ्क्षानाजनकेऽङ्गुल्यग्रे करिशतमित्यादिवाक्येऽव्याप्तिवारणाय तथानङ्गीकारः । योग्यताभ्रमकालीने वाक्यार्थभ्रमे तस्यैव कारणत्वेन ज्ञानयोग्यताया अपि सत्त्वादिति चेत् । न। उभयथापि समभिव्याहारविशेषानुसरणस्यावश्यकत्वेन विवक्षितेऽर्थे वैयर्थ्यात्। इच्छार्थकाकाङ्क्षापदार्थानुरोधेन जिज्ञासोपादानात् । जिज्ञासायोग्यतैवाकाङ्क्षा । जिज्ञासा चाज्ञात एव संसर्गे सम्भवतीति संसर्गावगमप्रागभावस्याकाङ्क्षात्वोपवर्णनमिति आचार्यवचनविरोधं परिहरति । एतदेवेति । श्रोतरीति । पदप्रतिसन्धातरीत्यर्थः । तेन मौनिवाक्याकाङ्क्षाग्रहः । घटः कर्मत्वमित्यादावतिव्याप्तिवारणाय तदुत्पाद्येति । पदप्रतिसन्धानं तदर्थो न पदं बाधात् । पदार्थावगमप्रागभावमादाय तत्रैवातिव्याप्तिवारणाय संसर्गेति। अवगमध्वंसमादाय जनितान्वयबोधेऽतिव्याप्तिनिवृत्त्यै प्रागिति । न चावगमान्तरप्रागभावमादाय तादवस्थ्यम्। अवगमान्तरस्य तत्प्रतिसन्धानानुत्पाद्यत्वात् । यत्संसर्गावगमप्रागभावस्तत्संसर्गबोध आकाङ्क्षा। तेन घटः कर्मत्वमित्याद्यभेदान्वयबोधे साकाङ्क्षं नान्यत्रेति द्रष्टव्यम् । श्रोतरीति स्वरूपनिर्वचनमित्येके । अन्यत्र साकाङ्क्षतावारणायेत्यपरे । असति श्रोतरि पदे तत्पदेन श्रवणपरामर्शानुपपत्तिः । तदभावे चासम्भव इति श्रोतरीति, नेयमाकाङ्क्षा हेतुविशेषणं

श्रोतृवृत्तित्वेन पक्षीभूतेषु पदेषु स्वरूपासिद्धेरिति दर्शयितुं वा तदिति वयम् । न चाभावरूपायां तस्यामुक्तियतोऽत्याप्यभेदानुपपत्तिः । ससम्बन्धिकासम्बन्धिकपदार्थसंसर्गावगमप्रतियोगिव्यवस्थया तदुपपत्तेः । न च विमलं जलं नद्याः कच्छे इत्यादौ श्रोतृभेदव्यवस्थितविलक्षणसंसर्गावगमप्रागभावभेदादुभयसाकाङ्क्षतापत्तिर्नदीपदस्य । इष्टापत्तेः । न च प्रागभावाभावस्य कारणान्तराभावव्याप्ततया तत एवान्वयबोधोपपत्तौ न तद्रूपाकाङ्क्षाकारणत्वसिद्धिः । प्रागभावकारणतामात्रोच्छेदप्रसङ्गाज्जातान्वयबोधजन्मप्रसङ्गाच्च । न चैवं योग्यताव्युच्छेदप्रसङ्गः । प्रागभावव्यतिरेकादेवायोग्यान्वयबोधव्यतिरेकोपपत्तेरिति वाच्यम् । तस्याकाङ्क्षारूपत्वाभावेऽप्यसाधारणकारणताया आवश्यकत्वेन कारणान्तरोच्छेदस्योभयसमाधेयत्वात् । न च शब्दानुभवमात्रे अनुगताकाङ्क्षालाभः तत्प्रागभावानां तत्तत्संसर्गावगम एव हेतुत्वादिति वाच्यम् । तत्तदनुमितौ तत्तत्सिद्ध्यभावात्मकपक्षताया इवाकाङ्क्षाया अपि तत्तदन्वयबोधे पृथगेव कारणत्वस्य तद्वदेवानुगतव्यवहारस्य स्वीकारात् ।

ननु घटः कर्मत्वमित्यादौ संसर्गानवगममादायाकाङ्क्षाविरहस्ततश्च संसर्गानवगमः साकाङ्क्षपदत्वेनैव तज्जनकत्वादित्यन्योन्याश्रय इति चेत् । न अन्वयविशेषबोधे पदविशेषान्वयबोधस्यैव स्वरूपयोग्यत्वादत्र च तदभावादेव संसर्गानवगमात् । न च स्वतन्त्र-

ङ्क्षेति । न चैषाऽन्वयज्ञाने जनयितव्ये स्वज्ञानमपेक्षते । तथात्वे वा व्याप्तिज्ञानविषयतया वाक्यज्ञानस्यान्वयबोधजनकतायामेव कल्पना-

सहकारिण्याकाङ्क्षायाः पदकारणतावच्छेदकत्वे प्रमाणमस्ति पक्षताया इवानुमितिकारणतावच्छेदकत्वे । न चैवं घटः कर्मत्वमित्यादौ स्वरूपायोग्यत्वादेव संसर्गानवबोधे आकाङ्क्षाकारणमेव न स्यादिति वाच्यम् । जनितान्वयबोधादन्वयबोधान्तरोत्पत्तेरन्यथा दुःपरिहरत्वात् । अत एव नैतज्ज्ञानं कारणं विनष्यदवस्थादाकाङ्क्षाज्ञानाच्छब्दादिजनिताद्वाऽन्वयबोधान्तरप्रसङ्गात् । यत्तु राजा पुत्रमाकाङ्क्षति पुरुषं चेति संशयव्यतिरेकनिश्चयप्रतिबन्धकतया तात्पर्यगर्भाकाङ्क्षाज्ञानस्य कारणताभिधानं चिन्तामणिकृतस्तत्तात्पर्यज्ञानस्यैव कारणतां गमयति न तदितरगर्भस्येत्यप्रयोजकमित्यभिप्रेत्याह । न चैषान्वयेति । एषा प्रागभावरूपा । ननु जनितान्वयबोधादप्यन्वयबोधान्तरतात्पर्यावधारणे बोधान्तरोदयात् । अन्यथा चानुदयात्तात्पर्यगर्भाकाङ्क्षाज्ञानं हेतुरिति चेत् । न । असिद्धेः उक्तोत्तरत्वाच्च द्वितीयसंसर्गावगमप्रागभावस्य द्वितीयसंसर्गबोधेऽप्याकाङ्क्षात्वसम्भवाच्चेति भावः । प्रकृतान्वयबोधाविरोधी समभिव्याहार एवाकाङ्क्षेति पूर्वोक्तानुरोधेनाह । तथात्वेपि वेति । अनुभवबाधितं व्याप्तिज्ञानकल्पनं मध्ये

गौरवपराघातः। अपि च व्याप्तिसंशयेऽपि विशिष्टबोधस्य जायमानत्वात् । गुरूणां वैदिकवाक्यस्य स्वातन्त्र्येणैव प्रामाण्यम्। लौकिके तु वक्तृज्ञानानुमानादेव संसर्गसिद्धौ तस्यानुवादकतामात्रमिति यदभ्युपगमः । तदपि त्रपाकरम्। तथाहि। आकाङ्क्षादिमत्तया तावत्संसर्गप्रत्यायकत्वं लौकिकवद्वैदिकेपि साधारणम् । न च लौकिके तात्प-

इति भावः । एवमन्यत्र क्लृप्तपूर्ववर्त्तिव्याप्तिज्ञानसहभूतत्वलक्षणान्यथासिद्ध्युद्धारे पूर्वानुमानमसिद्धम्। स्वपक्षे च पर्वतो वह्निमानिति पदसमूहालम्बनं ज्ञानं न पर्वतवह्निसंसर्गानुमितिकरणं व्याप्त्यविषयत्वाच्चक्षुर्वदित्यनुमानमिति सूचितम्। गुरुमतं दूषयितुमनुभाषते । गुरूणान्त्विति । यदभ्युपगम इति । यतो हेतोरभ्युपगमः अपौरुषेये वेदे वक्तृसंसर्गज्ञानानुमानासम्भवात् । लौकिकवाक्ये तात्पर्यज्ञानस्य सहकारित्वात्तदभावेनाकाङ्क्षादिमत्तया प्रतिसंहितस्यापि शब्दस्याबोधकत्वात् । तदभावे च तात्पर्यावच्छेदकतया संसर्गसिद्धेरावश्यकत्वाच्च । तदभ्युपगम एव त्रपाकरमित्यर्थः । किमाकाङ्क्षादेरन्वयबोधाप्रयोजकत्वात्? किं वा वैदिकपदेषु क्लृप्तायाः सामग्र्या अभावात्? उत विशेषापेक्षितकारणविशेषाभावात् लौकिकस्यानुवादकत्वम्? नाद्य इत्याह । आकाङ्क्षादीत्यादिना वैदिकवदित्यन्तेनासिद्धवदनु-

र्यग्रहापेक्षया विलम्बः । तात्पर्यग्रहस्यान्वयबोधानङ्गत्वात् । तात्पर्यसंशयेऽपि वाक्यार्थबोधदर्शनात् । अन्यथार्थान् पक्षीकृत्य वेदेपि संसर्गानुमानसम्भवात् तस्यानुवादकता स्यादित्यास्तां विस्तरः ।

इति शब्दस्वातन्त्र्यप्रामाण्यवादः समाप्तः ॥ ६ ॥

वादेन । न द्वितीय इत्याह लोकेपीति । अन्त्यं शङ्कित्वा दूषयति । न च लौकिकेति । तात्पर्यनिश्चयेपि वैदिकादिवल्लौकिकादपि व्युत्पन्नस्यान्वयबोधेन व्यभिचारान्न तत्कारणमित्याह । तात्पर्यग्रहस्येति । प्रमाणान्तरेण संसर्गज्ञानसम्भवादेवानुवादकत्वे वेदेऽपि तथा स्यादित्याह । अन्यथेति । वस्तुतस्तु संसर्गत्वेनानुमानात्संसर्गसिद्धावपि अनुभवसिद्धविषयवैलक्षण्यात् वृत्त्युपयोगिनी संसर्गसिद्धिः शब्दादेवेति भिन्नविषयत्वात्क्वानुवादकतापीत्याह । इत्यास्तां विस्तर इति ।

इतिश्रीसकलसामन्तप्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां शब्दस्वातन्त्र्यप्रकरणम् ।

—:०:—

अत्र कर्मतत्त्वज्ञानयोस्तुल्यवत्समुच्चयेनापवर्गकारणत्वमित्येके । तत्त्वज्ञानद्वारा कर्मणां तत्र कारणत्वम् । तथा च न तुल्यवत्समुच्चय इत्याचार्याः । तत्र तेषामयमाशयः । तीर्थविशेषस्नानयमनियमकर्मणां तावन्निःश्रेयससाधनत्वं शब्दबलादवगम्यते। तत्र निःश्रेयसे जनयितव्ये तत्त्वज्ञानव्यापारकत्वं तेषां न तावच्छब्द एव बो-

मोक्षे कर्मणामारादुपकारकत्वं व्यवस्थापयिष्यन्मुमुक्षुकर्मव्यापारत्वं तत्त्वज्ञानवृत्ति नवेति विचाराङ्गसंशयजननीं विप्रतिपत्तिमाह । अत्रेति । तुलया संमिते वस्तुनी तुल्ये तयोरिव साम्येन द्वारद्वारिभावानापन्नतयेति यावत् । समुच्चयेन परस्परसाचिव्येन । एके भास्करीयाः । आचार्याः उदयनाचार्याः । तेषां समुच्चयवादिनाम् । कर्मणां तत्त्वज्ञानव्यापारकत्वे किं तत्तत्कर्मविधय एव प्रमाणमुत श्रुतार्थानुपपत्तिरिति विकल्पः । नाद्यः । तेभ्यः कर्मणां निःश्रेयससाधनताया इव तत्त्वज्ञानस्य द्वारताया अप्रतीतेरित्याह । तीर्थविशेषेति । तीर्थविशेषः कृष्णसन्निहितगोमत्यादिः । शब्दबलात् । अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधावित्यादिपुराणबलात् । ननु च साक्षात्साधनतावादो साधनताप्रतीतिपरम्पराघटकव्यापारमविषयीकृत्य न घटत इति अपूर्ववाच्यतान्यायेन शब्द एव वस्तुतः तत्त्वज्ञान-

धयति । तत्र तस्यौदासीन्यात् । न च कर्मणामा-शुतरविनाशित्वेन व्यापारः स्वीकर्तव्यः । तत्र दृष्टेन तत्त्वज्ञानेनैवोपपत्तावदृष्टकल्पनाया अ-युक्तत्वात्तत्त्वज्ञानव्यापारकत्वमिति वाच्यम् । तत्त्वज्ञानस्यापि व्यवहितत्वेन तदर्थमपि कर्म-कारणतानिर्वाहार्थमपूर्वव्यापारकत्वस्यावश्यक-ल्पनीयत्वात् । तथा च निःश्रेयस एव जनयि-तव्ये तदास्तामावश्यकत्वात् । उत्पन्नोऽपि तत्त्व-

---

व्यापारकतां बोधयेदत आह । तत्र तस्यौदासीन्या-दिति । सामान्यशब्दोऽन्यतमविशेषवादो तन्त्यजति न तु विशेषान्तरमुपादित्सितमपि विशेष्य बोधयतीति स्वभावादृष्टान्तस्यैवासम्प्रतिपत्तेः संप्रतिपत्तौ वा वक्ष्य-माणयुक्त्या।प्यपूर्ववाच्यतायाः क्लृप्तत्वेन तद्व्यापार-कत्वस्यैव प्रसङ्गादिति भावः । द्वितीयमुद्भाव्य दूषयति । न च कर्मणामिति । मुक्तेश्च कालान्तरीयत्वेनेति शेषः । तत्र दृष्टेनेति । तथा च लाघवसहकृतानुपप-त्तिस्तत्र मानमिति भावः । तत्त्वज्ञानस्यापीति । तत्त्व-ज्ञानव्यापारकत्वपक्षेपि तज्जनकापूर्वकल्पनावश्यम्भावेन द्वारद्वैतप्रसङ्गाद्वरमपूर्वद्वारकतैवेति भावः । तदपूर्वं आस्तां कर्मव्यापार इति शेषः । यद्वा तदपूर्वकद्वारकत्वमास्ता-मित्यर्थो द्रष्टव्यः । ननु कर्मणां तत्त्वज्ञानव्यापारक-तापक्षे न तदुत्तरं कर्मानुष्ठानं तत्संपाद्यस्य तत्त्वज्ञान-

ज्ञाने निःश्रेयसोत्पत्तये यमनियमादिकमवश्यमनुष्ठेयम्। तदानीमपि मोक्षार्थिनो यमनियमादावधिकारानपायात्। न चोत्पन्ने तत्त्वज्ञाने निःश्रेयसोत्पत्तेर्यमनियमाद्यनुष्ठानानवकाश इति वाच्यम्। न ह्येकस्मात्तत्त्वज्ञानादपवर्गस्तदभ्यासश्रवणात्। तथा च श्रुतिः—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते य उ विद्यायां रताः।

अस्यार्थः। अविद्या कर्म तदुपासते तत्रैवा-

---

स्य वृत्तत्वात्। पक्षान्तरे तु तत्त्वज्ञानिनो तदनुष्ठानप्रसङ्ग इत्याशङ्क्येष्टापत्त्या परिहरति। उत्पन्नेपीति। अधिकारेति। अधिकारस्य मुमुक्षाया अक्षतेरित्यर्थः। तत्त्वज्ञानत्वेनैव मोक्षजनकत्वात्। प्राथमिकतत्त्वज्ञानादेव मोक्षे क्व कर्मानुष्ठानावकाश इति तटस्थशङ्कां परिहरति। न चेति। तदभ्यासेति॥

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत्॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः।

इत्यादिपुराणेष्वित्यर्थः। उपपादिते उत्पन्नतत्त्वज्ञानस्य कर्मानुष्ठाने विपक्षबाधमुखीं श्रुतिं प्रमाणयति। तथाचेति। अविद्यापदस्य मिथ्याज्ञाने रूढत्वान्न कर्मणस्तत्त्वज्ञानसमुच्चयः श्रुत्यर्थ इत्याह। अस्यार्थ इति।

सक्ता भवन्ति ते अन्धम् तमः प्रविशन्ति। संसाराद्न प्रच्यवन्ते। तेन केवलकर्मोपासनेन न जन्मादिविच्छेदः। ये च विद्यायां रताः विद्या तत्त्वज्ञानम् तन्मात्रासक्ताः ते भूयोतिशयेनान्धं तमः प्रविशन्ति नित्याकरणेन प्रत्यवायस्यातिबहुतरत्वात्।

कर्मोपासनस्य मोक्षहेतुत्वाङ्गीकारात्तन्निन्दाऽयुक्तेत्यत आह। तत्रैवेति। न ज्ञानेपीत्येवकारार्थः। मुक्तिसाधनतया श्रुतान्यपि तान्युपासीना यदि न मुच्यन्ते तत्कि त्याज्यान्येव तानीति पर्यवसितं नेत्याह। तेनेति उ इत्यव्ययं चार्थत्वेन व्याचष्टे ये चेति। तत्त्वज्ञानस्यापि मोचकत्वश्रुतेस्तन्निन्दानुपपन्नेत्यवधारणेन व्याचष्टे। तन्मात्रासक्ता इति। तत्त्वज्ञानासक्तानां ततो मिथ्याज्ञाननिवृत्तौ तन्मूलकः संसार एव न सम्भवति कुतो भूयस्त्वमत आह। नित्याकरणेनेति। ननु साक्षात्कृततत्त्वस्य योगिनो रागाद्यभावे कथं प्रत्यवायः। न चैतन्मते रागादयो नादृष्टोपयोगिनः भोगेन कर्म क्षपयितुं निषिद्धाचरणेऽधर्मप्रसङ्गे मुक्त्यभावप्रसङ्गात् मुक्त्यविरोधन्येवापूर्व्वे तदनङ्गतौचित्याच्च। न च भूयःपदगर्भा श्रुतिरेवाकरणप्रत्यवाये रागाद्यभङ्गतायां मानमिति वाच्यम्। विद्यापदस्य विद्यापरत्वेनापि तदुपपत्तेः। न च तयामृतत्वानुपपत्तिः साक्षात्कारद्वारोपपत्तेरिति चेन्न। सिद्धान्ते वक्ष्यमाणत्वात्। ननु मोक्षाश्रमश्चतुर्थोत्र यो वै भिक्षोः

न च नित्यस्यापि संन्यासः । तत्संन्यासस्य निषिद्धत्वात् । समुच्चयप्रतिपादका च श्रुतिः—

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।

अस्यार्थः । विद्यां तत्त्वज्ञानं अविद्यां कर्म सह तुल्यवद्वेद प्राप्नोति । वेदेति प्रयोगस्य विद्लृ-लाभे इत्यस्य धातोश्छांदसत्वेन भास्करीयैर्दर्शितत्वात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः

---

प्रकीर्त्तित इत्यागमाच्चतुर्थाश्रमिणामेव मोक्षेऽधिकारस्तत्र च संन्यस्य सर्वकर्माणीति स्मृतेः कर्ममात्रत्यागाच्च क्व समुच्चयः क्वाऽकरणे प्रत्यवाय इत्यत आह । नच नित्यस्यापीति । तत्संन्यासस्य प्रतिक्षिप्तत्वादिति ॥

नियतस्य परित्यागः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥

इत्यादिनेत्यर्थः । पूर्वस्यामृचि विद्याविद्यापदयोः सावधारणव्याख्यानस्य समुच्चयप्रमाणाधीनत्वात्समुच्चयार्थां श्रुतिमाह । समुच्चयेत्यादिना । ननु वेदेऽत्र ज्ञानार्थकविदिबलात्समुच्चयज्ञानप्रशंसापरमिदं न तु समुच्चयपरमित्याशङ्क्याह । प्राप्नोतीति । स्वरूपेणाप्राप्तस्य ज्ञानमात्रविषयीकृतस्य कर्मणो मृत्युपदवाच्याकरणप्रत्यवायतरणकारणत्वानुपपत्तेः प्राप्तिरेव पदार्थ इति भावः । लाभार्थाद्विदेर्लटो णल्भावाद्विन्दती-

पन्था विद्यतेऽयनायेति वाक्यं तत्त्वज्ञानस्याप्यपवर्गसामग्रीनिवेशनपरम् न तु वाक्यान्तरावधृतकारणान्तरव्युदासार्थम् । ननु समुच्चये उपपत्तिविरोधः । तथाहि । काम्यनिषिद्धाभ्यां कर्मभ्यां न समुच्चयः । तयोस्त्यागात् । न नित्येन एकैकशो व्यभिचारात् । न साकल्येनासम्भवात् । नापि यत्याश्रमविहितेन । गृहस्थस्यापि मोक्षश्रवणादिति । मैवम् । निःश्रेयसहेतुतया प्रतिपा-

---

ति स्यादत आह । वेदेतीति । ननु तमेव विदित्वेतिश्रुत्या कर्मरूपस्य पथः साक्षान्निषेधात्कथमियं तद्विरुद्धे समुच्चये मानं स्यादित्यत आह । तमेवेति । त विदित्वैव मृत्युमत्येति अन्वयः कर्मरूपः पन्था अयनाय न विद्यत इत्यर्थत्वादिति भावः । तयोस्त्यागादिति । नियतस्य परित्याग इत्येकदेशवाक्यतया संन्यस्य सर्वकर्माणीत्यनेन चतुर्थाश्रमे नित्येतरकर्ममात्रत्यागबोधनादित्यर्थः । एकैकश इति । पूर्वपूर्वाश्रमीयनित्यकर्माभावेपि उत्तरोत्तराश्रमिणां तत्त्वज्ञानेप्यतिमुक्तिश्रवणादित्यर्थः । गृहस्थस्यापीति । न्यायागतधन इत्यादिनेत्यर्थः । यत्राश्रमे यानि निःश्रेयसहेतुतया [विहितानि तैरेवाश्रमिभः तत्त्वज्ञानस्य समुच्चयस्तानि च नियमादीन्यसाधारणान्यपि भगवदर्पणबुद्ध्या क्रियमाणानि ।

दित्तैर्यमादिभिः समुच्चयसम्भवात् । न च कर्मणां परस्परव्यभिचारान्निःश्रेयसे च स्वर्गवद्वैचित्र्याभावात् न तं प्रति(१) कारणत्वमिति वाच्यम् । स्वाभाविकविशेषविरहेऽपि प्रतियोगिभेदेन विशेषस्य निःश्रेयसेऽप्यविरोधात् । एतस्य चाभावरूपे कार्येऽवश्याभ्युपेयत्वात् । कथमन्यथाश्रयनाशपाकयो रूपनाशकरणत्वमिति । न च तत्त्वज्ञानस्य विहितत्वाददृष्टजनकत्वेनादृष्टस्यैव प्राधा-

यज्ञायाचरतः कर्म समग्रं प्रविलीयते ।

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥

इत्याद्येकवाक्यतापन्नात्स्वे स्वे कर्मण्यभिरत इत्यादिभगवद्वचनादिति परिहरति । नैवमित्यादिना । ननु निःश्रेयसहेतुत्वस्यैव बाधान्न तया प्रतिपादितैः समुच्चय इत्याशङ्क्याह न कर्मणामिति । यद्वा यत्कार्यं यत्कार्यकारणविजातीयकारणजन्यं तत्तत्कार्यविजातीयमिति व्याप्तेर्गृहीतनिःश्रेयसा विजातीयस्य यतिनिःश्रेयसस्य तत्कारणकर्मविजातीयकर्मजन्यत्वानुपपत्तिमाशङ्क्य निराचष्टे । न च कर्मणामिति । तत्तदात्मवृत्तिजातीयदुःखप्रतियोगितया दुःखध्वंसेपि वैचित्र्यसम्भव इत्याह । स्वाभाविकेति । प्रसङ्गात्तत्त्वज्ञानस्यापूर्वजनकत्वं निषे-

(१) तत्प्रति-५ पु० पा० ।

न्यम् । दृष्टेनैवोपपत्तावदृष्टकल्पनाया अयुक्तत्वात्(१) । न चावघातवन्नियमादृष्टकल्पना । तत्र वैतुष्यस्यान्यथापि सम्भवेन नियमादृष्टकल्पनात् । अत्र तु मिथ्याज्ञाननिवृत्तेरन्यथाऽसम्भव इति विशेषादिति ।

अत्राहुः । यद्यपि तत्तत्कर्मविशेषस्याप-

धति तत्त्वज्ञानस्येति । ननु योगिनां रागाद्यभावेन कथमपूर्वोत्पत्तिशङ्का । न च साक्षात्काररूपज्ञानानन्तरं रागादिनिवृत्त्या मा पूर्वमुदपादि श्रवणादिजन्यज्ञानकाले तु न कुतः रागादेरनपायात् तदेव चात्र ज्ञानपदेन विवक्षितमिति वाच्यम् । दृष्टेन मिथ्याज्ञानध्वंसेनोपपत्त्यभिधानविरोधात् । न हि श्रवणादिपरोक्षज्ञानस्यापरोक्षसंसारकारणमिथ्याज्ञाननिवृत्तिर्द्वारं सम्भवतीति चेत् । न मुक्तिविरोध्यपूर्वोत्पत्तावेव रागादेः सहकारित्वात्तावतैव मोक्षफलकविध्यनुपपत्तिपरिक्षयादिति तदाशयः । दृष्टेनैवेति । शुक्त्यादितत्त्वज्ञानसाध्यतया क्लृप्तेन मिथ्याज्ञानध्वंसेनेत्यर्थः । दुःखमूलोच्छेदतया आवश्यकेन चेतिशेषः । ननु योगिनो मिथ्याज्ञानाभावे प्रतियोग्यारोपहेतुकाभावप्रत्ययानुपपत्तिः । यत्तु आरोपो लौकि-

(१) कल्पनायोगात्-३ पु० पा० ।

वर्गकारणत्वं शब्दबलादवगम्यते । तत्त्वज्ञानव्यापारकत्वं च न शाब्दम् । तथापि न कर्मणस्तत्त्वज्ञाननिरपेक्षस्य मिथ्याज्ञानोन्मूलनव्य-

---

काभावमत्यक्ष एव हेतुर्योगिज्ञानं च न तथेति । तन्न । वर्त्तमानसंनिकृष्टविषये तस्य योगजधर्मजन्यतायां मानाभावेन लौकिकत्वावश्यम्भावे तदिति चेन्न । आत्मतत्त्वसाक्षात्कारात्तन्मिथ्याज्ञानमात्रनिवृत्तेरेव प्रामाणिकत्वादिति भावः । अन्यथासम्भव इति । नन्वत्रापि विरोधिगुणान्तरोत्पत्तेरपि मिथ्याज्ञानध्वंसः सम्भवति । न च. मिथ्याज्ञानपदं तद्वासनापरं तत्त्वज्ञानात्तद्ध्वंसस्यैवाङ्गीकारात् तस्य चान्यथाऽसम्भव एवेति वाच्यम् । अचिकित्स्यरोगादिना तस्यापि सम्भवात् । न चेतरवासनानाशेपि न ततः संसारकारणवासनानाश इति वाच्यम् । सामान्यावच्छेदेन पाक्षिकप्राप्तेरेव नियममूलत्वात् । अन्यथाऽपूर्वीयव्रीहिविशेषे नखनिर्भेदाप्राप्तेस्तत्रापि नियमादृष्टानुपपत्तेरिति चेन्न । पाक्षिकप्राप्तपरिवर्ज्जनस्याशक्यत्वेन नियमानुपपत्तेः । यथा व्रीहीनवहन्तीत्यत्र पक्षे प्राप्तस्य नखनिर्भेदादेः परिवर्जनेनावघातो नियम्यते । अवहन्तव्या एव न नखैर्निर्भेत्तव्या इति नैवमत्र तत्त्वज्ञानेनैव मिथ्याज्ञानं निवर्त्तयेन्न विरोधिगुणरोगादिनेति विज्ञातुं शक्यं तस्यापुरुषतन्त्रत्वादिति भावः ॥

तिरेकेण कारणत्वं संसाराविच्छेदात् । तदुन्मूलनस्य तत्त्वज्ञानसाध्यत्वेन लोकत एवावधारणात् । तथा च तत्त्वज्ञानमवश्यमपेक्षणीयम् । एवं च निःश्रेयसे जनयितव्ये यावत्तदनुकूलं जन्यं

---

उपजीव्यमुखेन सिद्धान्ताभिधानं प्रतिजानीते । अत्राहुरिति । सति मिथ्याज्ञाने न मोक्ष इति अविवादं तन्निवृत्तौ चान्वयव्यतिरेकाभ्यां तत्त्वज्ञानस्यैव हेतुत्वं सर्वैरवधारितमिति कर्मणामश्रुततत्त्वज्ञानव्यापारकाणामपि श्रुतमोक्षहेतुतान्यथानुपपत्त्या मोक्षे जनयितव्ये तत्त्वज्ञानव्यापारकतासिद्धिरिति सिद्धान्तयन् पूर्वपक्षयुक्तिं सिद्धान्तैकग्रन्थतया दूषयितुमुपक्रमते । यद्यपीति । कर्मणामपूर्वद्वारकत्वेपि तदपूर्वस्वोत्तरभाविफलसम्पादकाशेषकारणसम्पादकतयैव मोक्षजनकत्वं वाच्यम् । अनुन्मूलितमिथ्याज्ञानमूलस्यापूर्वसहस्रस्याप्यकिञ्चित्करत्वात् । तदुन्मूलनस्य च तत्त्वज्ञानमात्रायत्तत्वात् । न हि कर्मसहस्रेणापि शुक्तितत्त्वज्ञाननिरपेक्षेण रजतभ्रमनिवृत्तिः सम्भवतीति तत्त्वज्ञानमप्युपपादनीयम् । तथा च तदेव द्वारमास्तां कृतमपूर्व्वेणेति भावः । आत्मादिव्यावृत्त्यै जन्यमिति । एवम्भूतं जन्यं कर्म जनकं च । ननु द्वारद्वारिणोरेकत्र कारणत्वे समुच्चय एव पर्यवसित इत्यत आह । इदमेव चेति । समप्राधान्य एव नः प्रद्वेष इति भावः । एवम्भूते द्वारद्वारिभावेन

च तत्सर्वं कर्मापहरणीयम्। एवं भूतं च तत्त्वज्ञानम्। तथा च किमिति न तेन जननीयम्। इदमेव च तुल्यकक्षतया समुच्चयो नेष्ट इत्यनेन विवक्षितम्। एवम्भूतसमुच्चयेन नो विवादः। कर्मविशेषस्य तत्त्वज्ञानानुकूलत्वं तावच्छब्दा-

---

समुच्चये तीर्थविशेषस्नानादीनि तत्त्वज्ञानद्वारकाणि मोक्षजनककर्मत्वाद्यमादिवदिति अनुमानादपि तत्सिद्धिरित्याह किञ्चेति। शब्दादेवेति।

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु॥

इति स्मृतेः। तमेतं वेदानुवचनेनेत्यादिश्रुतेश्चेत्यर्थः। अप्रयोजकतां निरस्यति। लाघवादिति। ननु योगत्वं तत्रोपाधिरत आह। क्वचिदिति। शब्दादेवेति। कथयति भगवानिहान्तकाले भवभयकातरतारकं प्रबोधमित्यादिपुराणाद्रुद्रस्तारकं ब्रह्म व्याचष्ट इति श्रुतेश्चेत्यर्थः। एवं तत्र साध्याव्यापकत्वान्न योगत्वमुपाधिरिति भावः। व्यापारद्वैतगौरवमुक्तं निरस्यति ते वां चेति॥ सत्त्वशुद्धिरेवेति॥ सत्त्वमात्मा तस्य शुद्धिः तत्त्वज्ञानप्रतिबन्धकाधर्मध्वंसः। विशुद्धसत्त्वः ततस्तु पश्यति निष्कलं ध्यायमानः। नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्। तपसा कल्मषं हन्तीत्यादिश्रुतिस्मृतिशतेनेति भावः। ननु यमनियमधारणाप्राणायामादीनां स-

देवावगम्यते । तथा च विवादास्पदीभूतकर्मणास्तद्द्वारेणैव जनकत्वं कल्प्यम् । लाघवात् । क्वचिन्मोक्षफलकत्वेन श्रुतस्यापि वाराणसीप्रायणादेस्तत्त्वज्ञानोत्पादकस्य शब्दादेवावगतत्वात् । तेषां कर्मणां च तत्त्वज्ञाने जनयितव्ये सत्त्वशुद्धिरेवावान्तरव्यापार इति न तदर्थमपू-

मुक्षितानामसम्भवात् प्रत्येकं च व्यभिचारात्कथं तत्त्वज्ञानजनकतेत्याशङ्क्योभयसमाधेयतया परिहरति । न च वाराणसीत्यादिना । का तर्हि समुच्चयश्रुतेर्गतिरत आह श्रुतिरपीति । कारणतामात्रं साक्षात्परम्परोदासीनं तच्च द्वारद्वारिभावेप्युपपन्नमिति कुतः समुच्चयसिद्धिरिति भावः । ननु श्रुतेर्द्वारद्वारिभावापन्नसमुच्चयपरत्वे ततो भूय इव ते तम इति तत्त्वज्ञानिनो नित्याकरणे प्रत्यवायाभिधानविरोध इति चेन्न । परोक्षविद्यावतः श्रुत्या प्रत्यवायाभिधानात् । तस्य चाकरणे तदौचित्यात् । समुच्चयवादिना तु साक्षात्कारार्थत्वं विद्यापदस्याश्रित्य तथाभिहितमित्येतावत् । नन्वेवं द्वारीभूततत्त्वज्ञानोत्पत्तौ योगिनः कर्मानुष्ठानानुपपत्तिः । रागापगमेनाकरणप्रत्यवायासम्भवात् । दृष्टतत्त्वज्ञानस्य च वृत्तत्वाददृष्टोपायताज्ञानाभावात् । न च लोकानुग्रहायानुष्ठानमिति वाच्यम् । लोकानां कर्मानुष्ठा-

र्वकल्पना । न च वाराणसीप्रायणादिव्यतिरेकेण तत्त्वज्ञानस्याप्यनुत्पत्तिप्रसङ्गः । अपवर्गेप्यस्य समानत्वात् तत्रावान्तरविशेषकल्पनमिति यदि तदा प्रकृतेपि तुल्यम् । श्रुतिरपि तत्त्वज्ञानकर्मणोः कारणतामात्रं बोधयति । न पुनस्तुल्यकक्षतया समुच्चय इति संक्षेपः ।

---

नस्य योगीष्टासाधनत्वात् । न च परमकारुणिकतया । तथापीष्टसाधनताज्ञानानुपपादनात्स्वतन्त्रप्रवृत्त्यनुपपत्तेः । निर्ममत्वेन तद्धिताहितयोस्तस्यौदासीन्याच्च । न चौदासीन्येपि "जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्निति" विधिबलादेव ततोभीष्टोपायताया एव प्रतीतेरिष्टस्य च चिन्त्यमानस्यादर्शनात् । वचनस्य परोक्षविद्यावद्विषयत्वेनाप्युपपत्तेरिति चेन्न । कर्मक्लेशप्रदादृष्टप्रतिक्षेपाय केवलं तत्त्वविज्ञानसम्पन्नाः कर्म कुर्वन्ति योगिनः । ननु कर्मणो निःश्रेयसहेतुत्वे तज्जन्यनिःश्रेयसजनकतया तत्त्वज्ञानस्य कर्मव्यापारत्वं तदेव तु न युक्तम् । न कर्मणा न प्रजया धनेन, नान्यः पन्था विद्यते अयनाय, नास्त्यकृतः कृतेन,

**कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।**
**तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥**

इति ज्ञानकर्मसमुच्चयवादः ॥

अपवर्गस्तावदान्वीक्षिकीप्रयोजनत्वेन महर्षिणा दर्शितः । स च नानाविधविप्रतिपत्तिविकलितत्वात्(१) अव्यवस्थित इति प्रयोजकत्वमेव तस्य न सम्भवतीति तद्व्यवस्थापनार्थमपवर्गो विविच्यते । तत्र नित्यनिरतिशयसुखा-

इत्यादिश्रुतिस्मृतिशतेन निषेधात् । कर्मजन्यत्वाभावाच्च । तपसा कल्मषं हन्ति, अविद्यया मृत्युं तीर्त्वा तं पश्यति निःकलं ध्यायमानः कषायपक्तिः कर्माणि इत्यादिभिस्तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवृत्त्यैवान्यथासिद्धेः प्रदर्शनात् । न च विविदिषन्ति यज्ञेन, सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इत्यादिभिः कर्मजन्यतापि प्रतीयत इति वाच्यम् । सा हि नापूर्वद्वारा प्रतिबन्धकदुरितानुच्छेदेऽपूर्वसहस्रस्याप्यकिञ्चित्करत्वात् । तदुच्छेदेन तज्जनने तु प्रमाणान्तरावधृतकारणाभावेन प्रतिबन्धकाभावेनैवान्यथासिद्धिः । न चैवं यागादेरप्यपूर्वत्वेनैवान्यथासिद्धिः । तस्य यागकारणताग्रहोत्तरकल्प्यत्वेन उपजीव्यापरिपन्थित्वात् । इह तु प्रतिबन्धकाभावस्य कार्यमात्रकारणतायाः प्रागेवावधारणादिति विशेषात् । अत एव मङ्गलकारीर्योः प्रतिबन्धकदुरितनिवृत्तिमात्रफलकत्वं वृष्टिसमाप्ती स्वकारणादेवेति वदन्ति । किञ्च कर्मकारणताग्रहानुपजी-

भिव्यक्तिर्मुक्तिरिति तौतातिताः। जीवस्य लिङ्गशरीरापगम इति भास्करीयाः। प्रकृतितद्विकारोपधानविलये पुरुषस्य स्वरूपावस्थानमिति साङ्ख्याः। निरुपप्लवा चित्तसन्ततिरित्यन्ये। अग्रिमचित्तानुत्पादे पूर्वचित्तनिवृत्तिरित्यन्ये। आत्महानमित्यपरे। दुःखप्रागभाव-

वनेन लौकिकान्वयव्यतिरेकावधृतमिथ्याज्ञाननिवर्त्तकभावसम्भावितस्य मोक्षसाधनत्वस्य ज्ञानादेव तु कैवल्यं, तमेव विदित्वाऽतिमृत्युमेति, तरति शोकमात्मविद्ब्रह्मविदाप्नोति परं ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिस्मृतिशतेन तत्त्वज्ञाननिष्ठतया ग्रहणात्तदेव मोक्षसाधनं कर्माणि तु तत्रैवान्यथासिद्धानीति युक्तम् यथा च न तत्रापि व्यापारस्तथोक्तमेव। अत एवार्थावबोधपर्यन्तताध्ययनविधेः न तु तेन क्रत्वनुष्ठाने न च तद्द्वारेण स्वर्गादिफलकत्वमिति वदन्ति। न च तत्त्वज्ञानस्य कर्माजन्यत्वे द्वारीभूतेन तेनैव व्यवधानान्निःश्रेयसहेतुतानुपपत्तौ तपो विद्या च विप्रस्य निःश्रेयसकरं परमित्यादिस्मृतिव्याकोपः। तदर्थस्य तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवर्तकत्वरूपस्य तपसा कल्मषं हन्तीत्याद्युत्तरार्द्धेन विवृतत्वादिति चेत्। सत्यम्। कर्मणां निःश्रेयसानुकूलत्वमात्रं श्रुत्याद्यर्थः तच्च निःश्रेयसप्रागभावव्याप्यप्रागभावप्रतियोगित्वमात्रं न त्वनन्यथा-

परिपालनमिति गुरुमततत्त्ववेदिनः । आत्यन्तिकी दुःखनिवृत्तिरिति गौतमीयाः । तत्र सर्वेषामनुपपन्नत्वाच्चरम एव पक्षो न्याय्यः । तथाहि । न तावदाद्यः । तत्र तथाविधसुखे प्रमाणाभावात् । ननु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिरेवात्र

---

सिद्धिरपि । श्रुत्यन्तरेणान्यथासिद्धत्वावेदनात् । तावतैव च श्रुतेः कर्मप्रवृत्तिपरतानिर्वाहात् । एतेन कर्मणां तत्त्वज्ञानजनकताबोधकं श्रुतिस्मृतिजातमपि व्याख्यातम् । तदनुकूलत्वमात्रस्यैव तदर्थत्वात् । नचैवन्तत्त्वज्ञानस्य द्वारत्वाभावे समुच्चयपक्षप्रवेशप्रसङ्गः । तत्त्वज्ञानानुकूलताया समुच्चयवादिनानङ्गीकारात् । तुल्यकक्षतयैव समुच्चयस्य निराचिकीर्षितत्वात् इति तदेतत्सर्वमभिसन्धायाह । इति संक्षेप इति ।

इतिसकलसामन्तप्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां ज्ञानकर्मसमुच्चयप्रकरणम् ।



उपेयनिरूपणानियमस्योपायपरतन्त्रत्वादुपायमात्रमुपा-
यसामर्थ्यान्नियतरूपैव मुक्तिर्भविष्यतीति कृतं तत्स्व-
रूपनिर्णयप्रयासेनेत्यत आह । अपवर्गस्त्विति ।
अव्यवस्थित इति । अनिश्चितेष्टतावच्छेदकरूप
इत्यर्थः । प्रयोजकत्वमेवेति । इष्टतावच्छेदाप्रकारकज्ञान-
विषयीभवत्स्वसाधनताज्ञानेन शमादौ साधने प्रवर्तकत्व-
मेवेत्यर्थः । अस्तु प्रवृत्तस्य साधनासामर्थ्यम् । वस्तुतो
नियतरूपा मुक्तिस्तद्रूपापरिचये प्रवृत्तिरेव तु कुतः कुत-
स्तरां तद्रूपनियम इति भावः । दुःखध्वंसत्वं समानाधि-
करणदुःखासमानकालीनवृत्ति न वेति विचारबीजसंश-
यमूलभूतां विप्रतिपत्तिं दर्शयति । नित्यनिरति-
शयेति । अत्र निरतिशयेति स्वरूपकीर्त्तनम् । लिङ्गेति ।
एकादशेन्द्रियाणि पञ्च महाभूतानि सूक्ष्ममात्रया सम्भू-
यावस्थितानि जीवात्मनि सुखदुःखावच्छेदकानि लिङ्ग-
शरीरं तन्नाश इत्यर्थः । प्रकृतितद्विकारेति । सत्त्वादीनि
समवस्थितानि प्रकृतिर्जगत्कारणम् तद्विकारा महदह-
ङ्कारतन्मात्रेन्द्रियपृथिव्यादयस्तदुपधानं सम्बन्धविशेषः
स्वरूपेण सुखदुःखासम्भेदेन । अत्र स्वरूपेणावस्थानमिति
लक्षणम् । पूर्वभागस्तु तदुपपादनम् । तत्रापि प्रकृति-
मात्रमुपपादकं तद्विलयेऽपि स्वतन्त्रकुड्याद्यविल-
यशङ्कां वारयितुं तद्विकारोपादानम् । निरुपप्लवेति ।
उपप्लवः संसारः चित्तं ज्ञानम् । अग्रिमेति । ज्ञानसमा-
नकालीनभिन्नज्ञानध्वंस इत्यर्थः । संसारदशायामति-

व्याप्तिवारणाय पूर्वभागः । आत्महानम् आत्मनाशः । मीमांसकाः प्राभाकराः । आत्यन्तिकी समानाधिकरण-दुःखसमानकालीनेत्यर्थः । इदानीन्तनदुःखध्वंसनिवृत्त्यै पूर्वभागः । तत्रापि शुकादिमुक्तौ अव्याप्तिनिवृत्त्यै समानाधिकरणेति । ननु सुषुप्तावतिव्याप्तिः । न च दुःखप्रागभावासमानकालीनत्वं विवक्षितम् । तथा सति चरमदुःखकालीने उपान्त्यदुःखध्वंसेऽतिव्याप्तेरिति चेत् । न दुःखदुःखप्रागभावासमानकालीनत्वविवक्षणा-दिति प्राञ्चः । वस्तुतोऽसमानकालीनत्वं समानका-लीनान्यत्वम्। तच्च सौषुप्तिकदुःखध्वंसस्य, तस्य भाविजा-गरदुःखसमानकालीनस्य सुषुप्त्यवच्छेदेनापि तदन्यत्वा-भावात् । अन्योन्याभावस्य व्याप्यवृत्तित्वादिति तत्त्वम् । न च सुखान्तमुक्तौ भोगदशायामतिव्याप्तिः । मरणस्य दुःखाविनाभावेन तदसम्भवात् । न च "ते नराः सुखमृत्यव" इति स्मृत्याऽविनाभावस्यैवासिद्धिः तस्या बहुतरदुःखासम्भेदपरत्वादिति । तदङ्गीकारपक्षे तु ग्रन्थ-कृतैवेष्टापत्तेर्वक्ष्यमाणत्वात् । प्रथमदुःखपदस्य गौण-मुख्यदुःखसाधारणत्वाद्वेति दिक् । मुक्तिपदमात्यन्ति-कदुःखनिवृत्तौ शक्तम् तदितराशक्तत्वे सति शक्तत्वादि-तिपरिशेषमाह । तत्रेति । परेषामन्येषाम् । सर्वेषामिति पाठेपि वरमन्येषां सर्वेषामित्येवार्थः । तथाविधेति । नित्ये सुखत्वे सुखे वा नित्यत्वे प्रमाणाभावात् इत्यर्थः । अतो न सिद्ध्यसिद्धिव्याघातः । ननु नित्यं विज्ञानमान-

मानम् । न च नित्यसुखस्यासाध्यत्वादपुरुषार्थ-त्वमिति वाच्यम् । तदभिव्यक्तेरेव पुरुषार्थ-त्वात् । नन्वभिव्यक्तिरपि यदि नित्या तदा न पुरुषार्थः सिद्धत्वात् । अथानित्या तथा चोत्पन्नस्य भावस्य विनाशित्वनियमादभि-व्यक्तेर्विनाशे मुक्तस्य संसारित्वप्रसङ्गः । न च

नन्दं ब्रह्मेति श्रुतिर्ब्रह्मणो नित्यत्वमानन्दत्वं च बोध-यन्ती आनन्दस्यापि नित्यत्वं गमयति । अनित्यस्य तस्य नित्यब्रह्माभेदानुपपत्तेरिति सिद्धार्थप्रामाण्यम-ङ्गीकृत्य मीमांसकं शङ्कते । नन्विति । असाध्यत्वा-दिति । ध्रौव्येत्यनुशासनादनादित्वस्यापि नित्यपदेन परिग्रहादिति भावः । यद्वाऽविनाशित्वमेव नित्य-त्वम् तद्वतोपि ध्वंसस्येव साध्यत्वं स्यादित्याशङ्कां तिरस्कर्तुमेव सुखपदम् । तस्य च सुखस्य भाव-त्वान्नित्यतायाश्चानादित्वव्याप्तत्वादसाध्यत्वादिति भावः । सिद्धत्वादिति । तथा च मुक्तसंसारिणोर-विशेषापत्तिर्बाधश्चेति भावः। अन्यथानित्येति । सादि-रित्यर्थः । सादित्वेपि ध्वंसवदविनाशित्वमस्त्वित्या-शङ्क्याह । उत्पन्नस्य भावस्येति । ध्वंसव्यावृत्त्यै भाव-स्येति । गगनादिव्यावृत्त्यै उत्पन्नस्येति । संसारित्वप्रसङ्ग इति । तथा च तच्छङ्कया न कश्चिन्मुक्तावुत्तिष्ठेत इति भावः । त्वयेति अपीतिशेषः । अप्रयोजकतुल्ययोगक्षेम-

तदनन्तरमभिव्यक्त्यन्तरमुत्पद्यते । तदुत्पादकस्य शरीरादेरभावात् । न च शरीरादिकं तदा कल्पनीयम् । त्वयानभ्युपगमात् । अभ्युपगमे तु तन्निय-तदुःखोत्पत्तिप्रसङ्गात् । मैवम् । प्रमाणबलेनोत्पन्नस्यापि भावस्याविनाशित्वकल्पनात् । अन्यथोत्पन्नप्रमेयस्य विनाशित्वदर्शनात् ध्वंसस्यापि विनाशित्वं कल्पेत । तत्र प्रमाणबलेन भावमात्रे व्याप्तिसङ्कोच इति यदि(१) तदाऽत्रापि प्रमाणबलात्तथाभूताभिव्यक्तिव्यतिरिक्ते भावे व्याप्तिः

तया दूषयति । मैवमिति मोक्षफलकश्रवणादिविधिविरोधेन पूर्वनियमस्यैवासिद्धिरित्याह । प्रमाणबलेनेति । सामान्यव्याप्तिग्राहकमपि व्यभिचाराद्यनुपलब्धेः प्रमाणमिति तद्बलादेवमेव किं न स्या दित्याशङ्क्याह । अन्यथेति । व्यभिचारानुपलब्धेरविशेषादित्यर्थः । प्रतियोग्युन्मज्जनप्रसङ्गेन तत्र सङ्कोच इति यदि तदा मोक्षपुरुषार्थताबोधकश्रुत्यप्रामाण्यप्रसङ्गेनाभिव्यक्त्यन्तरोत्पन्नभावविषयत्वं पूर्वव्याप्तिग्राहकस्य तुल्यमिति तुल्यमित्याह । तत्रेति । अभिव्यक्तीतरस्य मोक्षत्वानुपपत्तेर्नागमस्य तत्परतेत्याशयः । नियमाभ्युपगमेप्यभिव्यक्त्यन्तरोत्पादे बाधकाभावान्न दोष इत्याह । अभि-

(१) तद्वत्-इति अधिकम् ।

सङ्कोच्यताम् । अभिव्यक्त्यन्तरोत्पादे शरीरादिकं विना नानुपपत्तिः । तथाभूताभिव्यक्तौ शरीरादिव्यतिरेकस्यैव कारणत्वम् । प्रमाणबलेन तथाकल्पनात् । अत एव तस्य सुखस्य सांसारिकदशायां(१) शरीरादिनैव प्रतिबन्धान्नाभिव्यक्तिः । तथा च न योग्यानुलम्भबाधोऽपि(२) ॥

अत्रोच्यते । न तावदियं श्रुतिः नित्यसुखे

व्यक्त्यन्तरेति । जन्यात्मविशेषगुणासाधारणकारणे शरीरे सति कथं सेत्यत आह । प्रमाणबलेनेति । मुक्तिप्रतियोगिकागमबलेनेत्यर्थः । अनुपलब्धिबाधं निराकरिष्यन्ननुपलब्धिविशेषणीभूतयोग्यताभावमाह । अत एवेति । शरीरादिव्यतिरेकस्य कारणत्वेन कारणीभूताभावप्रतियोगितया शरीरादेः प्रतिबन्धकत्वस्य प्रामाणिकत्वादेवेत्यर्थः । तस्य सुखस्य प्रतिबन्धकमात्रप्रयोज्यायाः अनुपलब्धेः प्रतियोगिसत्त्वविरोधिरूपयोग्यताविरह इति भावः । यदर्थं योग्यताविरहप्रदर्शनं तदाह । तथाचेति ॥

सिद्धान्तयति । न तावदिति । किं नित्यात्माभेदबोधान्यथानुपपत्त्येयं श्रुतिरानन्दनित्यतां बोधयति उत नित्यविशेषणबलादेवेति मनसि कृत्वाऽऽद्यं

(१) संसारदशायां–३ पु० पाठः ।

(२) नुपलब्धिबाधोऽपि–४ पु० पाठः ।

प्रमाणाम्। तथाहि। लोकसिद्धेन सुखेनानया श्रुत्या ब्रह्माभेदो बोध्यते। सुखान्तरेण वा? नाद्यः। लोकसिद्धस्य सुखस्य विनाशित्वेन ब्रह्माभेदे बाधात्। नेतरः। सुखान्तरं हि प्रमाणान्तरसिद्धम्। श्रुतिसिद्धम् वा? न तावदाद्यः। तथाविधसुखबोधकस्य प्रमाणान्तरस्यासिद्धत्वात्। न द्वितीयः श्रुतेः सुखनित्यतांशे सामर्थ्यात्। न च नित्यत्वविशे-

विकल्प्य दूषयति। तथाहि लोकेत्यादिना। सुखान्तर हीति। अविनाशिनित्य सुखत्वं हीत्यर्थः। प्रमाणान्तरस्येति। न च नवा अरे पुत्राणां कामायेत्यादिश्रुत्या वेदितं निरतिशयप्रेमास्पदत्वमेव नित्यस्यात्मनो सुखत्वे मानमिति वाच्यम्। अहिकण्टकादिद्वेषोपाधिभूते दुःखेपि प्रद्वेषस्यात्मौपाधिकतया निरतिशयद्वेषास्पदत्वेनात्मनो दुःखत्वस्यापि प्रसङ्गात् दुःखाभावेन व्यभिचाराच्च। भावत्वेन विशेषणाददोष इति चेन्न। तथाप्यात्मनो नित्यप्राप्तस्येच्छाविषयत्वाभावेन हेत्वसिद्धेः। सुखस्यात्मविशेषगुणतया प्रियत्वेनात्मप्रेम्णा एतदतिशायिनः सत्त्वात्। दृष्टान्तीकृते सुखे साधनवैकल्याच्चेति भावः। श्रुतेरिति। ब्रह्माभेदपरत्वेनेति भावः। नित्यत्वविशेषणान्वयादेवानन्दस्य नित्यत्वमिति पक्षमाशङ्क्य निराचष्टे नचेति। न ह्यानन्दस्य नित्यता ब्रह्माभेदो वा प्रमाणान्तरसिद्धो येनान्यतरानुवादेनान्यतरत्र विधिः स्यात् किन्तूभयत्र तथाचा-

षणबलात्प्रथमतस्तावन्नित्यसुखं श्रुत्या बोध्यते। तदनन्तरं तेन सह ब्रह्माभेद इति वाच्यम्। तथा सति वाक्यभेदप्रसङ्गात्। न हि नित्यत्वविशेषणस्य सुखेनान्वयः(१)। अयोग्यत्वात्। किन्तु ब्रह्मणैव। किञ्च सुखाभेदबोधनमपि ब्रह्मणोऽनुपपन्नम्।

नन्दं नित्यं नन्न ब्रह्मेति प्रधानवाक्यार्थभेदात् वाक्यभेदप्रसङ्ग इत्यत आह। तथा सतीति। दूषणान्तरमाह। नहीति। हिः स्वार्थे। अयोग्यत्वादिति। सुखपदार्थस्यालौकिकस्यानुपस्थितेरुपस्थितस्य च लौकिकस्यानित्यैकस्वभावत्वावधारणात् इत्यर्थः। नन्वस्तु ब्रह्मणि नित्यत्वविशेषणान्वयः तथापि नित्यब्रह्माभेदे बोधिते नित्यानन्दसिद्धिरवर्जनीयेत्यनन्यगतिकतया पुनः पूर्वपक्षमवलम्बमानं प्रति प्रकारान्तरेणाभेदबोधं नित्यानन्दसिद्धिं च दूषयति। किञ्चेत्यादिना। अनुभूयमानस्यात्मनो न तावदनुभूयमानेनानन्देनाभेदः शक्यो बोधयितुं तदननुभवात्। आत्मनोऽप्यननुभवप्रसङ्गात्। आत्मानुभवे तस्यापि वाऽनुभवप्रसङ्गात्। नन्वात्माभिन्नतया सुखमनुभूयत एव सुखत्वं तु देहात्माभेदभ्रमवासनादोषादात्यन्तिकदुःखोच्छेदरूपव्यञ्जकाभावाद्वा नानुभूयत इति चेत्। पश्य स्मर दुरध्वपतितोऽसि न हीदानीमात्मत्वादन्यत् सुखत्वं नाम जातिस्तुल्यव्यक्तिकत्वात्। किञ्च

(१) नान्वयसम्भवः—पा० ५ पु०।

तस्य च सुखयहमित्यनुभवेन तदाश्रयत्वेन विषयीक्रियमाणत्वात् । न च ब्रह्माभेदान्यथानुपपत्त्या नित्यसुखसिद्धिरिति वाच्यम् । इतरेतराश्रयप्रसङ्गात् । सिद्धे हि तथाविधसुखे ब्रह्माभेदप्रतीतिः । ब्रह्माभेदप्रतीतौ च तथासुखसिद्धिरिति ।

---

दुःखमप्येवं सुखमेव स्यात् । सुखत्वेनानुभवस्य पूर्ववदुपपत्तेः । न च प्रमाणाभावः । सर्वं खल्विदं ब्रह्मेतिश्रुत्या आनन्दमयब्रह्माभेदबोधनात् । सिद्धार्थत्वेन न स्वार्थे प्रमाणमियमिति तु प्रकृतेपि तुल्यम् । नचाऽत्रानुत्तरस्यापि मीमांसकस्येष्टापत्तिरुत्तरमुचितम् । तस्मादनुभवसिद्धेनैव सुखेनाभेदबोधनं वाच्यम् । न च तदपि सुवचम् अभेदान्वयायोग्यत्वादित्याह । तस्य सुखयहमिति । ननु घटाभावे घटो नास्तीत्यत्रेवाभेदेप्याश्रयाश्रयिभावः स्यात यत्राहुः । "प्रमाणं शरणं वृत्ती न भिन्नाभिन्नते इतीति" चेत् न । तथान्वेऽहं सुखीत्यत्रापि भासमानात्मभेदेन सुखस्य प्रतीतिप्रसङ्गात् । अस्त्येव सा न तु सुखत्वेन दोषादिति तु निरस्तम् । सुखस्येव विज्ञानपदवाच्याया अभिव्यक्तेरपि नित्यात्माभेदेन कादाचित्कत्वानुपपत्तौ मुक्तसंसारिणोरविशेषप्रसङ्गात् मुक्तावव्यावृत्त्यापत्तेश्चेति भावः । अभेदबोधं निरस्य ततो नित्यानन्दसिद्धिरित्युक्तमेवानूद्य दूषणान्तरमाह । नचेत्यादिना । इतरेतराश्रयं विवृणोति । सिद्धे हीति । ननु यथोपस्थितमतिप्रसक्तमपि

तस्माद्बाधितायाः ग्रावाणः प्लवन्ते यजमानो वै प्रस्तर इति श्रुतिवदुपचरितार्थत्वमेव श्रुतेर्युक्तम्(१) । एवमानन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्यत्रापि आनन्दस्य ब्रह्मधर्मत्वेन प्रतीतौ मोक्षपदेन जीवन्मुक्तिरेव विवक्ष्यत इत्यन्यथासिद्धौ न सुखस्वरूपे तस्मिन् प्रमाणं श्रुतिः । प्रत्युत दुःखेनात्यन्तं विमुक्तश्चरतीत्यादिश्रुतिबलादात्यन्तिकदुःखविरहरूपत्वमेव अपवर्गस्य प्रतीयते । तथा च प्रमाणबलेन भावत्वपुरस्कारेण व्याप्तिसंकोच इति यदुक्तम् तन्मन्दम् । ध्वंसे तु घटादिप्रतियोगिक एव तथात्वकल्पनात् नादृष्टकल्पना दोषायेति संक्षेपः ।

स्वर्गत्वमुपलक्षणीकृत्य श्रुत्या स्वर्गविशेषे यागविशेषस्य कारणता बोध्यते अन्यथा विशेषकल्पेन तदवच्छेदेन कारणताग्रहस्तत्र च विशेषकल्पनेत्यन्योन्याश्रयत्वप्रसङ्गात् । तथेहापि सामान्यपुरस्कारेण भेदे बोधिते योग्यतासंशयसचिवया श्रुत्या प्रकृते नित्यानन्दः कल्प्यतामिति चेत् । न पूर्वदोषे तात्पर्यात् । उपचरितार्थत्वमिति । विज्ञानमानन्दमिति । गुणिनो विज्ञानानन्दगुणाभेदोपचारात् । न चोपचारपक्षे आनन्दमिति नपुंस-

(१) बाधिततया ग्रावप्लवनश्रुतिवदुपचरितार्थत्वमेव युक्तम्—४पु० पाठः ।

द्वितीयस्यायमर्थः । लिङ्गशरीरस्यैकादशेन्द्रियपञ्चभूतरूपस्य जीवात्मन्यपगमो विश्लेषः स एव परब्रह्मणि जीवस्य लय इत्युच्यते । अयमप्यनुपपन्नः । तथाभूतस्य पुरुषार्थत्वे मानाभावात् । दुःखहेतुविवक्षायां अस्मत्सिद्धान्तानतिरेकात् ।

---

कत्वानुपपत्तिः । अजन्ततया तदुपपत्तौ उपचारवैयर्थ्यं चेति वाच्यम् । छान्दसत्वेन लिङ्गव्यत्ययोपपत्तेः । अजन्तत्वेनात्र तदुपपन्नेप्यानन्दो ब्रह्मेत्याद्यवगतेश्चेति भावः । भेदे श्रुतिं प्रमाणयति । आनन्दं ब्रह्मणो रूपमिति । रूपपदस्य धर्मपरत्वात् । षष्ठ्याश्च भेदनियतत्वादिति भावः । आनन्दपदस्य मुख्यार्थत्वमाश्रित्य परमुक्तौ वृत्त्यनुपपत्तेराह । मोक्षपदेनेति । तस्मिन् ब्रह्मणि सुखरूपे सुखस्वरूपे सुखात्मनि इति सामानाधिकरण्येन तस्मिन्नपवर्गाधिकरणे सुखरूपे सुखस्वरूपे सत्त्वे इति वैयधिकरण्येन योज्यम् । अभिव्यक्तिमुक्तित्वस्यैतदभिमतत्त्वात्स्वपक्षे साधकमाह । श्रुत्येति । एवं चानन्दपदस्य दुःखाभावपरतया मोक्षपदेन परममुक्त्यभिधानेप्यदोष इति ध्येयम् । विश्लेषो नाशः । ननु परमते जीवस्य परे ब्रह्मणि लयो मोक्षो न लिङ्गशरीरापगम इत्यत आह । स एवेति । तथाभूतस्य शरीरनाशस्य न हि शरीरनाशं कश्चित्कामयत इति भावः ।

नापि तृतीयः। तथाविधप्रक्रियायां मानाभावात्। अन्यदर्शनाभ्युपेतपरत्वे वा विप्रतिपत्तेः। नापि चतुर्थः किमिदं हि निरुपप्लवत्वम्। दुःखरहितत्वमिति यदि तदा तावन्मात्रस्य पुरुषार्थत्वव्यवस्थितौ चित्तसन्ततेरकाम्यत्वेन तद्व्यवहिर्भावात्। न च मुक्तिदशायां चित्तसन्ततेरवस्थानमपि संभवति सम्भवे उत्पन्नसन्तानस्य विनष्टत्वात्। अन्यस्यापि शरीरादिव्यतिरेकेणोत्पादासंभवात्। न

---

ननु दुःखहेतुत्वात्तन्नाशः काम्यस्तत्राह। दुःखहेत्विति। दुःखाभावमुक्तिवादिसिद्धान्तानुप्रवेशादित्यर्थः। यद्यपि तत्साधनध्वंसो न दुःखाभावः दुःखपदस्य मुख्यदुःखपरत्वादन्यथा मुक्तेः परमपुरुषार्थत्वानिर्वाहात्। तथापि हेतूच्छेदे पुरुषव्यापारात्प्रायश्चित्तवदिति ग्रन्थानुरोधेन दुःखसाधनध्वंस एव मुक्तिरिति अस्मदेकदेशिसिद्धान्तानतिरेकादित्यर्थः। तथाविधेति। प्रकृत्यादिप्रक्रियायां मानाभावात्। आवश्यकपरमाणवादिनैव सर्गाद्युपपत्तेरिति भावः। अविद्यैव प्रकृतिः मायान्तु प्रकृतिं विद्यादित्यागमादित्याहान्यदर्शनेति। सांख्येन सममविद्योपधानविलयमुक्तित्वे विप्रतिपत्तेरित्यर्थः। अन्ये तु नन्वनेनादृष्टाद्युपधानविलय एवोच्यत इत्यत आह। अन्येति। अशेषविशेषगुणोच्छेदात्मकवार्त्तिककारीयमुक्तिपर्यवसानादविप्रतिपत्तेरित्यर्थ इत्याहुः। सर्वेष्वपि

च मुक्तिदशायां तन्न कारणमिति वाच्यम्। तन्मात्रे तत्कारणत्वावधारणादिति। नापि पञ्चमः। पूर्वं चित्तनिवृत्तेरयत्नसिद्धत्वेन तदर्थप्रवृत्त्यनुपपत्तेः। अग्रिमचित्तानुत्पादस्य प्रागभावरूपतयाऽसाध्यत्वात्। न वास्याश्चित्तनिवृत्तेः कथमपि पुरुषार्थत्वं सुखदुःखाभावेतरत्वात्। नापि षष्ठः। आत्महानस्यानुद्देश्यत्वात् नित्यतयाशक्यत्वाच्चेति। नापि सप्तमः। प्राग-

---

पक्षेषु परमपुरुषार्थतानवच्छेदकत्वं साधारणं दूषणं द्रष्टव्यम्। तावन्मात्रस्येति। परमपुरुषार्थत्वाभावेपि दुःखहेतुनिवृत्तेः पुरुषार्थत्वमस्त्येव चित्तसन्ततिस्तु दुःखतत्साधननिवृत्त्यन्यत्वेन नोभयथा पुरुषार्थ इति न मोक्षपदार्थेन्तर्भावयितुं युक्तेत्यर्थः। असम्भवमप्याह। न च मुक्तीति। तन्मात्र इति। जन्यात्मविशेषगुणत्वावच्छिन्ने शरीरस्य कारणतावधारणादित्यर्थः। प्रागभावरूपतयेति। प्रागसत्त्वे सति सत्त्वमेव साध्यमित्याशयः। न च प्रायश्चित्तस्थले दुःखप्रागभावफलकत्वास्वीकारविरुद्धमेतदिति वाच्यम्। प्रागभावस्य प्रतियोगिजनकत्वनियमेनाग्रिमचित्तोत्पादप्रसङ्गेन चित्तानुत्पादस्य साधयितुमशक्यत्वादित्यर्थात्। न च प्रायश्चित्तेपि सममेतदिति वाच्यम् पापान्तरसहचारेण दुःखोत्पादस्य तत्रेष्टत्वात्। अनेन पापेन दुःखं न ममाभूदित्युद्दि-

भावस्य प्रतियोग्युत्पत्तिनियतत्वेन मोक्षानन्तरं दुःखोत्पत्तिप्रसङ्गात् । प्रतियोग्युत्पत्तेरावश्यकत्वेन तदुत्पादकानिवर्त्तनस्याशक्यत्वात् । न च दुःखहेतूच्छेद एव तत्प्रागभावपरिपालनमिति वाच्यम् । तन्मात्रस्यैव पुरुषार्थत्वेनान्यथोत्पत्तौ तस्यां दशायां प्रागभावानुवृत्तौ प्रमाणाभावात् । एतेन कस्यचित्प्रागभावस्य प्रतियोग्युत्पत्तिनिय-

---

श्यैव प्रायश्चित्तकरणात् । नन्वनुत्पादपदेन ध्वंसो विवक्षितः स च साध्य एवेत्यत आह । ध्वंसस्य चेति । तदनुत्पत्तौ तन्नाशस्यायत्नसिद्धत्वादिति भावः । आत्मनो दुःखसाधनतया तन्नाशः उद्देश्यः स्यादत आहानित्यत इति । वीतरागजन्मादर्शनादिति न्यायेनानादित्वसिद्धावनादिभावत्वेन नित्यत्वसिद्धेरिति भावः । ननु प्रागभावो न सामग्री किन्तु कारणं तथाचाधर्मशरीरादितदुत्पादकान्तरविघटने सतोपि तस्याकिञ्चित्करत्वात् न मोक्षानन्तरं दुःखोत्पत्तिरत आह । प्रतियोग्युत्पत्तेरावश्यकत्वेनेति । अन्यथोत्तरावधिविधुरत्वेनात्यन्ताभावत्वापत्तौ कस्य परिपालनं स्यादिति भावः । अत्र च न दुःखहेतूच्छेद एवेति ग्रन्थानन्तरं प्रतियोग्युत्पत्तेरित्यादिग्रन्थो युक्तः । यथाश्रुतपाठेपि तथैवान्वयो द्रष्टव्यः । तन्मात्रस्य हेतूच्छेदमात्रस्य प्रागभावपुरुषार्थत्वस्यापि स्वमतस्तस्यासाध्यत्वेन हेतू-

तत्त्वमपि त्यज्यतामिति निरस्तम् । अन्यथोपपत्ते-र्दर्शितत्वात् । न च प्रागभाव एवोत्तरसमयसम्बन्धित्वेन साध्यत इति वाच्यम् । तदुत्तरसमयसम्बन्धो हि किं नवमद्रव्यसम्बन्धो वा तदुपाधिसम्बन्धो वा ? सम्बन्धो हि स्वरूपमेव वाऽतिरिक्तो वा ? न तावदाद्यः । नवमद्रव्यस्वरूपसम्बन्धस्याकार्यत्वात् । प्रागभाववत्तस्यासाध्यत्वात् । न द्वितीयः । उपाधेरागन्तुकत्वेपि स्वकारणाधीनतयाऽयत्नसिद्धत्वात् । अतिरिक्तसम्बन्धस्यानङ्गीकारात् । अप्रामाणिकत्वाच्चेति किं बहुना । नन्वात्यन्तिकी दुःखनिवृत्तिरित्यनुपपन्नम् । तथाहि दुःखनिवृत्तिरिति दुःखध्वंसो वा विवक्षितः । अभावान्तरम् वा विवक्षितम् । नाद्यः । उत्पन्नदुःखध्वंसस्यायत्नसिद्धत्वेन तदर्थ-

---

च्छेदसाध्यतायामेव पर्यवसानात्प्रायश्चित्तस्थले क्लृप्तत्वादिति भावः । तस्यां दशायां मुक्तिदशायाम् । ननु दुःखहेतूच्छेदस्य सुखदुःखाभावेतरत्वेन पुरुषार्थत्वाद्दुःखं मे माभूदिति उद्दिश्यैव पुरुषप्रवृत्तेश्च दुःखप्रागभावस्य मुक्तित्वे व्यवस्थिते मुक्तिफलकविधिबला-

प्रवृत्त्यनुपपत्तेः। अनुत्पन्नप्रतियोगिकस्य दुःखध्वंसस्याशक्यत्वात्। प्रत्युत दुःखोत्पादार्थप्रवृत्तिप्रसङ्गात्। नचैवं दृश्यते। नेतरः। अभावान्तरस्यासाध्यत्वेन पुरुषार्थत्वानुपपत्तेः। किन्तु दुःखनिवृत्तेरात्यन्तिकत्वं विवक्षितम्। समानाधिकरणदुःखासमानकालीनत्वमिति चेत्। न एवंविधदुःखध्वंसे प्रमाणाभावात्। प्रत्युत दुःखध्वंसस्यैव समानाधिकरणदुःखसमानकालीनत्वनियतत्वे प्रमाणसत्त्वात्। कथं वास्याः पुरुषा-

---

त्प्रागभावे प्रतियोगिजनकत्वनियमस्त्यज्यतामित्याशङ्क्याह। एतेनेति। तदेव विवृणोति। अन्यथेति। दुःखेनात्यन्तविमुक्तश्चरतीति स्वरसेन दुःखध्वंसस्य मुक्तित्वेनोपपत्तेरित्यर्थः। ननु न दुःखहेतूच्छेदसाध्यतारूपा प्रागभावस्य तत्परिपालनस्य वा साध्यता किन्तूत्तरसमयसम्बन्धित्वेन प्रागभावस्यैव साध्यतेत्यत आह। न च प्रागभाव एवेति। मोक्षानन्तरं दुःखोत्पादप्रसङ्गादिति पूर्वोक्तयुक्तेरिति भावः। अभ्युच्चयेनाह। उत्तरसमयेति। अनन्यगतिकतया प्रागभावस्य प्रतियोग्युत्पत्तिनियमं त्याजयितुमन्यथोपपत्तिं दूषयति। नन्विति। विशेष्यांशं दूषयितुं विकल्पयति। तथाहीति। प्रयत्नेति। विरोधिगुणादेरिति भावः। अथ-

र्थत्वम् सुखस्यापि हानेरिति व्यवस्थितौ तुल्या-यव्ययफलकत्वेनानुद्देश्यत्वात् । न च जीवन्मुक्ति-दशाकसुखमुद्दिश्य प्रवर्तते । परममुक्तेरन्यथाला-भ इति वाच्यम् । परममुक्तेरपुरुषार्थत्वप्रसङ्गात् ।

क्यत्वादिति । तत्तत्प्रतियोगित्वेन तत्तद्ध्वंसे हेतुत्वा-दिति भावः । उत्पाद्य तर्हि दुःखं नाश्यतामत आह । प्रत्युतेति । विशेषणांशमपि दूषयति । किञ्चेत्या-दिना । इदानीन्तनमुक्तावस्मदादिदुःखसमानकाली-नायामव्याप्तिनिवृत्त्यै समानाधिकरणेति । अधिकरण समवायिमोक्षफलको विधिरेव तत्र मानमत आह । प्रत्युतेति । तत्र समानाधिकरणदुःखासमानकालीने दुःखध्वंसे प्रमाणविरोधादन्यस्तत्र मुक्तिपदार्थ इत्यर्थः । आहत्य दुःखेनात्यन्तविमुक्तश्चरतीतिश्रुतिस्तत्र मानमत आह । कथं वास्येति । यदाहुः—

बरं वृन्दावने रम्ये शृगालत्वं स इच्छतु ।
गौतमाप्तिहितां मुक्तिं गौतमो गन्तुमर्हति ॥

इति भावः । सुखस्यापीति । न च बहुतरदुःखानु-विद्धतया तस्य दुःखपक्षे निःक्षेपान्न तद्धानिज्ञानं दुःखा-भावार्थिप्रवृत्तिप्रतिबन्धकमिति वाच्यम् । तथासति दुःखाननुविद्धसुखत्वेन तस्य स्वतःपुरुषार्थत्वभङ्गप्रस-ङ्गात् । प्राप्ताप्राप्तविवेकेन दुःखस्यैव हेयत्वाच्चेति भावः । ननु जीवन्मुक्तिकालीनसुखोद्देशेऽपि परमु-

रागाभावेन सुखस्यानुद्देश्यत्वाभ्युपगमाच्च। किं वा(२) परममुक्तित्वम्। समानाधिकरणदुःखासमानकालीनदुःखध्वंसत्वमिति चेत्। न सुखान्तमुक्तौ पूर्वमपि तथाविधदुःखध्वंसस्य जातत्वात् भोगदशायामपि मुक्तत्वप्रसङ्गात्। न च दुःखान्तै-

क्यथवश्यम्भावेन सुखहानिप्रतिसन्धानात्कथं तुल्यायव्ययतोद्घाटस्तत्राह। परममुक्तेष्विति। अप्रतिसंहितागा एवाकस्मात्प्राप्तिरिति न सुखहानिज्ञानमस्तीति भावः। इष्टापत्तिं मन्यमानं प्रत्याह रागाभावेनेति। यद्यपि सर्वथा रागाभावोऽसिद्धः मुमुक्षोरसत्त्वात्। तथापि क्षयिष्णुत्वादिदोषदर्शनेन सुखे तदभावोऽभिमतः। असम्भवेन दूषितमपि परममुक्तित्वं दूषणान्तरदानाय पुनः पृच्छति। किञ्चेति। पूर्वोत्तरभागयोर्दुःखपदस्य मुख्यदुःखपरत्वं मत्वा दूषयति। सुखान्तमुक्ताविति। सुखानुभवाव्यवहितोत्तरक्षणे मुक्तथव्यवहितप्राक्कालवृत्तिसुखानुभवदशायां देहादिगौणदुःखसमानकालीनत्वेपि मुख्यदुःखासमानकालीनदुःखध्वंसत्वान्मुक्तत्वप्रसङ्गादित्यर्थः। ननु मरणस्य दुःखाविनाभावान्न सुखान्तमुक्तिरत आह। नचेति। सुखमरणस्येति। ते नराः सुखमृत्यव इत्यादिपुराणेष्विति शेषः। संस्कारेति। साक्षात्कारविषयदुःखध्वंस इदानीमपीति

(१) २१४ पृष्ठमारभ्य मुक्तिवादप्रकरणं ज्ञेयम्।

(२) किञ्चेति—१ पु० पा०।

व मुक्तिः सुखमरणस्यापि श्रवणात्। नापि संस्काराजनकसाक्षात्कारविषयदुःखध्वंसत्वम्। सुखान्तमुक्तौ भोगदशायां मुक्तत्वप्रसङ्गात्। मुक्तेरुद्देश्यतावच्छेदकजिज्ञासायामेतस्योपन्यासानर्हत्वात्। न ह्यनेन मुक्तेरुद्देश्यताऽवच्छिद्यते। अत एव संस्काराजनकानुभवध्वंसत्वाद्दृष्टनाशानाश्यदुःखध्वंसत्वे निरस्ते। किञ्चादृष्टनाशनाश्यत्वमपि दुःखस्यासिद्धमेव। दुःखस्य

संस्काराजनकेति साक्षात्कारविशेषणम्। इदानीन्तनदुःखस्य द्वेष्यतया तत्साक्षात्कारस्य संस्कारजनकत्वात्। योगिनां च सुखदुःखयोरुपेक्षणीयत्वेन तत्साक्षात्कारस्य संस्काराजनकत्वादिति भावः। नन्वस्मदादिदुःखस्याप्युपेक्षारूपसंस्कारजनकयोगिसाक्षात्कारविषयत्वात्तद्ध्वंसेऽतिव्याप्तिः। न च नञर्थप्रत्ययो विवक्षितः। ईश्वरसाक्षात्कारविषयत्वेनासम्भवप्रसङ्गादिति चेत् न लौकिकविशिष्टनिश्चयस्यैव साक्षात्कारपदार्थत्वात्। अत एव न तादृशसंशयनिर्विकल्पकतया दोषतादवस्थ्यमिति। मुक्तत्वप्रसङ्गात्। परममुक्तत्वप्रसङ्गात्। वस्तुदोषमुक्त्वा पुंदोषमाह। मुक्तेरुद्देश्यतेति। उक्तदोषावन्यत्रातिदिशति। अत एवेति। इदानीन्तनदुःखस्य भोगनाश्यता न त्वदृष्टनाश्यतेति तद्ध्वंसव्यवच्छेदः। द्वितीयेऽसम्भवमप्याह। किञ्चेति। सुखत्वदुःखत्वयोः

भोगैकनाश्यत्वात्। संशयस्य संस्काराजनकत्वेन संसारदशायामपि प्रसङ्गादित्याहुः। नाप्यजनकदुःखध्वंसत्वम्। असिद्धत्वात्। लिङ्गत्वेनानुमितौ विषयीभूय योगिसाक्षात्कार(१)जनकत्वस्य संभवात्। नापि सकलात्मविशेषगुणध्वंसत्वं सकलदुःखध्वंसत्वं वा। मिलितप्रतियोगिकध्वंसस्यानुपपत्तेः। नापि दुःखध्वंसमात्रं प्र

समानाधिकरणसमानकालीनसाक्षात्कारविषयताव्याप्यत्वाच्चरममपि दुःखमनुभूयत एव तथा चानुभवादेव तन्नाशो नादृष्टनाशादिति भावः। प्रथमे कैश्चिदुक्तामतिव्याप्तिमनुवदति। संशयस्येति। अन्यतमत्वोत्कीर्तनेन संशयस्य संस्कारजनकत्वं ग्रन्थकृदभिमतमिति प्रतिभाति। अजनकेति। संसारावस्थदुःखस्य स्वसाक्षात्कारजनकत्वात् न तद्ध्वंसेऽतिव्याप्तिः। लिङ्गकारणतापक्षेणाह। अनुमितौ लिङ्गत्वेनेति। अधर्माद्यनुमितावित्यर्थः। वर्त्तमानस्वसुखदुःखादिविषयं योगिज्ञानं लौकिकमेवेति विषयजन्यमित्याशयेनाह। विषयीभूयेति। साक्षात्कारे चरमसाक्षात्कारे स्वध्वंसे चेत्यपि द्रष्टव्यम्। सकलेति। संयोगादिभिरसम्भवव्यावृत्त्यै विशेषेति। रूपादिभिस्तद्व्यावृत्त्यै

(१) साक्षात्कारे च—३ पु० पा०।

त्येकविवक्षायामतिव्याप्तेः । चरमदुःख(१)ध्वंसत्वविवक्षायां तस्यावश्योपजीव्यत्वेनान्येषां परित्यागात् । नाप्यदृष्टाभावहेतुकानुभवध्वंसत्वम् । अस्यापुरुषार्थत्वात् । न च प्रायश्चित्तानुभवध्वंसेऽतिव्याप्तिः । तस्य संस्कारेणैव नाशोपपत्तेः ।

आत्मेति । भोगदशायामतिव्याप्तेराह । सकलेति । आत्मविशेषगुणध्वंसत्वेनानुद्देश्यत्वादाह । सकलदुःखेति । साकल्यं प्रतियोगिनो विशेषणं ध्वंसस्य वा नाद्य इत्याह । मिलितेति । तदात्मसकलदुःखानामेकदा असत्त्वेन तावज्जन्यैकध्वंसस्यासम्भवात् तावदजन्यस्य च तावद्ध्वंसत्वानुपपत्तेरिति भावः । द्वितीयमर्थतोऽनुवदति । दुःखध्वंसमात्रमिति । मात्रशब्दः कार्त्स्न्ये । तेपि मुक्तिः प्रत्येकं मिलिता वा नाद्य इत्याह । प्रत्येकेति । इदानीन्तनदुःखध्वंसेष्विति शेषः । द्वितीये मेलकप्रतियोगिकतिपयसिद्धत्वेन तदात्मनो मुक्तेः साध्यत्वानुपपत्तिः । तथापि सकलध्वंसमेलनमसिद्धमेव यावन्न चरमध्वंस इति चेन्न हन्तैव प्राप्ताप्राप्तविवेकेन चरमध्वंस एवावश्यक उपजीव्यत्वान्मुक्तिरस्त्वित्याह । चरमेति । न च सापि चरमस्यात्यन्तिकत्वदूषणेनैव दूषितकल्पत्वादिति भावः । चरमस्य दुःखसाक्षात्कारस्य स्वोत्तरभाविविरोधिगुणान्तरानुदयेन भोजकादृष्टनाशना-

(१) चरमदुःखविवक्षायान्तु—२पु० पा० ।

अत्रोच्यते । दुःखान्तरध्वंसस्यायत्नसिद्धत्वेऽपि तथाविधदुःखध्वंसस्य प्रयाससाध्ययोगाभ्याससाध्यत्वात् । दुःखोत्पादार्थप्रवृत्तिप्रसङ्गस्त्विष्ट एव । जीवन्मुक्तिदशायां तथा प्रमाण-

ग्रयत्वादिदानीन्तनस्य च तस्य संस्कारादिभिरेव नाशसंभवाददृष्टप्रागभावहेतुकोऽनुभवध्वंसो मुक्तिरस्तु तत्राह । अस्यापुरुषार्थत्वादिति । अत्र परोद्भावितामप्यतिव्याप्तिं दूषयति । न च प्रायणेति । संस्कारेणेति । स्मृतिदर्शनकल्पेनेति शेषः ।

अन्यथोपपत्तिं समर्थयते । अत्रोच्यत इति । यदुक्तमुत्पन्ने चरमदुःखेऽयत्नसिद्धस्तद्ध्वंस इति भवेदेवं यदि दुःखध्वंसमात्रं मुक्तिपदार्थः स्यात् । किन्तु समानाधिकरणदुःखासमानकालीनत्वविशेषितम् । न च तत्पुरुषप्रयत्नमन्तरा न हि जन्मानपाये दुःखध्वंसस्य समानाधिकरणदुःखासमानकालीनता नाम । न च प्रवृत्त्यनपगमे तदपायः । न च रागादिदोषानुपशमे तदपगमः । न च तन्मूलमिथ्याज्ञानवासनानुपरमे तदुपशमः । न च तत्त्वसाक्षात्कारतरणेरनुदये तदुपरमः । न च योगाभ्याससाध्यनिदिध्यासनावधिना विना श्रवणादिना तदुदय इत्यस्त्येककृतिसाध्यतेत्याह दुःखान्तरेति । दुःखोत्पादाय प्रवृत्तिमनुमोदते । इष्ट एवेति । जीवन्मुक्तिदशायामिति । भोगैकनाश्यस्य कर्मणो मुक्तिविरोधिनः क्षयापयोगिनो

सिद्धत्वात् । किञ्च नोत्पन्नदुःखध्वंसार्थमनागत-
दुःखध्वंसार्थं वा प्रवर्तते । किन्तु दुःखहे-
तुसंसारनाशाय । एतदेवाभिसन्धाय दुःखहेतौ
दुःखत्वोपचारः शास्त्रे हेतूच्छेदे पुरुषव्यापारादि-
त्याहुः । न च तत्राप्युत्पन्नानुत्पन्नविकल्पसम्भवे-
नासाध्यत्वम् । अशक्यसाध्यत्वं वा शङ्कनीयम् । उ-

दुःखभोगे प्रवृत्तिस्वीकारादित्यर्थः । समानाधिकरण-
दुःखासमानकालीनदुःखसाधनध्वंसो मुक्तिरित्येकदेशि-
मतेपि परिहारमाह । किञ्चेति । संसारो देहात्मा-
भेदभ्रमवासना न मिथ्याज्ञानम् उत्पन्नानुत्पन्नविकल्पग्रा-
सात् । अत एव तस्यास्थिरत्वेनायत्नसिद्धविनाशत्वा-
भावादहिकण्टकादिना नाशदर्शने यत्नसाध्यविनाशत्वं
दर्शयिष्यति । उत्पन्नस्यैवेत्यादिना । ननु तत्त्वज्ञानमभे-
दभ्रमं निवर्तयेद्विरोधित्वात् । न तु तद्वासनां क्वचि-
दप्यक्लृप्तत्वाद्वासनायाः स्मृत्येकनाश्यत्वाच्चेति चेन् न
अनन्यगतिकतया प्रकृत एव तथाकल्पनादिति वदन्ति ।
नन्वेवं दुःखहेतुसंसारनाशाय प्रवृत्तिरिति वदता दुःख-
साधनध्वंसस्य मुक्तित्वमुक्तम् तथा च तदत्यन्तविमोक्षो-
ऽपवर्ग इति सूत्रविरोधः । तेन दुःखात्यन्तनिवृत्तेरेव
तत्त्वाभिधानादित्याशङ्क्याह । एतदेवेति । यतो हेतू-
च्छेद एव पुरुषव्यापारो न मुख्यदुःखोच्छेद अतः सौत्रं
दुःखपदं दुःखसाधने औपचारिकमित्यर्थः । न चेत्या-

त्पन्न एव दुःखहेतावहिकण्टकादौ लोके परिहार-स्य यत्नसाध्यत्वदर्शनात् । न च यदि तेन हेतुना दुःखमवश्यं जनयितव्यं तदा परिहारानुपपत्तिः । न जनयितव्यं चेत् । किमर्थं परि-हरणीयमिति वाच्यम् । कण्टकादिपरिहारेप्यस्य समानत्वात् । न चैवंविधदुःखध्वंसस्याप्रा-

दिना मिथ्याज्ञानाभिप्रायेण विकल्पानुपपत्तिमाशङ्क्य वासनाभिप्रायेण परिहरति । उत्पन्नस्यैवेति । अन्यथा-हिकण्टकादेः स्थिरत्वेन तन्नाशस्य यत्नसाध्यत्वेपि मिथ्याज्ञानस्य विरोधिगुणान्तरीयनिवर्तनीयतया तद्ध्वंसस्यायत्नसिद्धत्वान्न तदर्थं प्रवृत्तिरुचिता परेणापि सुवचत्वात् । एकदेशिमतं समाप्य पूर्वपक्षितं दुःखध्वंसस्याप्रामाणिकत्वं निरस्यति । नचैवंभूतेति । प्रत्येकमुक्तिसाधने पक्षमाह । देवदत्तेति । सर्वमुक्तिसाधने तमाह । दुःखत्वमेवेति । एवं दुःखत्वस् देवदत्तदुःखत्वस् । न च सुषुप्तौ देवदत्तदुःखासमानकालीनदेवदत्तदुःखध्वंससंभवात्सिद्धसाधनमिति वाच्यम् असमानकालीनपदेन समानकालीनान्यत्वस्य विवक्षणादन्योन्याभावस्य च व्याप्यवृत्तित्वात् । सिद्धसाधननिवृत्त्यै असमानकालीनान्तम् । न च स्वपदस्य समभिव्याहृतपरत्वात्तादृशध्वंसप्रतियोगिनि तत्तदादित्यगत्यादिरूपे कालोपाधौ दुःखत्ववृत्तेः सिद्धसाधनम् । वृत्तिपदस्य समवायार्थत्वात् । आत्मत्वे व्यभि-

माणिकत्वम् । देवदत्तदुःखत्वम् दुःखत्वमेव वा स्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्तिकार्यमात्रवृत्ति धर्मत्वात् एतत्प्रदीपसन्ततित्ववदित्यनुमानस्यागमस्य च विद्यमानत्वात् । तथा च न दुःखध्वंसत्वं समानाधिकरणदुःखसमानकालीनत्वव्याप्यम् । न च तुल्यायव्ययफलकत्वेनापुरुषार्थत्वम् । अतिदुःखितस्य सुखेऽपि वैराग्यदर्शनेनैवंविधपुरुषार्थत्वस्य प्रमाणासिद्धत्वात् ।

चारवारणाय कार्यत्वेति । सत्तायां तन्निवृत्त्यै मात्रेति । तत एवानन्तत्वमपि निरस्तम् । न च ध्वंसत्वे व्यभिचारः । प्रागसत्त्वे सतः कार्यपदार्थत्वादेतत्प्रदीपसन्ततित्वं तत्सन्ततिवृत्तिर्जातिविशेषो देवदत्तत्वादिवत् । विपक्षबाधकाभावादनुमानस्याप्रयोजकत्वं शङ्कमानं प्रत्याह । आगमस्य चेति । दुःखेनात्यन्तविमुक्तश्चरतीत्यादेरित्यर्थः । तथा च तदप्रामाण्यप्रसङ्ग एव विपक्षबाधकस्तर्क इति भावः । वैपरीत्यग्राहिप्रमाणविरोधमुद्धरति । तथाचेति । सुखेति । वैराग्यदर्शनेनेति । तथा च वीतरागस्य सुखहानेरनिष्टत्वाभावेन बलवदनिष्टाप्रतिसन्धानान्न प्रवृत्तिप्रतिबन्धः । रागान्धस्य वधबन्धदुःखाप्रतिसन्धानादिव पारदार्य इति भावः । जीवन्मुक्तिकालीने दुःखध्वंसे पूर्वोक्तमुक्तिलक्षणातिव्याप्तिमाशङ्क्य निरस्यति । न चेति । इष्ट-

न च सुखान्तमुक्तौ भोगदशायामपि मुक्तत्व-प्रसङ्गो दोषायेष्टत्वात् । यथोक्तोत्पन्नदुःखध्वंसस्यैव मुक्तित्वात् । न च जीवन्मुक्तिपरममुक्तयोर्व्यतिरेकानुपपत्तिः(१) । योगजादृष्टजन्यतत्त्वसाक्षात्कारवत्त्वस्य समानाधिकरणविशेषगुणावच्छि-

त्वादिति । अस्य मुक्तिमात्रलक्षणत्वात् । जीवन्मुक्तेरपि च मुक्तित्वादित्यर्थः । यथोक्तेति । दुःखपदयोर्मुख्यदुःखपरत्वमिति भावः । वस्तुतः प्रथमदुःखपदस्य गौणमुख्यसाधारणदुःखपरतया परममुक्तिलक्षणमपीदमेवेति द्रष्टव्यम् । व्यतिभेदो भेदकर्मव्यतिहारः । परस्परभेद इति यावत् । योगजेति । सांसारिकसाक्षात्कारव्यावृत्त्यै जन्यान्तम् । तत्र योगो निदिध्यासनम् । तत्त्वपदं स्वरूपकथनाय । साक्षात्कारपदं तद्वासनापरम् । अन्यथा विषयान्तरसञ्चारदशायां तदभावप्रसङ्गात् । समानाधिकरणेति । मिथ्याज्ञानं ध्वंसमात्रं जीवन्मुक्तावपीत्यतः सवासनेति । समानाधिकरणवासनासमानकालीनमिथ्याज्ञानध्वंस इत्यर्थः । जीवन्मुक्तौ च न वासनाध्वंसः प्रमाणाभावादित्याशयः । सवासनमिथ्याज्ञानपदस्थाने पदान्तरावापेन लक्षणान्तरमाह । समानाधिकरणेति । तदात्मवृत्तिविशेषगुणत्वावच्छिन्नध्वंस इत्यर्थः । संयोगरूपादिसत्त्वान्मुक्तावव्याप्तिं वारयितुं विशेष-

(१) भेदकानुपपत्तिः—१ पु० पा० ।

त्सवासनमिथ्याज्ञानध्वंसत्वस्य यथासम्भवं जीवन्मुक्तिपरममुक्त्योर्लक्षणद्वयोहनीयत्वात् । उभयसाधारणं तु सवासनमिथ्याज्ञानध्वंसत्वम् तत्त्वसाक्षात्कारप्रागभावविरहितत्वयोगजधर्मप्रागभावविरहितत्वमित्यादि स्वयमूहनीयम् । प्राञ्चस्तु दुःखा-

---

तदात्मवृत्तिपदे । संसारदशायां कतिपयविशेषगुणध्वंसेऽतिव्याप्तिनिवृत्त्यै अवच्छिन्नेति । इदं च सामान्यध्वंसवादिमतेनोक्तम् । वस्तुतस्तु प्रतियोगितावच्छेदकसामान्यावच्छिन्नानां सर्वेषामेकदाऽसत्त्वेन तावज्जन्यैकध्वंसानुपपत्तेः । समानाधिकरणविशेषगुणासमानकालीनमिथ्याज्ञानध्वंस इत्यर्थे तात्पर्यं द्रष्टव्यम् । न चैतयोः परममुक्त्युद्देश्यतावच्छेदकत्वानुपपत्तिः । भेदकतयैवोपन्यासादिति । जीवन्मुक्तिपरममुक्तिलक्षणस्येति । तयोरुपलक्षणस्य तत्सहचरिततया परिचायकस्येत्यर्थः । यथा मृते दुःखध्वंसरूपायां मुक्ताववृत्तेर्मिथ्याज्ञानध्वंसत्वस्य तल्लक्षणत्वानुपपत्तेः । जीवन्मुक्तौ वासनानाशे प्रमाणाभावादपरितुष्यन्नाह । तत्त्वसाक्षात्कारेति । जीवन्मुक्तौ साक्षात्कारस्य परममुक्तौ च तद्ध्वंसस्य विरोधिनः सत्त्वेन प्रागभावविरहाविशेषादिति भावः । यावत्तत्त्वसाक्षात्कारप्रागभावविरहो न युक्तः जीवन्मुक्तौ चरमसाक्षात्कारप्रागभावसत्त्वात् । नापि किञ्चित्प्रागभावविरहः संसारदशायामपि सुलभत्वात् इत्यरुचेराह । यो-

त्यन्ताभाव एव मुक्तिः आत्यन्तिकी दुःखनिवृत्तिरित्यनेनैव तस्य विवक्षितत्वात् । न चैवमसाध्यत्वेनापुरुषार्थत्वप्रसङ्गः । आकाशादेरपि मुक्तत्वप्रसङ्गो दोषाय । उक्तदुःखध्वंसरूपस्य तत्सम्बन्धस्य साध्यत्वात् । न चावश्यकत्वेन स एव मुक्तिपदार्थ इति वाच्यम् । दुःखेनात्यन्तविमुक्तश्चरतीति श्रुत्या मुक्तिदशायामात्मनो दुःखात्यन्ताभावस्य बोधनात् । न च श्रुतावपि तथाध्वंस एव विवक्षित इति वाच्यम् । अत्यन्तविमोक्षपदस्यात्यन्ताभाव एव व्युत्पन्नत्वात् । एवंविधदुःखध्वंसपरत्वे च लक्षणाप्रसङ्ग इत्याहुरिति संक्षेपः ।

इतिमुक्तिवादः ।

---

गजेति । न चाप्युत्पत्स्यमानधर्मान्तरप्रागभावसत्त्वादसम्भवः । ऊषरात्मकत्वेन जीवन्मुक्ते तदनुत्पत्तेरिति भावः । जरन्नैयायिकमतमाह । प्राञ्चस्त्विति । ननु निवृत्तिपदस्य नाशार्थत्वात्कथमेवमित्यत आह । आत्यन्तिकीति । नन्वेवमत्यन्ताभावस्य स्वतस्सिद्धत्वादपुरुषार्थतापत्तिः अनात्मनोपि दुःखात्यन्ताभावादतिव्याप्तिश्चेत्याशङ्क्याह । न चैवमिति । स्वसम्बन्धिदुःखात्यन्ताभावस्य मुक्तित्वे विशेषणीभूतसम्बन्धस्य साध्यत्वाद्विशिष्टस्य साध्यत्वं पुरुषार्थत्वम् अनतिप्रसङ्गश्चेति भावः । स-

सिद्धार्थस्यानुभावकतायाः अभावात् तत्र व्युत्पत्तिग्रहो नास्तीति केषाञ्चिन्मतम् । तत्र तेषामयमाशयः । प्रयोजकवृद्धोदीरितवाक्यश्रवणा-

---

तेन दुःखस्याप्यव्याप्यवृत्तित्वाद्दुःखदशायामपि तदत्यन्ताभावसत्त्वादतिव्याप्तिः व्याप्यवृत्त्यत्यन्ताभावश्च प्रतियोगिसमवायिदेशे सम्भवतीति निरस्तम् विशिष्टस्य दुःखदशायामभावात् । अस्तु तर्हि सम्बन्धत्वेन कल्पो दुःखध्वंस एव मुक्तिर्लाघवादावश्यकत्वाच्चेत्यत आह । न चेति । अत्र विमोकपदादभावमात्रस्यात्यन्तपदान्तरहितस्य प्रतीतस्याभेदेनान्वयादन्तरहिताभावमात्रस्यैव लाभाद्रूढिकल्पकमानाभावाच्च सम्भवत्स्वतःसाध्यताकस्य ध्वंसस्यैव युक्तं मुक्तित्वमिति प्राञ्च इत्यनेन सूचितमिति ॥

इतिश्रीसकलसामन्तप्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां मुक्तिप्रकरणम् ॥



नन्तरं प्रयोज्यवृद्धव्यवहारमाकलयन् तेन व्यवहारकारणीभूतं तदीयं ज्ञानमवगच्छंस्तत्र चावापोद्वापक्रमेण तत्तत्पदानां कारणत्वमवधारयन् तत्र चार्थे वाच्यवाचकभावलक्षणसम्बन्धमवधारयति तटस्थो व्युत्पित्सुः। सिद्धार्थस्य साध्यतोपरागविरहात्कथं तदधीनव्युत्पत्तिग्रहः। अनुभावकत्वेनाकाङ्क्षादिवत्साध्यतोपरागस्यापि प्र-

कार्यवाचकपदासमभिव्याहृतपदानां कार्यविशेषानुभवजनकत्वं व्यवस्थापयितुं कार्यविषयत्वं शब्दानुभवत्वव्यापकं न वेति संशयबीजं विपरीतकोट्युपस्थितिमाह। सिद्धार्थस्येति। सिद्धो कार्यभूतोऽर्थो यस्य कारकादिपदकदम्बस्येत्यर्थः। अनुभावकताया इति कल्पकस्येति शेषः। स्वतन्त्रव्यवहारानुमितानुभवहेतुत्वान्यथानुपपत्त्या शक्तिः कल्प्या सिद्धार्थाच्च न व्यवहार इति प्रयोज्यस्य तदर्थानुभवकल्पने मानाभावान्न तदनुपपत्त्या तटस्थस्य शक्तिग्रह इत्यर्थः। केषाञ्चिन्मीमांसकानां तत्र व्युत्पत्तिग्रहाभावेऽनुभावकत्वे किमनुभूतकार्यव्यवहारानुपपत्तिर्मानमुत क्लृप्तानुभवसामग्रीसमवधानमिति विकल्प्य नाद्य इत्याह। प्रयोजकेत्यादिना ग्रह इत्यन्तेन। व्यवहारम् कृतिरूपं आकलयन् चेष्टया कार्येणानुमिन्वन् तेन कृत्याकलनेन व्यवहारकारणीभूतं कृतिकारणीभूतं तदीयं प्रयोज्यीयं ज्ञानं स्वस्मिन्प्रवृत्तिहेतुत्वेनावधारितम्। कार्यत्वान्वि-

योजकत्वात् । साध्यतोपरक्ताद्वाक्यात्प्रवृत्तिल-
क्षणव्यवहारदर्शनात् । तेन च तत्प्रयोजकज्ञानोन्न-
यनात् । तत्र शब्दस्य तद्भावभावित्वेन(१) तत्कार-
णत्वावधारणात् व्युत्पद्यते बाल इति युक्तम् । न
च पुत्रस्ते जात इति सिद्धार्थादपि प्रहर्षप्रयुक्तमुख-
प्रसाददर्शनात् हर्षस्य ज्ञानसाध्यत्वात् तत्रापि
शब्दस्यैव हेतुत्वमिति वाच्यम् । हर्षहेतूनामा-

---

तगवानयनादिज्ञानं तत्र ज्ञाने तत्तदर्थांशावच्छिन्न इति
शेषः । आवापोद्वापक्रमेण तत्तत्पदप्रक्षेपपरित्यागक्र-
मेण तत्र पदेषु अर्थेषु च वाच्यवाचकभावलक्षणमिति
यथाकथञ्चित्पदोपस्थापितस्य शब्दानुभवविषयत्वेऽति-
प्रसङ्गादिति भावः । ततः प्रकृते किमित्यत आह । सि-
द्धार्थस्येति । तदधीनस्तत्प्रयोज्यः । साध्यतोपरागाभावे
प्रवृत्तिहेतुकार्यान्वयज्ञानाभावेन व्यवहारानुदये तदेकमा-
नकस्यानुभावकत्वस्यासिद्ध्या कथं तदनुपपत्तिमूलको
व्युत्पत्तिग्रह इत्यर्थः । द्वितीयं निरस्यति । अनुभावक-
त्वेनेति । तदनुपरागस्थले कल्पकव्यवहाराभावेनानुभव-
सिद्धेरव्यभिचारात्तत्कारणतासिद्धौ सामर्थ्यसिद्धिरिति
भावः । ननु साध्यतानुपराग एवानुभावकत्वे प्रयोजक-
इति तदुपरागस्थलेऽनुभावकत्वासिद्धेर्न तदधीनो व्यु-
त्पत्तिग्रह इत्येव किं न स्यात् इत्याशङ्क्याह । साध्यतो-

---

(१) तद्भावभावितया २ पु० पा० ।

नन्त्येन शब्दजन्यज्ञानसाध्यत्वासिद्धेः। न च परिणतिसुरसमाम्रफलमिति वाक्यश्रवणानन्तरं तत्र प्रवृत्तिदर्शनात्ततोऽनुभवकल्पने व्युत्पत्तिग्रहसम्भव इति वाच्यम्। यतः साध्यार्थस्थले क्लृप्तस्य साध्यतोपरागस्य प्रयोजकत्वव्यवस्थितौ तत्रापि तदध्याहृत्यैव प्रवर्तत इति युक्तम्। तदिदमुच्यते। कार्यपराणामन्विते शक्तिरिति।

परत्वादिति। व्युत्पद्यते बाल इति युक्तम् इत्यन्तेन सम्बन्धः। तथा च तत्रानुभावकताया आवश्यकत्वेन तत्रैव व्यभिचारात्साध्यतानुपरागो न हेतुरिति शेषः। हन्तैवं सिद्धार्थस्यापि मुखप्रसादानुमेयहर्षहेत्वनुभवजनकताया आवश्यकत्वेन तत्रैव व्यभिचारात्साध्यतानुपरागस्तत्र व्यभिचारीति तुल्यमित्याशङ्क्य निराचष्टे। न च पुत्रस्ते जात इति। तत्रापि शब्दस्येति। तद्भावभावित्वाविशेषादित्यर्थः। आनन्त्येनेति। प्रियासुखप्रसवादिज्ञानादनेतज्जन्यादपि हर्षसम्भवादित्यर्थः। तथा चानुभावकत्वासिद्धेर्न तुल्यमिति भावः। नन्वेवमपि सिद्धार्थस्थलीया प्रवृत्तिः प्रवृत्तित्वाविशेषादिष्टाभेदज्ञानसाध्या तच्च ज्ञानं शब्दाधीनमेवेति व्यभिचारान्न साध्यतोपरागस्तत्र प्रयोजक इत्याशङ्क्याह। न च परिणतीति। प्रथममगृहीतकार्यान्वितव्युत्पत्त्यनुरोधेन कल्पनान्तरानुदयात् कार्याध्याहार एवान्व-

अत्रोच्यते । हर्षहेतूनामानन्त्यादित्यनेन ज्ञानव्यतिरेकेणैव तत्र हर्ष उत्पद्यत इति वाभिमतम्। प्रमाणान्तरोपजातज्ञानाद्वा। न तावदाद्यः। हर्षस्य सुखरूपतया तस्य च ज्ञानकारणत्वव्यवस्थितौ तदन्तरेण तदुत्पत्तेरसम्भवात् । अन्यथा प्रवृत्तेरपि ज्ञाननैरपेक्ष्यकल्पनाप्रसङ्गात् । न द्वितीयः । वाक्यादन्यस्य तत्र प्रमाणस्य कल्पनीयत्वात्। वाक्यकारणत्वस्यैव युक्तत्वात् । अन्यथा गामा-

यबोध इत्याह । यतः साध्यार्थेति । तथा च न साध्यतोपरागस्यानुभावकत्वव्यभिचार इति भावः । ननु कार्यान्वितव्युत्पत्तिपक्षे परिणत्यादिपदैरेव स्वार्थविशेषणीभूतान्वयप्रतियोगिकार्योपस्थितेः सम्भवे किं तदध्याहारेणेति चेत् । न कार्यसामान्योपस्थितावप्यन्वयव्यतिरेकाभ्यां कार्यविशेषबोधे कार्यविशेषवाचकपदसमभिव्याहारस्य कारणताग्रहादध्याहारस्यावश्यकत्वादिति भावः । स्वोक्तेऽभियुक्तसंमतिमाह । तदिदमिति । अप्रवृत्तप्रवर्त्तनार्थो हि वाक्यप्रयोगः । न चाकिञ्चित्करस्य स्वरूपेणैव प्रवर्तकत्वम् प्रमाणत्वविरोधादव्युत्पन्नस्यापि तदापत्तेश्चेति स्वप्रवृत्तिहेतुतयाऽवधारितं कार्यत्वान्वयज्ञानं द्वारतया कल्प्यते तदनन्तरं चावापोद्वापक्रमेण कल्प्यमानापि प्रत्येकपदशक्तिः प्रथमगृहीतकार्यान्वयव्युत्पत्त्यविरोधाय कार्यान्विततत्तदर्थविषयैव कल्प्यत इत्यर्थः ।

नयेत्यादावपि प्रमाणान्तरजन्यज्ञानेनान्यथासि-
द्धिप्रसङ्गात् । न च सुरसमाम्रफलमित्यध्याहृ-
त्यैव प्रवर्तत इति युक्तम् । अध्याहारे प्रमाणा-

स्वरूपासिद्ध्या दूषयिष्यन् हर्षहेतूनामानन्त्या-
दित्युक्तं विकल्पयति । हर्षेति । अन्यथेति । तथा च
साध्यतोपरागस्थलेऽप्यनुभावकतानावश्यकत्वे कार्यान्वि-
तशक्तिरपि न सिद्ध्येदिति भावः । प्रमाणस्य
ज्ञापकस्य । नन्वेवं सन्देह एव परं स्यान्न वा-
क्यकारणतानिश्चय इत्यत आह । अन्यथेति । यदि
चोपस्थितिलाघवसहकृताभ्यामन्वयव्यतिरेकाभ्यां वाक्य-
जन्यतानिश्चयस्तदा तुल्यमत्रापीति भावः । ननु न
ज्ञानजन्यत्वं न वाऽन्यज्ञानहेतुकत्वं हर्षस्य विवक्षितम्
किन्तु हर्षसामान्येन तद्धेतुमात्रानुमानेपि तेषामानन्त्येन
परितोषयितुमशक्यत्वात् पुत्रजन्माव्यभिचारिवृद्धिश्रा-
द्धादिदर्शनेन च प्रथमन्तत्कार्यताबोधावश्यम्भावे सिद्धा-
र्थताभङ्गप्रसङ्गान्न कार्यपरो व्युत्पत्तिग्रह इति प्रथमगृही-
तव्युत्पत्त्यनुरोधेन तदुत्तरप्रत्येकव्युत्पत्तिकल्पनमपि का-
र्यान्वित एवेतीति चेत् न अयं हर्ष इष्टताप्तिज्ञानजन्यः
हर्षत्वान्मदीयहर्षवत् इति सामान्यतो दृष्टस्यैव लाघवे-
न क्लृप्तोपस्थितिकपुत्रजन्महेतुकत्वावगाहित्वात् परि-
शेषानपेक्षणात् दृष्टान्तरस्य दृष्टेष्टतमपुत्रजन्मावरुद्धायां
बुद्धविवानधिरोहात् । प्राथम्यमात्रस्यानुरोध्यतायामप्र-

भावात्। न च साध्योपरागस्य वाक्यानुभावककल्पनायां(१) प्रयोजकत्वम्। आकाङ्क्षादिमत्त्वेनैव तदुपपत्तावन्यस्य गौरवकरत्वात्। न च सिद्धार्थादसंसर्गाग्रहेण व्यवहारोपपत्तिरिति वाच्यम्।

---

योजकत्वात्। अन्यथेदं रजतमिति भ्रमविरोधान्नेदं रजतमिति धीर्न स्यात्। घटमानयेतिवाक्यानन्तरं घटानयनप्रवृत्तिदर्शनात् घटानयनकार्यताज्ञानस्यैवानुमिततया तत्रानाकलितपदविभागस्य वाक्यस्य व्युत्पत्त्यवधारणे प्रथमगृहीततदनुरोधेन वाक्यमात्रे घटानयनकार्यतान्विते व्युत्पत्तिकल्पनाप्रसङ्गात्। गौरवानन्यलभ्यत्वाभ्यां त्यज्यत इति चेत्तुल्यम्। प्रमाणाभावादिति। कार्यान्वितव्युत्पत्तेरध्याहारसाध्यव्यभिचारज्ञानाभावाधीनतयेदानीमसिद्धेरन्योन्याश्रयादिति भावः। नन्वन्वयानुभव एव मानन्तस्य साध्यतोपरागप्रयोज्यत्वादित्यत आह। न चेति। सत्यपि साध्यतोपरागे वन्हिना सिञ्चेदित्यादौ योग्यताकाङ्क्षादिविलम्बेनैवाकाङ्क्षादिसमवधाने साध्यतोपरागविलम्बेनान्वयानुभवविलम्बासिद्धेरप्रामाणिकगौरवप्रसङ्गादित्यर्थः। अन्वयस्यैव साध्यतोपरागविलम्बादन्वयानुभवविलम्बः सिद्धार्थस्थले, न चैवं तत्र व्यवहारानुपपत्तिरसंसर्गाग्रहादेवोपपत्तेरत आह। न च सिद्धार्थेति। अन्यथेति। विनिगम-

---

(१) वाक्यानुभावकतायां—पा० ४ पु०।

बाधकाभावात् । अन्यथा वैपरीत्यस्यैव वक्तुं सुकरत्वात । न च प्रवृत्तिरूपव्यवहारस्यैव व्युत्पत्तौ प्रयोजकत्वम् । लाघवेन व्यवहारमात्रस्य तथात्वात् । सिद्धार्थात् व्युत्पत्तिविरहेपि अन्यत्र व्युत्पन्नस्य तस्मादनुभवे बाधकाभावात् । तस्मात्सिद्धार्थस्यानुभावकता नास्तीति वदतो गुरोरपि लघुत्वमेवेति ।

इतिसिद्धार्थवादः समाप्तः ।

काभावादिति शेषः । ननु प्रवृत्तेरेव स्वकारणीभूतानुभवोपपादकशक्तिकल्पकत्वम् अवृत्तिपरत्वे त्वनुभव एव न प्रमाणमिति क्व शक्तिकल्पनावकाश इत्यत आह । न चेति । लाघवेनेति । कारणताग्रहकाले शीघ्रोपस्थितिकत्वेनेत्यर्थः । पुत्रस्ते जात इत्यादावपि हर्षादिना पूर्वोक्तरीत्या हि व्युत्पत्तिग्रहप्रयोजकज्ञानोन्नयनादिति भावः । तुष्यतु दुर्जन इति न्यायेनाह । सिद्धार्थादिति । अन्यत्र साध्यतोपरागस्थले व्युत्पन्नस्य तज्जातीये पदे गृहीतशक्तिकस्य पुंसः तस्मादगृहीतशक्तिकजातीयपदात् । न हि सिद्धार्थस्थलीयानां न कदाचित्साध्यतोपराग इत्यस्ति सम्भव इति भावः । उपसंहरति तस्मादिति । लाघवप्रामाणिकाभिधानात् ।

इति श्रीसकलसामन्तप्रतापराजोद्योजितशेषानन्तविरचितायां न्यायसिद्धान्तदीपप्रभायां सिद्धार्थप्रामाण्यप्रकरणम् ।

अन्विते शक्तिरित्यपि विचारणीयम् । तत्र परेषामयमाशयः । तत्तदर्थान्वयबोधजनकत्वं

---

नन्वभिधानयुक्त्या विशेषजिज्ञासानुपपत्त्यैव कार्यान्वितेपि शक्तिर्वक्तव्येति परमत्यवस्थानेऽवसरसङ्गत्याऽन्विताभिधाननिषेधं प्रतिजानीते । अन्विते शक्तिरिति । विचारणीयं विरोधिलक्षणया विचारायोग्यमप्रामाणिकमिति यावत् । यद्वा निर्णीतमित्यर्थः । इह पदैः प्रतिपादिताः पदार्था एवान्वयगोचरया स्वशक्त्या तमनुभावयन्तीति त एव कारणमित्येके । अन्वयविशिष्टपदार्थगोचरया स्वशक्त्या पदान्येवेत्यपरे । तान्येव पदार्थमात्रगोचरया शक्त्याऽकाङ्क्षादिसचिवयाऽन्वयं बोधयन्तीति गौतमीयाः । तत्र घटान्वयो घटपदशक्यो न वेति विप्रतिपत्तौ चरमं व्यवस्थापयिष्यन् मध्यमवादिमुखेनैव प्रथमपक्षं दूषयितुं तदाशयमनुवदति । तत्रेति । अन्वितशक्त्यभ्युपगम इत्यर्थः । परेषां भाट्टानामन्वयांशे शक्तिः स्वीक्रियतामिति प्रतिज्ञानुमेयेन्वयः पदशक्यः अन्यति वृत्त्यन्तरे शाब्दानुभवविषयत्वादित्येवंरूपे हेतौ पदस्मारितपदार्थानामसंसर्गाग्रहादेव संसर्गव्यवहारो न संसर्गग्रहादिति तटस्थशङ्कितां विशेष्यासिद्धिमुद्धरति । तत्तदर्थेति । जनकत्वमप्रयोजकत्वम् उभयसिद्धत्वान्नायमस्य विचारावसर इत्यर्थः । ततः किमत आह ।

तावत् तत्तत्पदकदम्बकस्येति सुप्रसिद्धम् । तत्रा-न्वयबोधजनकत्वं(१) नियामकं विना न सम्भवति । नियामकत्वं च पदशक्तेर्वा तदर्थशक्तेर्वा । तत्र द्वितीये गौरवप्रसङ्गात् पदानामेवोपजीव्य-

तत्रेति अन्वयबोधजनकत्वे सतीत्यर्थः । तस्य पदकदम्बकस्य न सम्भवतीति । अन्वयाभिधानेति । प्रसङ्गाद-न्विते शक्तिरेष्टव्येति भावः । अस्तु तर्हि पदार्थ-गतैवान्वयशक्तिर्नियामिका कृतं पदैरन्विताभिधाने-नेति विवृण्वयशङ्कायां सगोत्रकलहभिया तामनुद्ध-रन्नेव गूढाशयः परपक्षं तावत्प्रतिक्षिपति । नियाम-कत्वञ्चेति । उभययाप्यन्वयस्य शक्यतासिद्धेस्तन्मतं तावदयुक्तमिति भावः । अत्र शक्तिमेव द्वेधा विकल्प-यता लक्षणनियामकत्वमसम्भावितमेवेति विवक्षितम् । तथाहि भट्टनयेऽन्वयस्य लक्ष्यत्वे प्राधान्येन भावित-प्रसङ्गः । नियमेन प्रतीतेरितरान्वितस्वार्थलक्षणमपि न युक्ता । घटपदात्क्वचिदपि शक्यशुद्धघटप्रतीतेरनङ्गी-कारात् । न्यायनयेपि लक्ष्यतावच्छेदकान्वितत्वप्रकार-कप्रतीतेरनिष्टाया: प्रसङ्गेन।लक्षणानुपपत्तिरिति तदनेन वृत्त्यन्तराभावो विशेषणमपि साधितं भवति । एवं परनिराकरणेन स्वस्थः सगोत्रकलहं समाधत्ते । तत्र द्वितीये गौरवप्रसङ्गादिति । पदार्थोपस्थितिहेतुक्लृप्त-

(२) बोधकत्वम्—पा० १ पु० ।

त्वेनान्वयांशेऽपि शक्तिः स्वीक्रियताम् । तदिदमुच्यते—

प्राथम्यादभिधातृत्वात्तात्पर्यौपगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥

पदशक्त्यतिरिक्तशक्तिकल्पनाप्रसङ्गादित्यर्थः । स्वपक्षे च क्लृप्तायाः अर्थोपस्थापकपदशक्तेरेवान्वयविषयत्वमात्रं कल्प्यत इति लाघवमिति भावः । यद्वार्यकरणवादिनापि नार्थमात्रे शक्तिर्वाच्या घटः कर्मत्वमित्यादिरूपेणोपस्थितेभ्योऽन्वयधीप्रसङ्गात् किन्तु पदविशेषोपस्थापितेषु पदार्थेषु तथा च पदविशेषापेक्षया गौरवमिति भावः । उपजीव्यत्वेनेति । पदार्थोपस्थिताविति शेषः । स्वोक्तेर्थे वृद्धसंमतिमाह । तदिदमुच्यते प्राथम्यादिति । अर्थापेक्षया प्रथमोपस्थितलाघवादित्यर्थः । अभिधातृत्वात् क्लृप्तशक्तिकत्वात् अनेन शक्त्यन्तरकल्पनागौरवाभावो दर्शितः । तात्पर्येति । तत्प्रतीच्छयोच्चरितत्वं तात्पर्यम् । तच्च पदेष्वेव सम्भवतीति तन्निर्वाहाय कल्प्यमाना शक्तिः पदेष्वेव युक्तेत्यर्थः । सा पदार्थान्वयानुभवहेतुः । परं युक्तं क्रियाविशेषणत्वात्क्लीबत्वम् । अर्थापत्तिमपि अन्वयशक्तौ मानमाह । किञ्चेति । यद्वाऽऽकाङ्क्षादिकमेव नियामकं स्यादित्याशङ्क्य प्रतिपाद्यजिज्ञासारूपा सैवान्वयसामान्याप्रतीतौ न घटत इत्याह किञ्चेति । कर्मविशेषेति । कर्मविशेषप्रतियोगि-

किञ्चान्वयस्याशक्यत्वे क्रियामात्राभिधाने कर्मविशेषजिज्ञासा कर्ममात्राभिधाने क्रियाविशेषजिज्ञासा च कथं स्यात्। न हि सामान्याप्रतीतौ विशेषजिज्ञासा सम्भवति। न चान्वयांशस्यापि शक्यत्वे यत्किञ्चित्पदेनान्वयबोधोपपत्तौ पदान्तरप्रयोगवैफल्यमिति वाच्यम्। प्रतियोगिविशेषोपस्थितौ तदुपयोगादिति।

अत्रोच्यते। घटादिपदानामितरान्विते वा शक्तिः। आनयनादिविशेषेतरान्विते वा। न तावदाद्यः कारकक्रियासमभिव्याहृतवाक्यात् कारकान्विता क्रिया क्रियान्वितं कारकमिति प्रतिपत्तिः स्यात्। तथा च वाक्यभेदो विशेषाप्रति-

---

त्वजिज्ञासेत्यर्थः। एवं क्रियाविशेषेत्यपि। एकेनैव वा पदार्थान्वितस्वार्थबोधने कृतकार्यत्वादपदवैयर्थ्यमित्याशङ्क्याह। न चेति। इतरसामान्यान्वयशक्तेरन्वयव्यतिरेकाभ्यां प्रतियोगिविशेषापत्तिसध्रीचीनाया एव विशेषान्वयबोधहेतुत्वकल्पनादिति भावः।

अनन्यलभ्यत्वेनान्वये घटादिपदानां शक्त्यभावं सिद्धान्तयिष्यंस्तत्सिद्धये किमितरान्विते स्वार्थे उत स्वार्थप्रतियोगिक इतरान्वये सेति विकल्पद्वये प्रथमे शक्त्यवच्छेदकं विकल्प्य दूषयति। घटादिपदानामिति।

प्रसक्तिश्च स्यात् । आकाङ्क्षादिमत्समभिव्याहार-विशेषाद्विशेषलाभ इति चेत् । तर्हि तस्मादन्वय-लाभोपपत्तौ तत्र शक्तिकल्पनाया अन्याय्य-त्वात् । तदिदमुच्यते—

अन्वयस्यान्यतः प्राप्तेरन्यथाप्युपपत्तितः ।
अनन्यलभ्यमात्रार्थशक्तान्येव पदानि न ।

---

इतरेति । इतरान्वितत्वेनेत्यर्थः । आनयनादीति । आनयनाद्यन्वितत्वेन वेत्यर्थः । कारकान्वितेति । कारकपदं वस्तुगत्यभिप्रायेण । इतरान्वितत्वस्य श-क्यतावच्छेदकत्वे कारणत्वादिबाधकाभावात् । एवं क्रियेत्यपि । अन्वयप्रकारकप्रतिपत्तिद्वयप्रसङ्गादित्यर्थः । द्वित्वांशे दोषमाह । तथाचेति । विशेषणवि-शेष्यभेदेन वाक्यार्थभेदादिति भावः । अन्वयप्रका-रकत्वरूपानिष्टापत्तिमुक्त्वेष्टानुपपत्तिमप्याह । विशे-षेति । प्रतियोगिविशेषप्रकारिका स्वरूपेणान्वयविशे-षावगाहिनीष्यमाणा प्रतिपत्तिश्च न स्यादित्यर्थः । एतावता घटान्वयो न घटपदशक्यतावच्छेदकः त-ज्जन्यानुभवाप्रकारकत्वादिति प्रयोगः सूचितः । ननु तवैव विशेषलाभानुपपत्तिः सामान्यत इतरान्वयानु-पस्थितौ प्रतियोगिविशेषाकाङ्क्षानुदयात् । मन्मते त्वितरान्वयसामान्योपस्थितावाकाङ्क्षासम्भवादाका-ङ्क्षितार्थकपदसमभिहारादन्वयविशेषलाभेन काचिद-

इति । न द्वितीयः । वाक्यार्थस्य घटमित्यनेनैव बोधितत्वादानयनादिपदप्रयोगवैफल्यप्रसङ्गात् । न च विशेषजिज्ञासान्यथानुपपत्त्या-

नुपपत्तिरिति गूढाभिसन्धिराह । आकाङ्क्षादीति । सामान्यान्वयोपस्थितेरन्यथापि सम्भवे नाकाङ्क्षोदय इति गूढाभिसन्धिरुत्तरमाह । तर्हीति । आवश्यकत्वादिति शेषः । अन्याय्यत्वादिति । अनन्यलभ्यत्वन्यायापेतत्वादित्यर्थः । स्वोक्ते वृद्धसंमतिमाह । अन्वयस्येति । अस्माकं मते पदानि अनन्यलभ्यमात्रार्थशक्तान्येव । अर्थेऽन्वयप्रतियोगिनि नान्वये इत्येवकारार्थः । अर्थेऽपि नानन्यलभ्ये लक्ष्यादाविति मात्रजर्थः । नान्वय इत्यत्र हेतुमाह । अन्यत इति । आकाङ्क्षादेरित्यर्थः । ननु शक्तेर्ज्ञापकत्वं क्लृप्तं न त्वाकाङ्क्षादेरन्वये शक्तेरेव स्वीकारादत आह । अन्यथानुपपत्तित इति । आकाङ्क्षादेरन्वयज्ञापकतानङ्गीकारे विशेषान्वयबोधानुपपत्तित इत्यर्थः । वैफल्येति । यद्यपि क्रियान्वितो घट इति घटान्विता क्रियेति च विलक्षणबुद्धिजननान्न वैफल्यम् तथापि प्रवृत्तिपरे वाक्ये तज्जन्यक्षमैव बुद्धिरुद्देश्या सा चैकापीति विशेषणविपरिवर्त्तमात्रेण भिन्नाकाराया अपराया वैयर्थ्यमेवेति भावः । अर्थापत्तिं दूषयति नचेति । यद्वा विशेषान्वयबोधहेतुनाऽऽकाङ्क्षादिनैव शक्तिकार्यान्यथासिद्ध्यापादनमयुक्तम् अन्वयसामान्यशक्त्यनङ्गीकारे प्रतिपाद्यजिज्ञासारूपाया

न्वयशक्तिकल्पनं युक्तम् । अन्वयमात्रस्य व्या प्तिबलेन प्राप्तौ तद्विशेषजिज्ञासाया: अन्यथैवोपपत्ते: । अन्यथा चक्षु:परिदृष्टजम्बीरादौ रसविशेषजिज्ञासाबलेन रसमात्रं चक्षुर्ग्राह्यं स्यात् । न च पदानां पदार्थानामन्वये शक्ति: । अन्वयस्य प्राधान्येन प्रतियोगिन उपसर्जनत्वेन प्रतीतिप्रसङ्गात् । न च तथा । किन्त्वन्वयस्योपसर्जनतया प्रतियोगिन: प्रधानतया भानमिति सङ्क्षेप ।:

इति अन्वयशक्तिनिरासवाद: ।

---

आकाङ्क्षाया एवानुपपत्तेरित्याशङ्क्याह न चेति । व्याप्तीति । क्रियात्वकारकत्वयोरन्योन्याश्रयान्वयव्याप्तिबलेनेत्यर्थ: । अस्तु वस्तुतो व्याप्तिस्तदस्फुरणे तु भवन्ती विशेषजिज्ञासा न शक्तिहेतुकामन्वयसामान्योपस्थितिं विनेत्याशङ्क्याह । अन्यथेति । रसमात्रं रससामान्यं चक्षुर्ग्राह्यं चक्षुर्जन्यलौकिकग्रहविषय: स्वप्रतियोगिक इतरान्वये शक्तिरिति द्वितीयं पक्षं दूषयति । उपसर्जनत्वेनेति । पदार्थानामन्वयावच्छेदकत्वाद्राजपुरुषमानयेत्यत्र राज एवेति भाव: । इष्टापत्तिमनुभवबाधेन परिहरति । न च तथेति । नन्वाकाङ्क्षादिसहकृतस्य शब्दस्यान्वयानुभावकत्वेऽन्वये शक्तिरवर्ज-

नीयैव तद्धानस्य पदशक्यत्वात्। अतीन्द्रियस्यार्थेपि श-क्यत्वस्यानिर्वाहादित्याशङ्क्याह। इति सङ्क्षेप इति। यद्विषयत्वेन ज्ञाता शक्तिर्ज्ञापिका तस्यैव शक्यत्वात्। अन्यथा तव जातिरेव शक्या न व्यक्तिरिति सिद्धान्त-भङ्गप्रसङ्गः। पदेनोभयविषयैकज्ञानजननादिति भावः।

इति सकलसामन्त० अन्वयशक्तिनिषेधप्रकरणम्(१)॥



(१) २४९ पृष्ठात् २५१ पर्यन्तं सिद्धार्थप्रामाण्यवादप्रकरणं, २५२ पृष्ठाद्यान्वयशक्तिनिषेधप्रकरणं द्रष्टव्यम्।

वायुः प्रत्यक्ष इत्येके। तेषामयमाशयः। त्वगिन्द्रियव्यापारानन्तरम् वायुर्वातीति प्रतीतिः सकलजनानुभवसिद्धा। नेयं स्पर्शादिलिङ्गजन्या।

प्रत्यक्षस्पर्शाश्रयस्य वायोः स्वविशेष्यकप्रत्यक्षाजनकत्वं व्यवस्थापयिष्यन् स वायुः स्वविशेष्यकप्रत्यक्षजनको न वेति संशयजननीं विप्रतिपत्तिमाह। वायुरिति। प्रत्यक्षस्पर्शाश्रय इति शेषः। प्रत्यक्षः स्वविशेष्यकप्रत्यक्षजनकः। तेन सामान्यलक्षणादिजप्रत्यक्षविषयत्वस्य स्वस्पर्शप्रत्यक्षजनकत्वस्य वायौ स्पर्श इति स्वविषयप्रत्यक्षजनकत्वस्य च स्वेनाप्यङ्गीकारादेक इत्यभिधानानौचित्यप्रसङ्गः। वायुप्रतीतिः साक्षात्कारिणी लिङ्गाद्यसमवहितसामग्रीजन्यत्वादयं घट इति प्रतीतिवदिति विवक्षितेऽनुमाने वायुप्रतीतिमात्रपक्षत्वे भागासिद्धिः। त्वाचतत्प्रत्यक्षत्वे त्वग्जन्यत्वविशेषणासिद्ध्याश्रयासिद्धिरिति दोषं दृष्ट्वा विवक्षितं पक्षमाह। त्वगिन्द्रियव्यापारानन्तरमिति। त्वक्प्रयोज्येत्यर्थः। न चैतद्विशेषणवत्तया स्वरूपेण वा प्रतीतिरसिद्धेत्याह। सकलजनसिद्धेति। वातीत्यनेन वायुप्रतीतेर्गतिकारकतोपदर्शनं विपक्षबाधकान्तरसूचनाय। वायोरतीन्द्रियत्वे योग्यव्यक्तिकतया तत्कर्मणः प्रत्ययानुपपत्तिः। न च संयोगेन तदनुमानम् अत्रापि पर्यनुयोगतुल्यत्वादिति। आश्रयासिद्धिमुद्धृत्य स्वरूपासिद्धिमुद्धरति

व्याप्त्यादिप्रतिसन्धानविरहेपि जायमानत्वात् । अन्यथा त्वगिन्द्रियव्यापारानन्तरं जायमानघट-प्रतीतेः साक्षात्कारित्वे का प्रत्याशा । तत्रापि स्पर्शादिलिङ्गप्रभवत्वस्य वक्तुं सुकरत्वात् । ननु बहिरिन्द्रियजद्रव्यसाक्षात्कारविषयत्वावच्छे-दकमुद्भूतरूपवत्त्वे सति महत्त्वम् । तच्च वायौ

नेयमिति । वायुविशेष्यकेत्यर्थः । स्पर्शादीत्या-दिपदेन स्पर्शत्वपरिग्रहः । व्याप्तीत्यादिपदेन च वा-युधर्मतापरिग्रहः । तेनायमर्थः । वानकर्तरि स्प-र्शलिङ्गेन वायुस्पर्शे स्पर्शत्वेन वा न वाप्यनुमितिः सम्भवति वानक्रियायास्तत्कर्त्तुश्चातीन्द्रियत्वेन स्प-र्शस्य तद्धर्मत्वाप्रतिसन्धानात् । व्याप्त्यतिसन्धानाच्च सम्भवन्ती वा न वायुविशेष्यिका स्यादिति । नन्वनन्य-थासिद्धिफलबलेन व्याप्त्यादिप्रतिसन्धानन्ततः स्पर्शवि-ष्यकवायवीयत्वानुमितिः ततो मनसा वायुविशेष्यकस्प-र्शप्रतीतिरिति कल्प्यतामत आह । अन्यथेति । सुकर-त्वादिति ! विनिगमकाभावादिति भावः । व्यापकनिवृ-त्त्यनिवृत्तिभ्यां विनिगमकमाशङ्कते । नन्विति । रूपादौ व्यभिचारादाह द्रव्येति । आत्मनि व्यभिचारादाह बहि-रिति । साक्षात्कारो लौकिकः । अवच्छेदकं समनियतम् । अत एव महत्त्वोद्भूतत्वोपादानम् अन्यथा रूपव्याप्यवृत्ति-मात्रेणापि वायोर्बहिरिन्द्रियजद्रव्यप्रत्यक्षव्यतिरेकाभि-

नास्तीति कथं तत्प्रत्यक्षत्वम्। त्वगिन्द्रियव्यापारस्तु स्पर्शादिलिङ्गप्रतीतावेवान्यथासिद्धः। धूमादिप्रतीतौ चक्षुर्वत्। व्याप्त्यादिप्रतिसन्धानविरहेऽपि जायमानत्वमसिद्धमिति। मैवम्। उद्भूतरूपवत्त्वे सति महत्त्वस्य बहिरिन्द्रियजद्रव्यसाक्षात्कारविषयत्वावच्छेदकत्वानुपपत्तेः(१)। उद्भूतस्पर्शवत्त्वे सति महत्त्वस्यैव तत्रावच्छेदकत्वम्। न चैव-

धानसम्भवादनर्थकं तत्स्यात्। अनुद्भूतत्वं जातिरुद्भूतत्वं तदभावः परमाणुरूपेपीति महत्त्वोपादानम्। तन्मात्रमात्मनि रूपविशेषि वायौ नास्तीति घटादावस्तीति तत्प्रत्यक्षत्वसम्भव इति विशेषनिषेधध्वनिः। नन्वनन्यथासिद्धत्वव्यापारानुविधानबलेन वायोः प्रत्यक्षत्वे सिद्धे तत्र व्यभिचारात् व्यापकत्वमेवासिद्धमित्याह। त्वगिति। दृष्टान्तव्याजेन विपक्षे बाधकत्वमाह धूमादीति। अन्यथा वन्ह्यादिप्रतीतेरपि प्रत्यक्षता स्यादिति भावः। नन्वेवं लिङ्गजन्यत्वं परिशेष्येत तत्र चोक्तमेव दूषणं व्याप्त्यादीति। सामान्यविशेषयोरेकप्रयोजकप्रयोज्यत्वासम्भवेन तद्विशेषचाक्षुषताव-च्छेदकस्य तदवच्छेदकत्वायोगान्न तेन विनिगम इत्याह। मैवमिति। तथाभ्युपगमेपि अप्रयोजकोद्भूतस्पर्शतुल्ययोगक्षेमतयोद्भूतरूपस्यावच्छेदकत्वासिद्धि-

(१) वच्छेदकत्वासिद्धेः—३ पु० पा०।

मूष्मादेः स्पार्शनतापत्तिर्दोषाय । इष्टापत्तेः । न प्रभादौ बहिरिन्द्रियजसाक्षात्कारविषयत्वानुपपत्तिः । तत्र तथाभूतसाक्षात्कारविषयत्वासिद्धेः । एवं हि वक्तुं तत्रापि शक्यते । चक्षुर्व्यापारो रूपादिलक्षणलिङ्गप्रतीतावेवान्यथासिद्धः । प्रभादिप्रतीतिस्तु लिङ्गजन्यैवेति । किञ्चैवमेव त्वं किमिति नाङ्गीकुरुषे । द्रव्यसाक्षात्कारविषयत्वमात्रावच्छेदकमेवोद्भूतरूपवत्त्वे सति महत्त्वम् । अलं बहिरिन्द्रियजन्यविशेषणग्रहणेन(१) । एवं सत्यात्मा प्रत्यक्षो न स्यादिति चेत् । मा भूत्सोऽपि ज्ञानादिनैव अनुमीयताम् । तस्मात्स्वी-

रित्याह । उद्भूतस्पर्शेति । इतः पूर्वमुत्पत्तौ वेति शेषः । ऊष्मादीत्यादिपदेन वायूपनीतशीतादिद्रव्यपरिग्रहः । तथाभूतेति । तथा चात्रापीष्टापत्तिरेवोत्तरमिति भावः । कथं तर्हि तत्प्रतीतेश्चक्षुर्व्यापारानुविधाननियम इत्यत आह । एवंहीति । आत्मनि व्यभिचारवारणाय बहिरिन्द्रियजत्वविशेषणवद्वायौ तद्वारणाय तत्स्थाने चाक्षुषत्वमुपादीयताम् प्रमाणबलेन प्रत्यक्षादेरविशेषात् बहिरिन्द्रियजत्वोपाध्यपेक्षया जातित्वेन चाक्षुषत्वस्य लघुत्वाच्चेत्याशयेन प्रतिबन्द्युत्तरमाह । किञ्चैवमेवेति ।

(१) ग्रहेण—४ पु० ।

कुरु वायोः प्रत्यक्षत्वम् परिहर वा आत्मनः प्रत्यक्षत्वमिति दुस्तरा प्रतिबन्दितरङ्गिणी। न च द्रव्यग्रहणयोग्यताव्यापकयोग्यताकानां सङ्ख्यापरिमाणादीनां प्रत्यक्षताप्रसङ्गो बाधक इति वाच्यम्। करपुटधृतवायोः सङ्ख्यापरिमाणादीनां प्रत्यक्षत्वेनेष्टापत्तेः। एवं तत्प्रत्यक्षतासाधकमनुमानमुच्यते। वायुः प्रत्यक्षः महत्त्वे सति उद्भूतस्पर्शवत्त्वात् घटवत्। न चोष्णादिना

ज्ञानादिनैवेति। त्वग्व्यापारस्य स्पर्शग्रह इव मनोव्यापारस्य ज्ञानादिग्रह एवोपक्षयसम्भवादिति भावः। नन्वियमस्ति तरणिः का दुरुत्तरतेत्याशङ्क्याह। न चेति। किं यद्द्रव्यं ग्रहणयोग्यं तद्ग्रहणयोग्यसङ्ख्यादिकमिति नियम उत ग्रहणयोग्यसङ्ख्यादिमज्जातीयमिति विकल्प्याद्ये पृष्ठलग्नवस्त्रादौ व्यभिचारमभिप्रेत्य परिशिष्टे द्वितीये त्वात्मप्रत्यक्षतायामेवेदं बाधकं तज्जातीये क्वचिदपि सङ्ख्यापरिमाणाद्यग्रहणात् तज्जातीये सङ्ख्यादिग्रहणस्येष्टत्वादित्याह। करपुटेति। सङ्गतिं सूचयन्नेव न्यायाभिधानं प्रतिजानीते। एवमिति। वायुप्रतीतेर्लिङ्गाद्यजन्यत्वेनेन्द्रियजन्यत्वपरिशेषे सतीत्यर्थः। अपिर्भिन्नक्रमः। तत्प्रत्यक्षतासाधकमपीति। तत्प्रतीतिपक्षकप्रत्यक्षजातिसाधकाभिधानेपि वायुपक्षकप्रत्यक्षविषय-

तासाधकस्यानुक्तत्वाद्विप्रतिपत्त्यनुरोधाच्च । तदिदानी-मुच्यत इत्यर्थः । वायुरिति । प्रत्यक्षस्पर्शाश्रय इत्यर्थः । तत्र घटाद्यंशे सिद्धसाधनम् पक्षतावच्छेदकैक्ये तस्यादोषत्वात् । तत्रापि तद्दोषतापत्ते तु प्रत्यक्षस्पर्शाश्रयो वायुरित्यर्थः । अतो न परमाण्वंशे बाधासिद्धी । वस्तुनो भट्टनये परमाण्वभावात् अन्यवायोश्च प्रत्यक्षस्पर्शाव्यभिचारादनर्थकस्तद्भिन्नत्यागे च न्यायनये भागे बाधासिद्धी इत्युद्देश्यसिद्धये एव प्रत्यक्षस्पर्शाश्रयत्वोपादानम् । हेतुवृत्तितया प्रतीयमानस्य महत्त्वे सतीत्यस्य पक्षविशेषणत्वेन विवक्षितत्वात् न विवक्षावलेशोऽपि । भट्टमते व्यभिचारावारकत्वेन तत्र तस्य व्यर्थत्वात् । स्वप्रतिज्ञायां मतान्तरानुसारिहेत्वभिधाने च स्वमते व्याप्यत्वासिद्धिप्रसङ्गात् हेत्वन्तराभिधानप्रसङ्गाच्च । क्रमविपर्ययस्य च पुरुषत्वेन वस्तुसिद्ध्यविरोधित्वात् उदाहरणैकदेशप्रदर्शने गत्यभावाच्चेति युक्तः पन्थाः । प्रत्यक्ष इति । स्वविशेष्यकप्रत्यक्षजनक इत्यर्थस्तेन वायोः स्पर्श इति स्वविशेषणकप्रत्यक्षजनकतया सामान्यलक्षणादिजन्यस्वविशेष्यकप्रत्यक्षविषयतया वा न सिद्धसाधनमिति ध्येयम् । उद्भूतेति । परमते उद्भूतत्वजातेरभावेऽपि प्रत्यक्षजनकस्य स्पर्शतरत्वादित्यर्थः । अतो न सामान्यलक्षणादिना प्रत्यक्षस्पर्शाश्रये प्रभादौ व्यभिचारः ।

व्यभिचारः । तत्र साध्यविरहस्यासिद्धेः । न च रूपवत्त्वमुपाधिः रूपादावेव साध्याव्यापकत्वात् । न च द्रव्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकमिदमेवोपाधिः । आत्मनि साध्याव्यापकत्वादिति ।

अत्रोच्यते । बहिरिन्द्रियजद्रव्यसाक्षात्कारविषयता तावदवश्यं किञ्चिन्नियम्या । अन्यथा द्रव्यमात्रस्य साक्षात्कारविषयतापत्तेः । न च

---

चक्षुरादौ व्यभिचारवारणाय स्पर्शेति । असिद्धेरिति । अनिश्चयादित्यर्थः । सन्देहस्य च निश्चितहेतुमत्त्वदूषणादिति भावः । गुणादौ साध्यव्यापकतापरिहारमाशङ्क्य निषेधति न च द्रव्यत्वेति ।

बहिरिन्द्रियजद्रव्यसाक्षात्कारत्वावच्छिन्ने विनिगमकाभावान्महत्त्वासमानाधिकरणयोरुद्भूतरूपस्पर्शयोः कारणतां व्यवस्थापयितुं तच्छेदकतया तत्रानुगतानतिप्रसक्तकारणापेक्षां तावदुपपादयति बहिरिन्द्रियजेति । विपक्षे बाधकमाह । अन्यथेति । तथा बहिरिन्द्रियजद्रव्यविषयः । ननु यथा द्रव्यसाक्षात्कारविषयताया अनुगतानतिप्रसक्तनियामकाभावेपि तद्विधेयमानबहिरिन्द्रियजसाक्षात्कारविषयताव्यावृत्त्यैव नाकाशादौ द्रव्यसाक्षात्कारविषयतासामान्यम् ।

यथा द्रव्यसाक्षात्कारविषयतागुणसाक्षात्कारविषयतादीनां नानुगतं नियामकम् तथाऽत्रापि कचिदुद्भूतरूपवत्त्वे सति महत्त्वम् क्वचिदुद्भूतस्पर्शवत्त्वे सति महत्त्वमेव प्रविषयतीति वाच्यम् । यतोऽविनिगमा(१)दुभयोरपि प्रयोजकत्वे वायोः प्रत्यक्षता न विरुध्यति ।

तथेहाऽपि बहिरिन्द्रियजद्रव्यसाक्षात्कारविषयतापि चाक्षुषत्वादिविशेषनियता तद्विशेषचाक्षुषतास्पार्शनतारूपविशेषद्वयप्रयोजकयोर्महत्त्वसमानाधिकरणयोरुद्भूतरूपस्पर्शयोरन्यतरवृत्त्यैव नातिप्रसक्ता भविष्यति किं तत्र नियतप्रयोजकापेक्षया यस्य व्यावृत्त्या वायोर्निवर्तेतेत्याशङ्क्याह न च यथेति । युक्तन्तत्रापि प्रयोजकसामान्येन भवितुम् आत्मप्रत्यक्षताभ्युपगमे बाधकस्य वक्ष्यमाणत्वेनोद्भूतरूपस्य तत्प्रयोजकतानुपपत्तेः अन्यस्य सम्भवात्तु त्यज्यते इह च समानाधिकरणस्योद्भूतरूपस्यापि सम्भवः । न च स्पर्शेन प्रत्यक्षत्वात्तथाप्युभयोः प्रयोजकत्वापत्तौ सम्मतसिद्धिरित्याह यतोऽविनिगमादिति । निदाघोष्मादावुपनीतशीतोष्णादौ चन्द्रोद्योतनयनगतपित्तादौ च न दोषाभावकालीनसङ्ख्याद्यपेक्ष्यता निरन्तरप्रत्यक्षभावे क्रमेण रू-

(१) विनिगमकविरहादिति—पा० ४ पु० ।

योग्यानेकविशेषगुणवत्त्वं द्रव्यसाक्षात्कारमात्रे प्रयोजकमिति कश्चित्। प्रभायामव्याप्तेः। तच्चिन्त्यम्। किञ्चान्यत्रानुगतनियामकाभावात्तथात्वमत्र पुनरनुगतस्य रूपविशेषवत्त्वे सति महत्त्वस्य द्रव्यचाक्षुषसाक्षात्कारे योग्यतावच्छेदकत्वमवश्यं स्वीकर्तव्यम्। तस्यैव च बहिरिन्द्रियजद्रव्यसाक्षा-

त्स्पर्शयोः प्रत्येकं व्यभिचारादिति भावः। अनयोः प्रयोजकत्वाभिधानं गुडजिह्विकान्यायेन उद्भूतस्पर्शस्य प्रयोजकताया अग्रे निराकरिष्यमाणत्वात्। अतएव प्रभायाः प्रत्यक्षतामभिसन्धाय तत्र व्यभिचारेणैकदेशिमतस्य चिन्त्यत्वमाह। योग्येति। अन्ययोभयप्रयोजकतावादिनोऽपि दोषतौल्यात्। गुणवत्त्वं काले, विशेषगुणवत्त्वमाकाशे, अनेकविशेषगुणवत्त्वमपि परमाणौ व्यभिचारीति सर्वम्। अनेकत्वं च गुणत्वव्याप्यजात्येति नानेकशब्दाश्रयत्वेनाकाशेऽतिप्रसङ्गः। करघृतवायोः सङ्ख्यादीनां प्रत्यक्षत्वमभ्युपेत्य विशेषपदम्। नन्वेवं महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वे सति उद्भूतस्पर्शवत्त्वस्य प्रत्येकं बहिरिन्द्रियजद्रव्यसाक्षात्कारे तद्द्रव्यचाक्षुषत्वे तत्स्पार्शनत्वे च प्रत्येकं प्रयोजकतायां गौरवम्। किञ्चैवं सौरालोकप्रत्यक्षतापत्तौ तद्गतसङ्ख्यादिप्रत्यक्षतापत्तिः। यदि चाश्रयप्रत्यक्षतायामपि

त्कारे योग्यतावच्छेदकस्य सम्भवात् कथं बाधकं विना तत्परित्यागः । यत्पुनरुक्तं त्वगिन्द्रियजद्रव्यसाक्षात्कारे यदेव योग्यतावच्छेदकं क्लृप्तम् । तदेव बहिरिन्द्रियजद्रव्यसाक्षात्कारे उद्भूतस्पर्शवत्त्वे सति महत्त्वमेव नियामकमस्तु । प्रभाप्रतीतिस्तु लिङ्गजन्यैव भविष्यतीति तदसङ्गतम् । तथाहि रूपविशेषात्प्रभाप्रतीतिसम्भवेपि तद्धर्मसंयोगादिप्रतीतिरुन्मीलितनेत्रस्य केन लिङ्गेन स्यात् ।

नच सङ्ख्यादि न प्रत्यक्षन्तदा लाघवादुद्भूतरूपमेव तथास्तु तद्वदेव चन्द्रोद्योतादेः प्रत्यक्षत्वेपि तत्सङ्ख्याद्यप्रत्यक्षतोपपत्तेः । विष्वग्विसारिमरूपसजातीयसंवलनदोषात्तदुपलम्भस्यात्रापि तुल्यत्वात् । नयनद्वयावच्छिन्नपित्तद्रव्ययोश्च सङ्ख्यापरिमाणसंयोगादीनां प्रत्यक्षत्वात् विनिगमनाविरहासिद्धिश्च व्यज्यत इत्यस्वरसादाह किञ्चेति । रूपविशेष उद्भूतरूपम् बाधकं विनेति । वायुप्रत्यक्षतानुपपत्तिश्च न बाधिका अन्योन्याश्रयादिति भावः । न चैकस्य सामान्यविशेषोभयप्रयोजकतानुपपत्तिः द्रव्यत्वस्य संयोगत्वजन्यगुणत्वादिप्रयोजकत्ववदुपपत्तेः । जनकतावच्छेदकाननुगमस्येव जन्यतावच्छेदकाननुगमस्य दोषत्वे बीजाभावाच्चेति वदन्ति । ननु सति सम्भव एवमेतत्स एव तु कुतः प्रयो-

प्रभादीनामप्रत्यक्षत्वे तद्गतधर्मग्रहे न कोऽप्युपायः। न च संयोगादिगोचरतथाभूतसाक्षात्कारनियामकं रूपविशेषवत्त्वे सति महत्त्वमाश्रयस्य द्रव्यगोचरे तु तथाभूतसाक्षात्कारे स्पर्शवत्त्वे सति महत्त्वमेव नियामकमिति वाच्यम्। गौरवप्रसङ्गात्। तस्मादुद्भूतस्पर्शवत्त्वे सति महत्त्वमेव नियामकमिति कथं तद्रहितस्य वायोः प्रत्यक्षस-

---

ऽक्रान्तरतुल्ययोगक्षेमत्वादिति भावः। प्रतीतिरनुमितिः। तद्धर्मेति। स्थिरे भित्त्यादौ चलप्रभासंयोगविभागौ रूपस्य पूर्वोत्तरदेशानुपलम्भोपलम्भाभ्यामनुमातुं शक्येते तथापि तदधिकरणकचलत्पक्षिकाण्डादिसंयोगप्रतीतिर्न लिङ्गेन पूर्वोत्तरदेशयोः प्रभारूपयोरतीन्द्रियत्वेन तद्घटितलिङ्गासिद्धेरिति भावः। चक्षुषैव रूपादिवत्स्यादित्यत आह तद्धर्मसंयोगादीति। प्रत्यक्षवृत्तितयैव संयोगादीनां योग्यत्वादिति भावः। तदेव तर्हि त्यज्यतामत आह न च संयोगादीति। तथाभूतो बहिरिन्द्रियजः। रूपविशेषेति। उद्भूतरूपमहत्त्वाश्रितत्वमित्यर्थः। तथा च प्रभाया अप्रत्यक्षत्वेऽपि तत्संयोगादिप्रत्यक्षं स्यादिति भावः। स्पर्शवत्त्व इति। उद्भूतस्पर्शवत्त्वेत्यर्थः। तथा च प्रभादिकमप्रत्यक्षमेवास्त्विति भावः। गौरवेति। प्रत्यक्षवृत्तित्वाद्यपेक्षया पूर्वोक्तस्य सामान्य-

गुणप्रत्यक्षताप्रयोजकत्वं गुरुत्वादिरित्यर्थः । तथा च प्रभाया अप्रत्यक्षत्वे तद्गतशुक्लत्वादेर्योग्यतानुपपत्तेः । तदुपपादकप्रभायोग्यतोपपादनायोद्भूतरूपवत्त्वमेव तत्र प्रयोजकमास्थेयमिति वायुरप्रत्यक्ष इत्युपसंहरति । तस्मादिति ।

अत्र वदन्ति द्रव्यगुणसाक्षात्कारत्वयोरिव बहिरिन्द्रियजन्यसाक्षात्कारत्वस्य कार्यत्वानवच्छेदकत्वे मानमेव नास्ति विषयीभूय द्रव्येण करणीभूय च बहिरिन्द्रियेण जनिते साक्षात्कारविशेषे तस्य नीलघटत्ववदार्थसमाजसिद्धत्वादिति क्व महत्त्वसमानाधिकरणयोरुद्भूतरूपस्पर्शयोरुद्भूतरूपस्य वा प्रयोजकत्वम् यद्व्यावृत्त्या वायुरप्रत्यक्षः । न च विशेषप्रयोजकयोरेव सामान्यप्रयोजकता युक्ता तद्भेदस्य प्रयोजकभेदाधीनत्वात् । किन्तु चाक्षुषे स्पार्शने च द्रव्यसाक्षात्कारे महत्त्वसमानाधिकरणयोरुद्भूतरूपस्पर्शयोः प्रत्येकं प्रयोजकत्वमिति वायोरचाक्षुषत्वेपि स्पार्शनत्वं दुर्वारमेव । यद्विशेषयोरित्यादिन्यायोऽप्युपजीव्य विशेषकारणताविरोधेनैव द्रव्यग्राहकबहिरिन्द्रियव्यवस्थापकोद्भूतगुणत्वेन उद्भूतत्वस्य मूर्त्तविशेषगुणमात्रवृत्तित्वपक्षे उद्भूतत्वेनैव वा तत्र कारणतां कल्पयतीति न तस्याप्यतिप्रसङ्गः । न च द्वितीयपक्षे वायूपनीतसूक्ष्मचम्पकभागप्रत्यक्षतापत्तिः विशेषसामग्रीसहकृताया एव सामान्यसामग्र्याः कार्यजनकत्वात् । चाक्षुषतास्पार्शनतासामग्र्योश्च तत्राभावात् । न च

म्भावनापि । प्रतिबन्दितरङ्गिणीसन्तरणोपायस्तु प्रत्यभिज्ञानरूपविशेषतरिरेव । तथाहि आत्मनो ज्ञानादिलिङ्गानुमेयत्वे योऽहं चक्षुषा घटमद्राक्षं सोहं त्वचाऽभ्युपस्पृशामीति प्रत्यभिज्ञानम् केन लिङ्गेन स्यात् । न च वायोरतीन्द्रियत्वे य एव वातः प्राचीनः शीत आसीत्स एवेदानीमुष्णो वाती-ति प्रत्यभिज्ञानं केन समाधेयमिति वाच्यम् । प्र-त्यभिज्ञानस्य पूर्वदिक्प्रभवत्वाद्युपाधेरेवान्यथा-सिद्धेः उपाधिग्रहव्यतिरेकेण तथाप्रत्यभिज्ञान-स्यासिद्धेः । तस्मात्तत्तद्दिक्प्रभवत्वमेवैको धर्मः प्र-

वायोः प्रत्यक्षत्वे तत्सामान्यगुणप्रत्यक्षतापत्तिः त-दभिघातात्मनः संयोगस्य शरीरेऽध्यक्षत्वात् । स-मानाभिव्याहारदोषाभावे सङ्ख्यापरिमाणादेरपि क-रपुटधृतवाय्वादौ ग्रहणात् । तत्त्वत्वे तु तदप्रत्य-क्षत्वस्य पृष्ठलग्नवस्त्रादाविवाश्रयप्रत्यक्षताविरोधित्वा-त् । अन्यथा सौरतेजसि बहिरिन्द्रियजद्रव्यप्रत्यक्षता-प्रयोजकभवदभिमतरूपद्वयसमत्वेन प्रत्यक्षत्वे सङ्ख्या-दिप्रत्यक्षतापत्तौ का गतिः । न चोद्भूतरूपमहदाश्रि-तत्वापेक्षया प्रत्यक्षवृत्तित्वस्य लाघवेन सामान्यगुणप्रत्य-क्षत्वप्रयोजकतापि । प्रत्यक्षे लौकिकत्वविशेषणावश्य-कत्वे गौरवात् परेण प्रत्यक्षत्वस्य जातित्वानभ्युपगमा-

त्यभिज्ञानेन विषयीक्रियत इति । ततो धर्मांशे एव प्रत्यभिज्ञानस्य अन्यथासिद्धिः । वायोस्त्वगिन्द्रियाग्राह्यत्वे शीतो वायुरिति त्वगिन्द्रियजो भ्रमः कथं स्यात् । विशेष्ययोग्यतामादायैवेन्द्रियाणां प्रवृत्तिरिति चेत् मैवम् प्रमां प्रति विशेष्ययोग्यतापेक्षणात् भ्रमस्य ज्ञानान्तरोपनीते

---

चचेति चिन्त्यमेतदिति । आत्मप्रतिबन्दीमुद्धरति । प्रतिबन्दीति । केनेति । मदीयाहंप्रत्ययविषयत्वादेर्लिङ्गस्य मदंशाप्रत्यक्षत्वेनासिद्धेरित्यर्थः । ननु सापि प्रत्यभिज्ञानान्तरप्रतिबन्दीपरपारिप्लवतया न सन्तरणोपाय इत्यत आह न च वायोरिति । वाय्वैक्यप्रत्यभिज्ञानमसिद्धमित्याह । प्रत्यभिज्ञानस्येति । न च वक्तृदेहावच्छिन्नत्वोपाधिविषयत्वं तस्यापीति वाच्यम् आत्मैक्यस्योभयसिद्धत्वादिति भावः । तदग्रहेपि जायमानत्वान्नोपाधेरैक्यं प्रत्यभिज्ञानविषय इत्यत आह उपाधीति । वायोरप्रत्यक्षत्वे बाधकं शङ्कते । वायोरिति । त्वगिन्द्रियज इति । वायुलिङ्गस्योष्णस्पर्शादेरग्रहादनुमित्ययोगात् गृह्यमाणशीताश्रयोपनयानुमिते च वायौ विशेषदर्शने मानसशीतभेदानुपपत्तेश्चेति भावः । इदानीं घट इत्ययोग्यकालविशेषणकमिवायोग्यवायुविशेष्यकमपि ज्ञानं सहकारिसामर्थ्यात् त्वचा जन्यतां को दोष इत्यत आह

विशेष्ये दर्शनात् । मानसोऽयं भ्रमः स्पर्शा-विशेष्यक इत्येके । स्पर्शविशेष्यक इत्यपरे । एवं बाधात् प्रत्यक्षतासाधकमनुमानमपि नाव-तरति वायुरतीन्द्रियः आत्मभिन्नत्वे सति निरू-पद्रव्यत्वादाकाशवदिति । यदि वायुः प्रत्य-

---

विशेष्येति । नियमासिद्ध्या दूषयति । मैवमिति । सा-मान्येऽसति बाधके याथार्थ्यविशेषणप्रक्षेपे गौरवमत आह भ्रमस्येति । ज्ञानान्तरोपनीतातीन्द्रियदिग्विशेष्य-कस्य प्रसिद्धचाक्षुषभावस्य दिङ्मोहस्यातीतविद्युद्विशे-ष्यकस्येयं विद्युत्कामिनी वेति संशयस्य च दर्शनादि-त्यर्थः । दिङ्मोहस्य चाक्षुषत्वे तद्दिगवच्छिन्नालोकवि-शेष्यकत्वाद्दिग्विशेष्यकत्वे चाक्षुषत्वासिद्धेर्वा संशय-स्याप्युक्तस्य मानसत्वादव्यभिचारात्प्रत्यक्षमात्र एव यो-ग्यविशेष्यकत्वं तन्त्रमिति प्रमात्वान्तर्गतयाथार्थ्यवैयर्थ्य-मित्यस्वरसादाह मानसोयमिति । सुखदुःखविशेषोन्नी-ताभिघातेनानुमिते स्पर्शवद्वेगवद्द्रव्यविशेषे त्वगनुद्भू-तस्पर्शारोपो मनसेत्यर्थः । एवं च शीतद्रव्योपनायक-त्वेन वाय्वनुमितेरङ्गीकाराद्विशेषदर्शनभावात् गङ्गे-शप्रत्यवस्थानमस्थान इति मन्तव्यम् । स्थापनायां दोषं पर्यवसाययन्नुपसंहरति एवमिति । स्वपक्षे स्था-पनामाह वायुरतीन्द्रिय इति । महान्वायुर्न स्वविशे-ष्यकप्रत्यक्षजनक इत्यर्थः । केवलान्वयव्यतिरेकिणमसह-

क्षतो पृथिव्यादिभिन्नतया सिद्ध्येत्(१) तद्वा तद्भिन्नतया न सिद्ध्येदेवेति चेत् । न वायोः प्रत्यक्षत्वेपीतरभेदांशे प्रत्यक्षस्योदासीनत्वादिति सङ्क्षेपः ।

इतिवायुप्रत्यक्षतावादः ।

मानः शङ्कते वायुरिति । केवलव्यतिरेकिणोऽनुमानत्वाभावादिति भावः । केवलव्यतिरेकिणोनुमानत्वे विप्रतिपत्तावपि मानत्वमुभयसंमतमेवेत्याशयेनाह वायोः प्रत्यक्षत्वेपीति । अन्यथा प्रत्यक्षे तैलादौ पृथिवीत्वादिसंशयाभावप्रसङ्गादिति भावः ॥छ॥

इति श्रीसकलसामन्तं ? वायुप्रत्यक्षता-
निरासप्रकरणम् ॥छ॥

(१) वायुः पृथिव्यादिभिन्नतया यदि प्रत्यक्षतो न सिद्ध्येत् पा ३ पु० ।

---o---

निर्विकल्पके तावद्विप्रतिपत्तिः ज्ञानत्वं निःप्रकारकवृत्ति न वा। यद्वा ज्ञानत्वं निःप्रकारकत्वसमानाधिकरणम् न वा । एवं सति निर्विकल्पके प्रमाणमाहुः । जागराद्यसविकल्पकं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञान-

---

ज्ञानत्वस्य सविकल्पकभिन्नवृत्तित्वं व्यवस्थापयितुं विचारानुकूलसंशयजननीं विप्रतिपत्तिं प्रतिजानीते निर्विकल्पक इति । ज्ञानत्वस्य सप्रकारकभिन्नवृत्तित्व इत्यर्थः । निःप्रकारकत्वेति । उभयत्र निःप्रकारकत्वं सप्रकारकभिन्नत्वम् अन्यथा सविकल्पकस्यापि प्रकारांशे निःप्रकारकत्वेन ज्ञानत्वस्य तद्वृत्तितया तत्समानाधिकरणतया च सिद्धसाधनतापातात् । पूर्वपक्षमवतारयितुं विषयमाह एवं सतीति । एवं वादिविप्रतिपत्त्या संशये सतीत्यर्थः । निर्विकल्पकत्वे ज्ञानत्वस्य सविकल्पकान्यवृत्तित्वे । आहुरिति । न्यायविद इति शेषः । जागरेति । स्वापाद्यसविकल्पके जागरान्त्यज्ञानरूपविशेषणज्ञानजन्यतयांशतः सिद्धसाधनभयादाह जागरेति । धाराबाहिषूत्तरेषु जागरसविकल्पकेषु तद्वचादाहाद्येति । स्वमतेंऽशे बाधासिद्धिभयादाह जन्येति । बाधासिद्धिभयादाह सविकल्पकमिति । ऐशज्ञानजन्यतया सिद्धसाधनतानिवृत्त्यै साध्ये जन्येति । जन्ये विशेषणज्ञानत्वेनैव कारणतया जन्यज्ञानत्वेन व्याप्त्य-

त्वात् दण्डीपुरुषज्ञानवदिति । अत्र पक्षधर्मताबलादप्रकारकं विशेषणविषयकं जागराद्यसविकल्पकज्ञाना(१)व्यवहितपूर्वसमयवृत्तिज्ञानम् सिद्ध्यति । सप्रकारकत्वे विशेषणान्यविषयत्वे च

भावाद्व्याप्यत्वासिद्धिप्रसङ्गस्तद्वारणाय विशेषणेति । हेतावीशज्ञाने व्यभिचारादाह जन्येति । स्वमते निर्विकल्पकव्यभिचारादाह विशिष्टेति । यद्यपि तदसिद्धिदशायां न तत्रैव व्यभिचारसम्भवस्तथापि अनवस्थया क्वचित्सामान्यतो व्यभिचारज्ञानसम्भवेन व्याप्तिग्रह इति तदुपयोगितया सार्थक्यं विशिष्टपदस्येति भावः । न चाभावत्वादेरपूर्व्वोपस्थितस्यैव विशिष्टबुद्धेरभ्युपगमात्तत्र व्यभिचार इति वाच्यम् तत्रापि प्रतियोग्यादिविशेषणज्ञानसत्त्वात् । न चान्यविशेषणज्ञानादन्यविशिष्टबुद्धावतिप्रसङ्गः तत्स्थले विशिष्य कारणताया अपि कल्पनादिह च तत्कल्पने मानाभावादिति । जन्यदण्डिज्ञानं दृष्टान्तः तेन न साध्यसाधनवैकल्यम् । नन्वेवमपि व्यापककोटौ निःप्रकारत्वानुपादानात्कुतस्तत्सिद्धिरित्यत आहात्रेति । ननु पक्षधर्मता साध्यस्य पक्षसम्बन्धमात्रे साक्षिणी न तु तदवान्तरवैलक्षण्येपीत्यत आह सप्रकारत्व इति । यदभावे पक्षे व्या-

(१) जागराद्यज्ञाना—पा० १ पु० ।

पक्षधर्मतानिरोधात्। सप्रकारकत्वे हि तदेव जागराद्यसविकल्पकम् स्यात् न तु पक्षीकृतं ज्ञानमिति पक्षधर्मतावच्छेदकधर्मविरोध इति। ननु सुषुप्तिप्राक्कालीनसविकल्पकेनैव विशेषणाविषयकेन संस्कारद्वारा सिद्धसाधनम् संस्कारद्वारापि विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वं दृष्टमेव यथा व्यवहितस्यानुभवस्य स्मरणं प्रति। न च जागराद्यनुभवस्य पक्षत्वम्। अनुभवस्य चाव्यवहितपूर्वसमयवृत्तिविशेषणज्ञानजन्यत्वनियमान्न सिद्धसाधनमिति वाच्यम्। अप्रयोजकत्वात्।

---

पकप्रतीत्यपर्यवसानं तत्पक्षधर्मतया भासत इत्यस्यैव सम्बन्धभाने बीजत्वादिति भावः। विशेषणान्येति। विशेषणाविषयकत्व इत्यर्थः। विरोधं विशदयति सप्रकारत्वेहीति। अवच्छेदको धर्मः आद्यसविकल्पकत्वम् तथाच निःप्रकारकत्वमनादाय पक्षतावच्छेदकावच्छेदेन व्यापकप्रतीतिरेव न पर्यवस्येदाश्रयासिद्धिप्रसङ्गादिति धर्मिग्राहकमानसिद्धमस्य निःप्रकारकत्वमिति भावः। एवमनुमानमुपपाद्य तत्र पूर्वपक्षमवतारयति। नन्विति। तथा चाश्रयासिद्धिरिति भावः। इतः पूर्वमुपेक्षणीयत्वात् चेति पूर्वपक्षसङ्क्षेप इत्यन्तेनान्वयः। संस्कारद्वारा

अनुभवत्वं वा जागराद्यज्ञानस्यासिद्धमेव । स्मरणमेव जागराद्यज्ञानम् । तच्च व्यवहितेनापि विशेषणज्ञानेन जन्यत इति न(१) निर्विकल्पककल्पनम् । न च प्रत्यग्रोत्पन्नविशेषणविशिष्ट-

विशेषणज्ञानजनकत्वं न दृष्टमिति गूढाभिसन्धेः शङ्काम् निरस्यति संस्कारद्वारापीति । माभूत्तस्यापि संस्कारद्वारकत्वमिति तटस्थशङ्कायामाह व्यवहितेति । वादिनोऽभिसन्धिमुद्घाट्य दूषयति नचेति । नियमादिति । प्रत्यभिज्ञानस्याप्यव्यवहितस्मृतिरेव कारणमिति भावः । अप्रयोजकत्वादिति । व्याप्यत्वासिद्धेरित्यर्थः । अव्यवधानांशस्य गौरवेण कारणतानवच्छेदकत्वादिति-भावः । नन्वेवं कदाचित् केवलदण्डे ज्ञाते क्रमेण तद्वत्ति पुरुषे दण्डे चेन्द्रियसंनिकृष्टे तदा दडण्ज्ञानं विनाप्ययं दण्डीति बुद्ध्यापत्तिः । भ्रमहेतुतया चारोप्यस्मरणासिद्धिप्रसङ्गः । संस्कारद्वारेण कादाचित्करजतज्ञानेनैव तज्जननसम्भवादित्यनुभवे अव्यवहितविशेषणज्ञानमेव हेतुरिति नाप्रयोजकत्वमित्यस्वरसादाह । अनुभवत्वं चेति । ननु प्रत्यग्रोत्पन्नरूपादिविशेषणविशिष्टज्ञानं पक्षीकृत्य निर्विकल्पकत्वं साध्यताम् प्राक्तद्विशेषणज्ञानाभावेन सिद्धसाधनानवकाशात् । ततोन्यत्रापि तद्दृ-

(१) इति किमिति निर्विकल्पककल्पनम्—पा० २ पु० ।

घटसविकल्पकं पक्षीकृत्य निर्विकल्पकसाधनमिति युक्तम्। प्रत्यग्रोत्पन्नमपि विशेषणं रूपादिकमेव। तदपि च रूपत्वादिना पूर्वं सामान्यतोज्ञानमेव। ननु व्यवहारस्तावदयं सकलज-

ष्टान्तेनानुमानान्तरेण साध्यसिद्धेरप्रत्यूहत्वादित्याशङ्क्याह नच प्रत्यग्रेति। अस्तु तावदस्माकं विशेषणज्ञानकारणतानङ्गीकारः सिद्धान्तसारः भवत्कल्पितया सामान्यलक्षणयैव भक्षितमेतदित्याह प्रत्यग्रेति। संमुग्धत्व विशिष्य व्यावर्त्तकधर्माविषयत्वं मुख्यार्थे बाधकाभावात् न सविकल्पकविशेषपरत्वमत आह निर्विकल्पकस्येति। अस्तु तर्ह्यनुमानान्तरमत आह नच ज्ञानत्वमित्यादि। निःप्रकारकत्वं सप्रकारकभिन्नत्वम् तेन घटादिज्ञानेष्वंशावच्छेदेन सता निःप्रकारकत्वेन सामानाधिकरण्यमादाय न सिद्धसाधनम्। अन्योन्याभावस्य व्याप्यवृतित्त्वेनांशे सप्रकारकस्य तद्भेदायोगात्। हेतौ सविकल्पकत्वे व्यभिचारवारणाय सकलेति। प्रमेयत्वादौ प्रसिद्धमपि सकलवृत्तित्वमप्रसिद्धमिति ज्ञानपदम्। नचासिद्धिवारकतया वैयर्थ्यम्। परमते सविकल्पकत्वे व्यभिचारप्रसङ्गेन वृत्तिपदस्य समवायपरस्यावश्यकत्वे सकलसमवेतत्वस्याप्रसिद्धेरपि प्रसङ्गान्निराकरणेन व्याप्तिग्रहेप्युपयोगित्वात्। सत्तावदिति। स्वमतेनायं दृष्टान्तः परनये तु सत्ताजात्यनङ्गीकारेपि गुणत्वादिर्दृष्टान्तः।

नसाधारणो यन्मम तत्र सविकल्पकं न वृत्तम् किन्तु निर्विकल्पकमेव। तथा चैतद्व्यवहारानुरोधेनावश्यं स्वीकरणीयमिति। मैवम्। मम तत्र निर्विकल्पकं वृत्तमितिव्यवहारस्य संमुग्धसविकल्पकगोचरत्वात्। निर्विकल्पकस्यातीन्द्रियत्वाभ्युपगमाच्च। न च ज्ञानत्वं निःप्रकारकत्वसमानाधिकरणम् सकलज्ञानवृत्तित्वात् सत्तावदिति वाच्यम् । ज्ञानातिरिक्तवृत्तित्वस्योपाधित्वात्। अप्रयोजकत्वाच्च। न च चक्षुः चाक्षुपसविकल्पकातिरिक्तज्ञानजनकं ज्ञानजनकत्वात् घ्राणवदिति निर्विकल्पकसिद्धिरिति वाच्यम् । अतीन्द्रियतेजोभिन्नत्वस्यो-

---

ननु हेतोः साध्यव्याप्यत्वेऽवधृते साध्यव्याप्याव्यापकत्वेन साध्यव्यापकतानुमानान्नायमुपाधिरत आह । अप्रयोजकत्वादिति । व्याप्तिग्राहकतर्कशून्यत्वादित्यर्थः । चक्षुः चाक्षुषसविकल्पकेति । अप्रसिद्धिपरिहाराय साध्ये चाक्षुषेति । बाधपरिहाराय सविकल्पकेति । सिद्धसाधनतानिवृत्त्यै ज्ञानेति । जनकत्वमात्रं परमाण्वादौ व्यभिचारीति ज्ञानेति । वर्तमानार्थकमपि योगिज्ञानं विषयाजन्यमित्याशयः । अतीन्द्रियतेजोभिन्नत्वस्येति । अतीन्द्रियभिन्नत्वं घ्राणादौ साध्याव्यापकमिति तेजःपदम् । तन्मात्र-

पाधित्वात्। एवंविधानुमानानामपि अतिप्रसञ्जकतयोपेक्षणीयत्वाच्चेति पूर्वपक्षसङ्क्षेपः ॥

अत्रोच्यते । जागराद्यज्ञानं स्मरणरूपमनुभवरूपमेवाऽस्तु । उभयथापि निर्विकल्पक-

भिन्नत्वञ्च स्पार्शनस्वसाक्षात्कारजनकालोकादावित्यतीन्द्रियपदम्। ननु संयुक्तसमवायशरीरप्रविष्टतया स्वस्य स्पर्शसाक्षात्कारजनकेऽतीन्द्रिये ऊष्मादितेजसि साध्याव्यापकत्वम् । न चोद्भूतविशेषगुणानाश्रयत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वे तात्पर्यम् तथात्वे उपाधावतीन्द्रियपदवैयर्थ्यादिति चेत् न ऊष्मणोपि परमते प्रत्यक्षत्वेन तत्रोपाधिसद्भावात् । किञ्चैवं सविकल्पकपदानन्तरं निर्विकल्पकपदप्रक्षेपे तदुभयभिन्नेपि ज्ञानत्वं सिद्ध्येदित्याह । एवंविधानुमानानामिति । ननु जन्यविशिष्टज्ञानमात्रे जन्यविशेषणज्ञानमात्रस्यान्वयव्यतिरेकाभ्यां कारणतावधारणादकारणकार्यप्रसङ्ग एवात्र विपक्षबाधकस्तर्क इति न निर्विकल्पकसाधनस्योपेक्षणीयतुल्यतेत्याहेति सङ्क्षेप इति । विशेषणविशेष्योभयभानसामग्रीत एव विशिष्टज्ञानसम्भवे विशेष्यज्ञानस्येव विशेषणज्ञानस्यापि कारणत्वे मानाभावादिति भावः ।

जागरेत्यादि। पूर्वानुमानमेव सिद्धान्तयितुमसिद्धिनिरासेनोपस्कुरुते जागरेति । तुष्यतु दुर्जन इति न्याये-

सिद्धिः । तथा हि स्मरणपक्षे तज्जनकसंस्कारोद्बोधः सहकारी । स च ज्ञानरूप एवेति जागराद्यस्मरणाव्यवहितप्राक्कालीनं निर्विकल्पकमा-

नाह स्मरणरूपमिति । अत एव वस्तुनस्तदेन्द्रियसन्निकर्षादिसमवधानेऽनुभवसामग्र्या बलवत्त्वान्न स्मृतिसम्भवः । तदसमवधाने तु संस्कारोद्बोधकज्ञानतद्धेत्वभावान्न सुतरामिति क्व निर्विकल्पकत्वेऽक्त्यनुभवाभिमतं पक्षमवधारयन्नाह अनुभवरूपमेवेति । स्मरणपक्षे तत्सिद्धिमुपपादयति । स्मरणपक्ष इति । उद्बुद्ध एव संस्कारः स्मृतिजनक इत्यन्वयव्यतिरेकाभ्यां सिद्धवत्कृत्योद्बोधपदार्थमाह उद्बोधः सहकारीति । सहकारिसमवधानमेव संस्कारस्योद्बोधो न तु बीजस्योच्छूनतावद्विकारान्तरमित्यर्थः । नन्वेवं न निर्विकल्पकसिद्धिः ज्ञानान्यस्यादृष्टादिसहकारिणोऽप्युद्बोधकत्वसम्भवादित्यत आह स चेति । जीवनादृष्टेतरादृष्टस्येतरनिरपेक्षस्य स्मृतिजनने संस्कारसहकारित्वे सदृशदर्शनादिकारणोच्छेदप्रसङ्गात् । जीवनादृष्टस्य च गवादिस्मृत्यहेतुत्वात् । न च सत्यपि ज्ञाने संस्कारानुद्बोधात्तदपि नोद्बोधकमिति वाच्यम् । विषयान्तरजिज्ञासादिप्रतिबन्धादपि तदुपपत्तेः । अन्यथा तृतीयलिङ्गपरामर्शादेरप्यनुमितिकारणताया दुरुपपादकत्वप्रसङ्गात् । यत्तु यदनन्तरं फलं दृश्यते तस्यानुगतस्यैवोद्बोधकत्वमवश्यं वाच्यम् । तथाच

पाधित्वात्। एवंविधानुमानानामपि अतिप्रसञ्जकतयोपेक्षणीयत्वाच्चेति पूर्वपक्षसङ्क्षेपः ॥

अत्रोच्यते । जागराद्यज्ञानं स्मरणरूपमनुभवरूपमेवाऽस्तु । उभयथापि निर्विकल्पक-

---

भिन्नत्वञ्च स्पार्शनस्वसाक्षात्कारजनकालोकादावित्यतीन्द्रियपदम्। ननु संयुक्तसमवायशरीरप्रविष्टतया स्वस्पर्शसाक्षात्कारजनकेऽतीन्द्रिये ऊष्मादितेजसि साध्याव्यापकत्वम् । न चोद्भूतविशेषगुणानाश्रयत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वे तात्पर्यम् तथात्वे उपाधावतीन्द्रियपदवैयर्थ्यादिति चेत् न ऊष्मणोपि परमते प्रत्यक्षत्वेन तत्रोपाधिसद्भावात् । किञ्चैवं सविकल्पकपदानन्तरं निर्विकल्पकपदप्रक्षेपे तदुभयभिन्नेपि ज्ञानत्वं सिद्ध्येदित्याह ।एवंविधानुमानानामिति । ननु जन्यविशिष्टज्ञानमात्रे जन्यविशेषणज्ञानमात्रस्यान्वयव्यतिरेकाभ्यां कारणतावधारणादकारणकार्यप्रसङ्ग एवात्र विपक्षबाधकस्तर्क इति न निर्विकल्पकसाधनस्योपेक्षणीयतुल्यतेत्याशङ्केति सङ्क्षेप इति । विशेषणविशेष्योभयभानसामग्रीत एव विशिष्टज्ञानसम्भवे विशेष्यज्ञानस्येव विशेषणज्ञानस्यापि कारणत्वे मानाभावादिति भावः ।

जागरेत्यादि । पूर्वानुमानमेव सिद्धान्तयितुमसिद्धिनिरासेनोपस्कुरुते जागरेति । तुष्यतु दुर्जन इति न्याये-

सिद्धिः । तथा हि स्मरणपक्षे तज्जनकसंस्कारोद्बोधः सहकारी । स च ज्ञानरूप एवेति जागराद्यस्मरणाद्व्यवहितप्राक्कालीनं निर्विकल्पकमा-

नाह स्मरणरूपमिति । अत एव वस्तुनस्तदेन्द्रियसन्निकर्षादिसमवधानेऽनुभवसामग्र्या बलवत्त्वान्न स्मृतिसम्भवः । तदसमवधाने तु संस्कारोद्बोधकज्ञानतद्धेत्वभावान्न सुतरामिति क्व निर्विकल्पकशङ्केत्यनुभवाभिमतं पक्षमवधारयन्नाह अनुभवरूपमेवेति । स्मरणपक्षे तत्सिद्धिमुपपादयति । स्मरणपक्ष इति । उद्बुद्ध एव संस्कारः स्मृतिजनक इत्यन्वयव्यतिरेकाभ्यां सिद्धवत्कृत्योद्बोधपदार्थमाह उद्बोधः सहकारीति । सहकारिसमवधानमेव संस्कारस्योद्बोधो न तु बीजस्योच्छूनतावद्विकारान्तरमित्यर्थः । नन्वेवं न निर्विकल्पकसिद्धिः ज्ञानान्यस्याद्दृष्टादिसहकारिणोऽप्युद्बोधकत्वसम्भवादित्यत आह स चेति । जीवनादृष्टेतरादृष्टस्येतरनिरपेक्षस्य स्मृतिजनने संस्कारसहकारित्वे सदृशदर्शनादिकारणोच्छेदप्रसङ्गात् । जीवनादृष्टस्य च गवादिस्मृत्यहेतुत्वात् । न च सत्यपि ज्ञाने संस्कारानुद्बोधात्तदपि नोद्बोधकमिति वाच्यम् । विषयान्तरजिज्ञासादिप्रतिबन्धादपि तदुपपत्तेः । अन्यथा तृतीयलिङ्गपरामर्शादेरप्यनुमिति कारणताया दुरुपपादकत्वप्रसङ्गात् । यत्तु यदनन्तरं फलं दृश्यते तस्यानानुगतस्यैवोद्बोधकत्वमवश्यं वाच्यम् । तथाच

यातम् । अनुभवपक्षे सुषुप्तिप्राक्कालीनविशेषणज्ञानस्य संस्कारद्वारा जनकत्वेऽपि संस्कारोद्बोधरूपत्वेन निर्विकल्पकत्वमवश्यं वाच्यम् । तथा च लाघवात्तदेव विशेषणविषयतया विशिष्टज्ञानजनकमङ्गीक्रियताम् । अलं संस्कारद्वाराऽव्यव-

---

जागरणानन्तरसंस्कारोद्बोधात्तदेव कारणमस्तु क्लृप्तत्वात्किं ज्ञानेन । अत एव सदृशादृष्टचिन्ताद्या इति प्रणिधानादिसूत्रं च संस्कारस्यानियतोद्बोधकताप्रतिपादकं सङ्गच्छत इति । तन्न । जागरपदेन बहिरिन्द्रियसन्निकर्षाभिधाने स्वाप्नभ्रमहेतुकस्मृत्यभावप्रसङ्गात् । जागरेप्यनुमित्याद्युद्बोधितसंस्कारात् स्मृत्यभावप्रसङ्गाच्च । ज्ञानकारणमात्राभिधानेपि तेषां प्रत्येकं कारणत्वेऽननुगमात् । ज्ञानकारणत्वेनानुगमे लाघवेन ज्ञानत्वस्यैव कारणतावच्छेदकतौचित्यात् । न च दण्डज्ञानादृगाद्यनुभवकाले तत्स्मृतिप्रसङ्गः अनुभवसामग्र्या बलवत्त्वात् । तदभावे चेष्टापत्तेः । प्रणिधानादिसूत्रेऽपि लिङ्गलक्षणत्वादृश्यादीनामननुगतानां ज्ञानत्वानुगतीकृतसंस्कारोद्बोधकज्ञानविषयतैव विवक्षिता न तु तेषामननुगतानां हेतुता । न च यत्किञ्चिज्ज्ञानाद्यत्किञ्चित्स्मृतिप्रसङ्गः । यत्सामान्ययोरिति न्यायेन विशेषकारणाभ्युपगमात् इति भावः । जनकत्वेऽपीति । वस्तुतस्तदेव नास्ति जन्य-

हितज्ञानजनकत्वकल्पनया । किञ्च विशिष्टानुभवत्वम् अव्यवहितविशेषणज्ञानजन्यतानियतमिति व्याप्तिरपि रक्षिता स्यात् । यद्वा प्रत्यग्रोत्पन्नविशेषणविषयकसविकल्पकं पक्षीकृत्य निर्विकल्पकसाधनं युक्तम् । न च सामान्यलक्षणया प्रत्यासत्त्या रूपादिसविकल्पकेनैव सिद्धसाधनमिति वाच्यम् । अनेन हि रूपवान् घट इति प्रतीतिः स्यात् । न त्वेतद्रूपवानिति । सविकल्पकरूपं हि विशेषणज्ञानं येन रूपेण विशेषणमुल्लिखति तेनैव रूपेण विशिष्टज्ञाने विशेषणस्य भानमिति

विशिष्टानुभावे जन्यविशेषणज्ञानत्वेनैव जनकता । न च तस्य संस्कारं जनयित्वैव जनकता येन तद्द्वारकता स्यात् अव्यवहितविशेषणज्ञानस्थले व्यभिचारादत एव प्रत्यभिज्ञानस्थलेऽन्तरा स्मृतिकल्पनमित्यपिशब्दं प्रयुञ्जानस्याशयः । लाघवादिति । अव्यवधानलाघवादावश्यकत्वाद्वा । ननु सुषुप्तिप्राक्कालीनविशेषणज्ञानकारणतानिर्वाहकतया सिध्यन्निर्विकल्पकं न तस्य कारणतां विन्दति । अन्यथा आवश्यकत्वादिनाऽपूर्वमेव स्वर्गकारणं स्यान्न याग इत्यस्वरसादपिशब्दसूचितं परिहारान्तरमाह किञ्चेति । अव्यवहितविशेषणज्ञानत्वेन कारणतायां अभावेऽपि पूर्वोक्तबाधकसहकृतेन विशेषणज्ञानकारण-

नियमः। अन्यथा प्रमेयत्वेन रूपज्ञानात् रूपवान् घट इति प्रतीतिप्रसङ्गात्। न च निर्विकल्पकेप्येवं प्रसङ्ग इति वाच्यम्। तस्य तदधर्मेव कल्पनायाम् धर्मिग्राहकप्रमाणविरोधात्। एवं सामग्रीकल्पनालाघवस्थानविशेषेऽपि(१) निर्विकल्पकमूहनीयमिति न किञ्चिदनुपपन्नम्। ननु

तद्ग्राहकप्रमाणेन सिद्धा या व्याप्तिः सापि रक्षिता स्यादन्यथा तन्मूलभूतपूर्वोक्तबाधकावरोध इति भावः। एकदेशिनां निर्विकल्पकसाधनप्रकारमाह यद्वेति। नन्वत्र सिद्धसाधनमुक्तमेवेत्यत आह। न चेति। नन्वेतद्रूपमपि रूपत्वेन ज्ञानमेवेत्यत आह सविकल्पकरूपं हीत्यादि। ननु निर्विकल्पकान्तरा तत्स्यात्तत्र रूपत्वस्याप्यप्रकारत्वादित्याशङ्कानिरासाय सविकल्पकपदम्। येन रूपेणेति। यत्प्रकारकं सदित्यर्थः। इष्टापत्तिं निराकरोति तेनैवेति। तेनैवेत्येवकारेण वस्तुत एतद्रूपस्य रूपत्वप्रकारकात् ज्ञानाद्रूपवानित्येव धीः स्यान्न तु यथास्ति तथा एतद्रूपत्वेन तज्ज्ञानादिति भावः। अप्रयोजकतां निरस्यति अन्यथेति। ननु सविकल्पकविशेषणे गौरवाद्वैयर्थ्याच्च विशेषणज्ञानमात्रे स नियम इति न निर्विकल्पकादपि तद्धीसिद्धिः तज्जनकस्य वा तत्प्र-

(१) स्थानान्तरेपीति पा २ पु०।

तथापि समवायाभावयोः कथं सविकल्पकैकवेद्यतानियमः । तथाहि रूपसमवायवान् घट इत्यादौ सविकल्पके समवायस्यापि विशेषणत्वात् । अघटं भूतलमित्यादौ अभावस्यापि विशेषणत्वात् । विशेषणज्ञानत्वेन च निर्विकल्पककल्पनात् । एवं विशेषणत्वाविशेषेऽपि रूपत्वादिकं निर्विकल्पकविषयो न तु समवायाभावावित्यत्र किं नियामकम् वैपरीत्यस्यापि सुवचत्वादित्यत आह ।

कारकतापत्तिरित्याशङ्क्याह । न च निर्विकल्पकेपीति । अयं प्रसङ्गः इतिधीर्न स्यादित्येवंरूपः । तदर्थमेव प्रत्यग्रोत्पन्नैतद्रूपादिविशिष्टज्ञानार्थमेव । धर्मिग्राहकेति । धर्मिनिर्विकल्पकं तद्ग्राहकं मानं प्रत्यग्रोत्पन्नरूपादिविशिष्टज्ञानपक्षकमनुमानम् तद्विरोधात् । अनवस्थानियन्त्रितेन तेन निःप्रकारकस्यैतज्ज्ञानजनकस्य सिद्धावुपजीव्यबाधात् । अनवस्थया सामान्यतो व्यभिचारज्ञाने तद्वारकमेतद्विशेषणमिति वैयर्थ्यं गौरवञ्च प्रामाणिकमिति भावः । अस्तु यत्रानुपपत्तिस्तत्र निर्विकल्पकसिद्धिरन्यत्र तु कुत इत्याशङ्क्याह । एवमिति । न हि सामग्री अनुपपत्तिं प्रतीक्षते उपेक्षाज्ञानदर्शनादिति भावः । स्थलान्तर इति । यत्र न विशिष्टसामग्रीनैयत्यन्तत्रेत्यर्थः । इति न किञ्चिदनुपपन्न-

षत्वात्। न च रूपसमवायवान् घट इत्यत्र सम-
वायो विशेषणम् समवाये च रूपम् तथा चारूपमे-

मिति। इति निर्विकल्पकसिद्धौ चक्षुः चाक्षुषसविक-ल्पकातिरिक्तज्ञानजनकम् ज्ञानजनकत्वादित्यादिक-मपि न किञ्चिदनुपपन्नम् पक्ष एवोपाधेः साध्या-व्यापकत्वादित्यर्थः। प्रतिबन्धाश्रयेनैकदेशी शङ्कते ननु तथापीति। वस्तुस्वभाव एव विनिगमक इत्यत आह। वैपरीत्येति तत्स्वभावस्यैवानिश्चयादिति भावः। न विशेषणमित्येव निर्विकल्पकविषयः। सवि-कल्पकसामग्रीकाले तद्रूपप्रतिबन्धकाभावघटितसा-मग्र्यसम्भवे तदनुपपत्तेः। न चेह तेन विनाऽनुपप-त्तिरपि यया बलवत्या तदभावस्य सामग्रीघटकताम-नादृत्य विशेषणमित्येव निर्विकल्पकविषयताङ्गीक्रिय-तेत्याशङ्क्याह न चेति। न च रूपसमवायौ समुच्चित्य घटविशिष्टो येन रूपांश इव समवायांऽशेपि विशेष-णान्तराभानात्सविकल्पकसामग्र्यभावोऽप्युपपद्येत इ-त्याह। समवायो विशेषणं समवाये च रूपमिति। रूप-मेवेति। तदंश एव विशिष्टज्ञानसामग्र्यभावेन निर्वि-कल्पकसामग्रीसम्भवादित्यर्थः। अत्र समवायस्य निर्वि-कल्पकनिषेधमात्रे तात्पर्यम् न तु रूपमात्रनिर्विकल्पका-नन्तरं तत्सविकल्पकं विनैव समवायसविकल्पकं वि-वक्षितम्। तस्य रूपत्वविशिष्टवैशिष्ट्यज्ञानत्वेन रूप-

व निर्विकल्पकेन विषयीक्रियते । अनन्तरं समवायविशेष्यकं सविकल्पकम् अनन्तरं रूपसमवायवान् घट इति प्रतीतिरित्येतावतैवोपपत्तौ समवायादेर्निर्विकल्पकविषयताकल्पनायां कल्पनागौरवमिति वाच्यम् । एवं हि रूपमपि निर्विकल्पकविषयो न स्यात् । तत्र च रूपत्वं विशेषणं तदेव निर्विकल्पकेन विषयीक्रियत इत्यस्यापि सुवचत्वात् । न च जातिज्ञानं(१) व्यक्तिविषयतानियतमिति तदैव व्यक्तेर्भानमिति वाच्यम्(२) ।

त्वप्रकारकतज्ज्ञानसाध्यत्वादिति ध्येयम् । समवाये सविकल्पकसामग्रीसत्त्वेन तदभावगर्भनिर्विकल्पकसामग्र्यभावरूपं तद्वैषम्यमाहानन्तरमित्यादिना । नान्यथानुपपत्तिरित्याह एतावतैवोपपत्ताविति । विशेषणज्ञानत्वेनैव हेतुता न तु विशेषणनिर्विकल्पकत्वेनेति भावः । कल्पनागौरवमिति । अप्रामाणिकमिति शेषः । रूपमपि विशिष्टसामग्रीनियतम् रूपज्ञानं तत्रैव निर्विकल्पकमिति ब्रूमः । यत्तु त्वयैवोक्तं रूपत्वनिर्विकल्पकं तद्विषयतामेवादाय रूपे तदुपपत्तेरित्याशङ्क्याह । न च जातिज्ञानमिति । न च जातिपदजन्ये जातिज्ञाने

( १ ) जातिभानम्—पा० २ पु० ।

(२) कृत्वा तत्र व्यक्तिर्भासत इति वाच्यम्—पा० ३ पु० ।

एवं निर्विकल्पके समवायस्यापि ज्ञानप्रसङ्गात् । रूपज्ञानस्य समवायविषयतानियतत्वात् । न ह्येतादृशं ज्ञानं यत्र समवायो न भासते । एवं प्रयोगः । समवायाभावौ निर्विकल्पकविषयौ अस्मदादिसाक्षात्कारविषयत्वात् रूपवत । न चावच्छेदकग्रहध्रौव्यानियमात्सविकल्पकैकवेद्यता । ज्ञानेच्छादीनामपि सविकल्पकैकवेद्यत्वात् । त-

---

व्यभिचारः अनेकसमवेतत्वगर्भजातित्वभाने व्यक्तेरपि भानादिति भावः । तर्हि तद्विषयतयैव समवाये निर्विकल्पकवेद्यतापत्तिरिति तुल्यमित्याह । एवं निर्विकल्पक इति । व्यक्तेर्जातिवित्तिवेद्यतानियमादस्तु निर्विकल्पकविषयता समवाये तु कुत इत्याशङ्क्याह । रूपज्ञानस्येति । रूपेत्यप्यधिकमित्याह नह्येतादृशमिति । साक्षात्परम्परासाधारण्येन समवायभानस्य सार्वत्रिकत्वादित्यर्थः । समवायस्थलोक्ततर्कस्याभावेपि सुवचत्वात्तदुपष्टम्भेनोभयपक्षमनुमानमाह समवायाभावावित्यादि । अत्र साक्षात्कारो लौकिकसाक्षात्कारः तेन न सामान्यलक्षणादिनाऽस्मत्प्रत्यक्षे परमाण्वादौ व्यभिचारः । एकदेश्यनुमानत्वान्न निर्विकल्पकाप्रसिद्ध्या साध्याप्रसिद्धिः । न वा हेतावस्मदादिपदव्यावर्त्याप्रसिद्धिः । हेतुमतोरेव तयोः पक्षत्वान्ना-

त्रापि विषयसंयोगिनोरवच्छेदकयोर्ग्रहध्रौव्यस्य विद्यमानत्वात् । मैवम् । विशिष्टसाक्षात्काराऽन्यथानुपपत्त्या हि विशेषणज्ञानत्वेन निर्विकल्पककल्पनम् । समवाये चान्यथोपपत्तेर्दर्शितत्वात्किमिति तद्विषयत्वमपि निर्विकल्पकस्य स्वीकर्तव्यम् । तथा हि । जात्यादिकन्तावन्निर्विकल्पकेन विषयीक्रियते । अनन्तरं द्विशेषितसमवायविशेष्यकज्ञानोदयः । अन-

तीन्द्रियाभावभागे बाधासिद्धी । ऐन्द्रियकं रूपादि दृष्टान्तः । अतो न वैकल्यम् । नन्ववच्छेदग्रहाजन्यग्रहविषयत्वमात्रोपाधिरित्यत आह न चावच्छेदकेति । साध्याव्यापकत्वादनुपाधिरयमित्याह । ज्ञानेच्छेत्यादिना । निर्विकल्पकविषयतानिवृत्तिप्रसङ्गादित्यर्थः । उपाध्यनिवृत्तेरेव न साध्याव्यापकत्वमत आह । तत्रापीति । यथायथमिति शेषः । अस्मदादिसाक्षात्कारत्वावच्छिन्ने सविकल्पकनिर्विकल्पकत्वयोः प्रत्येकं व्यभिचारेण कारणतानवच्छेदकतया तदवच्छेदेन व्याप्यत्वासिद्धिरेवानुमानस्येति भवताप्यभावसमवायसाक्षात्कारे जन्यविशिष्टानुभवत्वेन जन्यविशेषणज्ञानजन्यत्वेऽनुमीयमाने तेनैव रूपेण निर्विकल्पकरूपविशेषसिद्धिरिति वाच्यम् । सा च न व्याप्त्येति पक्षधर्मता वि-

न्तरं तेन समवायिविशेष्यकेन इदं रूपमयं घटो रूपवानित्यादयः प्रत्यया जायन्ते । एवमभावेपि प्रथममभावविशेष्यक एव प्रत्ययो जायते । अनन्तरं तेन तद्विशेषणकप्रत्ययो जन्यत इति । संयोगज्ञानादौ पुनरवच्छेदकग्रहध्रौव्येपि संयोगत्वज्ञानत्वनिर्विकल्पके विलम्बेन तद्विशिष्टप्रत्ययविलम्बः । तथा च न

शिष्यते । सापि स्वानुपपत्तिपरिहारक्षममेव साध्यं साधयेत् न चेह निर्विकल्पमतीन्द्रियं विना जन्यविशिष्टसाक्षात्कारत्वानुपपत्तिः । अनुभवसिद्धेन सविकल्पकेनैवोपपत्तेरिति सिद्धान्तयति । नैवं विशिष्टेति । समवाये चेति चकारेणाभावसमुच्चयः । अन्यथोपपत्तिमेव विवृणोति । तथाहीत्यादिना । तत्र समवाये तावत्तामाह । जात्यादीति । आदिपदेन रूपसङ्ग्रहः । इदं रूपमिति । इदं रूपत्वसमवायीत्यर्थः । एवं घटो रूपवानित्यत्रापि रूपसमवायवानित्यर्थः । यथाश्रुते रूपत्वरूपसमवाययोः संसर्गविधया भानेन रूपत्वरूपनिर्विकल्पकजन्यसमवायविशेष्यकप्रत्ययानुपयोगात् । अभावेप्यन्यथोपपत्तिमतिदिष्टां स्पष्टयति प्रथममभावेत्यादिना । न च तदर्थमप्यभावत्वज्ञानस्याभावविषयतानियमेन नैव सविकल्पकैकविषयतानुपपत्तिरिति वाच्यम् । अभावत्व-

तस्य सविकल्पकैकवेद्यता । अन्ये तु संयोगज्ञानादेरपि सविकल्पकैकवेद्यतैव । न च संयोगत्वादिनिर्विकल्पकापेक्षया विलम्बः । यावद्विशेषणज्ञानस्य गौरवभयेन विशिष्टप्रत्ययजनकत्वानभ्युपगमादित्याहुः । अपरे अधौव्ये सिद्धसाधनादित्यत्र भरङ्कुवाणाः ? समवायादेरपि

विशेषणानां पूर्वानुपस्थितानामेव भानस्वीकारात् । विशेषणविशेष्यभावापन्नानेकपदार्थघटिताभावत्वोपाधिज्ञानस्य निःप्रकारकतानुपपत्तेश्च । अत एवाखण्डतया संयोगत्वादिजातिनिर्विकल्पकसम्भववैलक्षण्यं पुनः शब्देन सूचयंस्तेषां निर्विकल्पकविषयतामाह । संयोगादौ पुनरिति । तद्विशिष्टेति । तद्विशिष्टप्रत्यक्षे तद्विशेषणज्ञानस्य कारणत्वादिति भावः । न तस्येति । जातिज्ञानस्य व्यक्तिविषयतानियमेन संयोगत्वनिर्विकल्पकत्वेपि तज्ज्ञानादिति भावः । विशिष्टज्ञाने यावद्विशेषणज्ञानत्वेनाजनकत्वेपि तद्विशेषणविशिष्टज्ञाने तद्विशेषणज्ञानत्वेन कारणत्वमावश्यकम् । अन्यथा दण्डज्ञानात्कुण्डलिबुद्ध्यापत्तेः । तथा च प्रतियोगिज्ञानात् विशिष्टबुद्धावपि संयोगत्ववैशिष्ट्यानुल्लेखप्रसङ्गात्तन्निर्विकल्पकमावश्यकमिति अस्वरसमुद्गिरन्नाहान्ये त्वित्यादि । समवायादेरपीति । अयमेषामाशयः । किमभावग्रहमात्रेऽवच्छेदकग्रहध्रौव्यं विवक्षि-

निर्विकल्पकाविषयत्वमाहुः । अत एव निर्विकल्पकविषयत्वमेवार्थस्य लक्षणं स्वीचक्रिरे । न-

---

त्रमभावत्वेन ग्रहमात्रे वा तेन प्रत्यक्षे वा ?। नाद्यः । इदन्त्वप्रमेयत्वादिनाऽभावग्रहे तदभावात् । न द्वितीयः । नञादिपदजन्याभावत्वप्रकारकतद्ग्रहे व्यभिचारात् । ततः प्रतियोग्यवच्छेदेनैवोपस्थित्यङ्गीकारे प्रतियोगिना समभाकाङ्क्षाऽनुदयेनान्वयबोधानुपपत्तेः । सामान्यतः प्रतियोग्यन्विततया प्रतीतस्य तदनाकाङ्क्षायामपि विशेषाकाङ्क्षया तदन्वय इत्यस्यान्विताभिधानपर्यवसायिनः तन्निराकरणेनैव निराकृतत्वात् । न तृतीयः । निर्विकल्पकविषयत्वाविरोधात् । न हीष्यमाणं निर्विकल्पकमभावप्रकारकम् येन तत्रावच्छेदकग्रहध्रौव्यात् निर्विकल्पकता न स्यात् । तथात्वे तेनैव सविकल्पकैकवेद्यतापादनसम्भवेऽवच्छेदकग्रहध्रौव्याभिधानवैयर्थ्यप्रसङ्गात् । अथ प्रकारग्रहध्रौव्यमेव तदर्थः तर्हि घटादेरपि न निर्विकल्पकं स्यात् । घटप्रत्यक्षेऽपि प्रकारग्रहध्रौव्यस्य सुवचत्वात् । न हि निःप्रकारकं घटादिप्रत्यक्षमावयोः सम्प्रतिपन्नमस्ति । निर्विकल्पकसिद्धाववच्छेदकग्रहध्रौव्यभङ्गस्य घटादाविवाभावेऽपि पूर्ववादिना सुवचत्वात् । विशेष्यज्ञानतया कल्पितं घटत्वादिनिर्विकल्पकं जातिसमानवित्तिवेद्यां व्यक्तिमपि विषयीकरोति इति सुवतं घटस्य निर्विकल्प-

न्वसङ्गतमेतत् । विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वे प्रमाणाभावात् । तथाहि । दण्डी पुरुष इत्यत्र प्रथमं दण्डज्ञानं अनन्तरं तद्विशिष्टपुरुषज्ञानमित्यत्र न किञ्चित्प्रमाणम् । न च कारणीभूतज्ञानविषयत्वे सति कार्यीभूतज्ञानविषयत्वं विशेषणत्वमिति वाच्यम् । वैपरीत्य-

कम्, न त्वभावस्य । तस्याभावत्ववेद्यतानियमाभावादिति चेत् । न । तत एव समवायमपि विषयीकुर्यादित्यस्य प्रागेवोक्तत्वादिति । न चैवमपसिद्धान्तः ध्रुवावच्छेदग्रहाणामपि निर्विकल्पकविषयताया वृद्धैरेवाभिधानादित्याह । अत एवेति । अन्यथा प्रमेयविभागसूत्रोक्तानामर्थानामिन्द्रियग्राह्यत्वलक्षणं सामान्यलक्षणादिनाऽतीन्द्रियेष्वतिव्याप्तं मत्वा निर्विकल्पकविषयत्वस्य तदर्थेनोपवर्णनमयुक्तं स्यादभावसमवाययोरव्याप्तिप्रसङ्गादिति भावः । एवमेकदेशिनि निरस्ते व्याप्यत्वासिद्ध्या पुनर्मीमांसकः प्रत्यवतिष्ठते । नन्वसङ्गतमेतदिति । ननु दृष्टान्तीकृते दण्डयादिप्रत्यक्षे दण्डादिज्ञानस्यान्वयव्यतिरेकवता प्रत्यक्षेण कारणताग्रहेऽवच्छेदकापेक्षायां विशिष्टविशेषणज्ञानत्वे एव तथा न तु तत्तज्ज्ञानत्वेऽननुगमादिति प्रत्यक्षमेव सामान्यकारणभावे मानमित्याशङ्क्य तदप्यसिद्धमित्याह । तथाहीति । परस्परासंसर्गाग्रहसहितादुभयेन्द्रियसन्निकर्षादेव

विशिष्टज्ञानसम्भवादिति भावः। ननु विशेषणतानुपपत्तिरेव मानमत आह। न चेति। अनुमित्यविषये व्याप्त्यादावतिव्याप्तेराह कार्यीभूतेति। विशेष्य वारणाय कारणीभूतेत्यादि। न च बाहौ स्थौल्यमिति कारणीभूतज्ञानविषये स्थूलो बाहुरिति च कार्यज्ञानविशेष्ये बाह्वादावतिव्याप्तिः। तद्विषयत्वेन ज्ञानस्य कारणत्वमित्यस्य सत्यन्तेन विवक्षितत्वादिति भावः। वैपरीत्यस्येति। कारणीभूतज्ञानाविषयत्वगर्भलक्षणं प्रणीय विशेष्यज्ञानमेव हेतुर्न विशेषणज्ञानमित्यस्यापि सुवचत्वादित्यर्थः। वस्तुव्यवस्यानुरोधिलक्षणम् न तु तदनुरोधिनी वस्तुव्यवस्था। अस्तु तर्ह्यनुमानमत आह। न चेति। व्याप्येति लिङ्गोपधानाभिप्रायम्। विशेषणज्ञानत्वेन तस्याजनकत्वेपि विशेषणज्ञानस्य जनकत्वं दृष्टमेवेति भावः। विपक्षबाधकं विना सहचारदर्शनमात्रादेव तत्कल्पनेऽतिप्रसङ्ग इत्याह। तद्दृष्टान्तेनेति। ननु लिङ्गपरामर्शे सति विशेष्यभूतपक्षज्ञानविलम्बेनानुमितिविलम्बाभावात्तत्र तस्य कारणत्वमेवासिद्धमत आह। पर्वतादिकमिति। लिङ्गपरामर्शात्मकमपि तावत्पक्षरूपविशेष्यज्ञानं जनकमेव, विशेष्यज्ञानत्वेन जनकतावच्छेदकत्वमिति तु विशेषणज्ञानत्वेऽपि तुल्यमिति भावः। असिद्ध्या सिद्धान्तयति मैवमित्यादिना। नन्वसिद्धमेतत्सत्युभयेन्द्रियसन्निकर्षे विशेषणविशेष्ययोर्युगपदेव ज्ञानात्। तदसन्निकर्षे च

स्यापि सुवचत्वात् । न चानुमितौ व्याप्यव्यापकादिविशेषणज्ञानस्य जनकत्वदर्शनादन्यत्रापि विशिष्टज्ञाने(१) विशेषणज्ञानजनकत्वं कल्पनीयमिति वाच्यम् । तद्दृष्टान्तेन विशेष्यज्ञानस्यापि विशिष्टज्ञानजनकताकल्पनाप्रसङ्गात् । पर्वतादिकं हि पक्षीकृतमनुमितौ विशेष्यम् । तज्ज्ञानं च जनकमेवेति । मैवम् । अगृहीतदण्डस्य हि दण्डी पुरुष इति प्रत्ययानुदयदर्शनेनान्वयव्यतिरेकाभ्यामेव विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वावधारणादिति सङ्क्षेपः ।

इति निर्विकल्पकवादः ।

तत एव तदभावोपपत्तेः । अथ पिहितदण्डे पुंसि गृहीतदण्डस्येवागृहीतदण्डस्यापि कुतो न दण्डधीः ? दण्डविशेषणज्ञानस्याकिञ्चित्करत्वात् इति चेत् । का दण्डधीः ? यदि लौकिकी तन्न । लौकिकसन्निकर्षाभावात् । यद्यलौकिकी तदपि न । ज्ञानलक्षणाद्यलौकिकप्रत्यासत्त्यभावात् । तथापि विशेषणज्ञानस्य कारणत्वं तावदागतमिति चेत् । सत्यम् । न तु विशेषणज्ञानत्वेन तदेव चापेक्षितम् । अन्यस्य विशेष्यज्ञानकारणताप्रतिबन्दिपराहतत्वेनाविवक्षितत्वा-

(१) विशिष्टभाने—पा० ३ पु० ।

त् । न च सन्निकर्षानपेक्षे भ्रमे विशेषणज्ञानान्वयव्यतिरेकानुविधानाद्विशेषणज्ञानस्य कारणतासिद्धिरिति वाच्यम् । जन्यसाक्षात्कारमात्रे तदनपेक्षणात् । तदुपपादकतयैव ज्ञानोपयोगसम्भवात् । न च विशिष्टवैशिष्ट्यज्ञाने प्रकारनियमाय विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वे यत्सामान्ययोरित्यादिन्यायाद्विशिष्टज्ञानविशेषणज्ञानत्वावच्छिन्नयोः कार्यकारणभावसिद्धिरिति वाच्यम् । तथासति संशये कोट्यौत्कट्यनियामकतया विपर्यये चारोप्यस्मृतिहेतुमद्दृशज्ञानतयानुमित्यादौ चोक्तयुक्त्या धर्मिज्ञानस्य कारणतासिद्धौ यत्सामान्ययोरित्यादिन्यायेन विशिष्टज्ञानविशेष्यज्ञानयोरपि कार्यकारणभावप्रसङ्गात् । विशेषणतावच्छेदकप्रकारकज्ञानस्य परनये विशेषणज्ञानविशेषत्वाभावाच्च । स्वमतेपि सामान्यलक्षणासिद्धेः विशेषणज्ञानकारणतासिद्ध्यधीनत्वाच्च । तस्मात्स्वीकुरु विशेष्यज्ञानस्यापि कारणत्वं परिहर वा विशेषणज्ञानस्येति दुस्तरा प्रतिबन्दितरङ्गिणीत्याद्यनुशयेनाह इति सङ्क्षेप इति ॥छ॥

इतिश्रीसकलसामन्त०निर्विकल्पकप्रकरणम् ॥छ॥



सुवर्णस्य तैजसत्वे किं मानम् । सुवर्णं तैजसमत्यन्तानलसंयोगे सत्यनुच्छिद्यमानरूपाधिकरणत्वात् सौरालोकवत् इत्यनुमानमिति चेत् । न सुवर्णपदेन हि किं पक्षत्वेनानुमतम् । अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानरूपाधिकर-

---

पार्थिवदाहप्रतिबन्धकत्वं तेजोवृत्ति न वेति विप्रतिपत्तेः संशये विचारमारिप्समानः पूर्वपक्षमवतारयति । सुवर्णस्येति । मानमाशङ्कते । सुवर्णमिति । अत्यन्तानलसंयोगि सुवर्णमित्यर्थः । अतो न भागासिद्धिः । अत्यन्तेति । किञ्चिदनलसंयोगिपटादौ व्यभिचारादाह अत्यन्तेति । जलसंयोगितन्निवृत्त्यै अनलेति । व्यधिकरणानलसंयोगकालीने तादृशि पटादौ व्यभिचारवारणाय सतिसप्तम्यर्थः सामानाधिकरण्यम् सति विद्यमान इत्यर्थः । तेनातीतानलसंयोगदशायां तादृशि तत्रैव व्यभिचारो निरस्तः । अनुच्छिद्यमानपटत्वाधिकरणे तत्रैव व्यभिचारादाह रूपेति । असति विरोधिसम्बन्ध इति विशेषणं विवक्षितम् । तेन क्वथ्यमानजलमध्यस्थिते प्रतिबन्धकमात्रादिसमवहिते वापीतटे न व्यभिचारः । सौरेति । अत्यन्तानलसंयोग्यालोकवदित्यर्थः । तेन न साधनवैकल्यम् । बाधासिद्ध्यादिभिर्दूषयितुं गूढाभिसन्धिः पक्षमाक्षिपति सुवर्णपदेनेति । इतरः प्रश्नं मत्वोत्तरं शङ्कते । अत्यन्तेति । आक्षे-

र्णामिति चेत् न तस्यापि सौरालोकादिव्याव्-
त्तस्यासिद्धेस्तत्र च सिद्धसाधनात्। उपष्टम्भक-
साधारण्येन तत्र बाधात् उपष्टम्भकस्यैवालोक-
व्यतिरिक्तस्य पक्षतावच्छेदकस्याभावात्(१)। कि-
ञ्चास्याभिसन्धिमुद्घाटयति। नेति। किमित्यनेन रू-
पेण विप्रतिपत्तिविषयस्य विशेषस्य पक्षत्वमभिमतम्।
इतरभेदानुमाने घटादिभिन्नपृथिव्या इव पृथिवीत्वेन
उतैतदवच्छिन्नस्य प्रसिद्धस्येति विकल्प्याद्ये दोषमाह
तस्येति। आदिपदमुपष्टम्भकाभिप्रायेण तथा चाश्रयासि-
द्धिरिति भावः। द्वितीयेंशतः सिद्धिसाधनमाह तत्रेति।
सौरालोकादावित्यर्थः। पक्षतावच्छेदकैक्ये तन्न दोष इत्य-
त आह उपष्टम्भकेति। तत्र उपष्टम्भकांशे। ननु प्रसिद्धे
बाधसिद्धिसाधनाभ्यामेव पाक इति साध्यतानुमानेनाग-
तपाकसिद्धिवदप्रसिद्धसुवर्णसिद्धेर्नाश्रयासिद्धिः। व्याप्ति-
पक्षधर्मतोपेतहेतुज्ञानस्य पक्षसाध्यसम्बन्धबोधकत्वस्व-
भावस्य साध्यतत्सम्बन्धयोरिव पक्षस्यापि सिद्ध्या वि-
नाऽपर्यवसानात्। न चाप्रसिद्धपक्षसिद्धौ पक्षधर्मतासिद्धिः
तया चाप्रसिद्धपक्षसिद्धिरित्यन्योन्याश्रयः। पक्षतावच्छेद-
कावच्छिन्नपक्षधर्मताज्ञानस्यैवानुमितिहेतुत्वात्। तस्य चेह
सुलभत्वादित्यत आह। उपष्टम्भकेत्यादि। यत्रोपष्टम्भका-

(१) उपष्टम्भकसौरालोकव्यतिरिक्तपक्षतावच्छेदकस्या-
भावात्—पा० २ पु०

श्चानुच्छिद्यमानरूपाधिकरणत्वं विवक्षितम् अत्यन्तानलसंयोगाविनाश्यरूपाधिकरणत्वं वा तस्मिन् सत्यपरावर्तमानरूपाधिकरणत्वं वा ? नाद्यः। स्वरूपासिद्धत्वात् । तथाहि मूषानिक्षिप्तस्य सुवर्णस्य तथाविधानलसंयोगे सति स्वरूपमेव नानु-

द्व्यतिरिक्ते तैजसत्वं विसाधयिषितन्तस्य धर्मिण एवाभावे क्व पक्षता क्वतरां तदवच्छेदकम् येन तदवच्छेदकसुवर्णत्वावच्छिन्नधर्मताज्ञानादप्रसिद्धसुवर्णसिद्धिरित्यर्थः । वस्तुतः पक्षधर्मताज्ञानमेव लाघवादनुमितिहेतुर्नतु पूर्वोक्तं गौरवात् अनागतपाकसिद्धिस्तु प्रकारान्तरेणैवेति भावः । स्वरूपासिद्धिव्यभिचाराभ्यां हेतुं दूषयितुं विकल्पयति किञ्चेत्यादिना । अपरावर्त्तमानमविजातीयम् । नानुवर्तत इति । आरम्भकनिविडसंयोगनाशात्परिमाणभेदाच्चेति भावः । किं पुनारूपमिति । आश्रयनाशे तन्नाशस्यावश्यकत्वादिति भावः । न चैवमाश्रयनाशादेव रूपनाशो नाग्निसंयोगादिति विकल्पितपूर्वहेतोर्नासिद्धिरिति वाच्यम् । अग्निसंयोगप्रयोज्यविनाशप्रतियोगित्वं तदर्थमङ्गीकृत्याभिधानात् । जलेनेति । तद्रूपस्यापि पूर्वतद्रूपाविजातीयत्वादिति भावः । यथाश्रुते व्यभिचारान्तरमप्याह । उपष्टम्भकेति । हेत्वनुपपत्तिमात्रपरिजिहीर्षया शङ्कते नैमित्तिकेति । किमन्वयव्य-

वर्त्तते । किं पुना रूपम् । न द्वितीयः । जलेन व्यभिचारात् उपष्टम्भकाभिमते गतत्वाच्च । नैमित्तिकद्रवत्वाधिकरणत्वं हेतुरिति चेत् । न अन्वयित्वे सहचाराभावात् व्यतिरेकित्वे च घृतेन विरोधात् । तेजो वै घृतमित्यागमबलात् घृत तैजसमेवेति न विरोध इति चेत् । न तथासति व्यतिरेकित्वाभावात् । तत्तैजसत्वस्य च निराकरिष्यमाणत्वात् । लाक्षादिना व्यभिचारस्य दुष्परिहरत्वात् । तथाविधानलसंयोगे सत्य-

तिरेकी केवलव्यतिरेकी वा । नाद्य इत्याह अन्वयित्व इति । आकरतैजसत्वाभिमते सर्वत्र सुवर्णपदेन पक्षीकृते साध्यानिश्चयादन्यत्र च व्यतिरेकस्यैव निश्चयादिति भावः । न द्वितीय इत्याह । घृतेनेति । विरोधो व्यभिचारः । केवलव्यतिरेकिणि व्यभिचारस्य विरोधे पर्यवसानात् । साध्यत्वान्न विरोध इति शङ्कते । तेजो वा इति । व्यतिरेकित्वाभावादिति । घृतेनैव दृष्टान्तेनान्वयित्वसम्भवादिति भावः । तदप्रतिसन्धानदशायां व्यतिरेकित्वाभिधानं तत्प्रतिसन्धाने त्वन्वयित्वेपि न नः क्षतिरित्यत आह । तत्तैजसत्वस्येति । अभ्युपगम्याह लाक्षादिनेति । हेत्वन्तरमाशङ्क्य निराचष्टे । तथाविधेति । घृतादौ व्यभिचारभयादाह ।

नुच्छिद्यमानद्रवत्वाधिकरणत्वं हेतुरिति चेत् । न तैजसत्वे साध्ये पूर्वदोषानिवृत्तेः । अनेन हेतुना पृथिवीव्यतिरेकं जलादिव्यतिरेकं च शीतस्पर्शाद्यनधिकरणत्वेन प्रसाध्यैतदुभयभिन्नत्वे सति रूपवत्त्वात्तैजसत्वसाधनमिति चेत् । न

---

अनुच्छिद्यमानेति । अनुच्छिद्यमानपृथिवीत्वाधिकरणे घटादौ व्यभिचारनिरासाय द्रवत्वेति । सुवर्णे सर्वथोच्छेदाप्रतियोगिद्रवत्वाधिकरणत्वमसिद्धमित्यत अत्यन्तानलसंयोगे सतीति । ईषदनलसंयोगकाले तथाभूते घृते व्यभिचारनिरासाय तथाविधेति । अत्यन्तत्वं तदर्थः । न चाश्रयनाशजन्यसुवर्णद्रवत्वोच्छेदस्यापि देशान्तरीयात्यन्तानलसंयोगकालीनत्वादसिद्धिरिति वाच्यम् । सतिसप्तम्या सामानाधिकरण्यशक्त्या समानाधिकरणात्यन्तानलसंयोगकाले तदनुच्छेद्यद्रवत्वस्य लाभात् । न च मूषानिक्षिप्तस्य सुवर्णस्वरूपमेव नानुवर्त्तते किं पुनर्द्रवत्वमिति पूर्वोक्तदोषतादवस्थ्यम् । समानाधिकरणद्रवत्वसमानकालीनोच्छेदाप्रतियोगिद्रवत्वाधिकरणत्वस्य विवक्षितत्वात् । पूर्वेति । अन्वये सहचाराभावाद्व्यतिरेके जलपरमाणौ व्यभिचारादित्यर्थः । दोषानिवृत्तिं शङ्कते । अनेनेति । प्रकृतं न पृथिवी अत्यन्तानलसंयोगे सति समानाधिकरणद्रवत्वसमानकालीनो-

उपष्टम्भकेन व्यभिचारात् पृथिवीव्यतिरेकस्य साधयितुमशक्यत्वात्। न च जलव्यतिरेकसाधनं युक्तम्। हेतोरसिद्धत्वात्। योग्यानुपलब्ध्या शीतस्पर्शव्यतिरेकासिद्धिरिति यदि तदानयैवोष्णास्पर्शादिव्यतिरेकस्य सिद्धेः को वारयिता(१) तथा च तैजसत्वमपि न स्यात्। नैमित्तिकद्रवत्वाधि-

च्छेदाप्रतियोगिद्रवत्वाधिकरणत्वाज्जलपरमाणुवदित्यन्वयव्यतिरेकिणा पृथिवीव्यतिरेकम्, तन्न जलं शीतस्पर्शानधिकरणत्वात्स्नेहानधिकरणत्वाद्वाकाशवदिति जलव्यतिरेकं साधयित्वा तत्तैजसं पृथिवीजलान्यत्वे सति रूपवत्त्वात्सौरालोकवत्। नभसि नीलप्रतीतिर्भ्रम एवेति न तत्र व्यभिचार इति तैजसत्वसाधनमित्यर्थः। जलादीत्यादिपदेन नीरूपत्वस्य परिग्रहः। शीतस्पर्शादीत्यादिपदेन च चाक्षुषबहिर्द्रव्यभेदस्य तत्साधनस्य। उभे कण्ठोक्ते जलपृथिव्यौ। विशेषणासिद्ध्या दूषयति। नेति। पृथिव्यन्यत्वासिद्धिं तावदाह उपष्टम्भकेनेति। जलान्यत्वमप्यसिद्धमित्याह। जलेति। ननु महति सुवर्णे योग्यानुपलब्धिसहकृतया त्वचैव स सिद्ध्येदित्यत आह। योग्यानुपलब्ध्येति। तैजसत्वमपीति। तैजसत्वाभावेपि सिद्ध्येदित्यर्थः।

(१) सिद्धिं को वारयिता—पा० २ पु०।

करणत्वान्न जलत्वमिति चेत्। न तत एव तेजो-व्यतिरेकसिद्धिसम्भवात्। अन्ततः पृथिवीत्वमेवा-नेन साधयितुं शक्यते । वादिवागीश्वरस्तु सुवर्णं न पार्थिवं तथाविधानलसंयोगे सति भस्मानार-म्भकत्वादित्याह। तदपि तुच्छम्। घटेन व्यभि-चारात्। द्रवत्वेन विशेषणीयमिति चेत् न लाक्षा-दिना व्यभिचारात् । न ह्यनेनात्यन्तानलसं-योगेन भस्मारभ्यते। किन्तु तद्विनाशे सति द्व्यणुकादिक्रमेण तत्र भस्मोत्पद्यते । अन्यथा

तथा च बाध इति भावः । असिद्धिशङ्काशून्यं हेतुमाशङ्कते नैमित्तिकेति । उपष्टभ्योपष्टम्भकयोर्द्र-वत्वे विनिगमनादित्यर्थः । तथापि बाधो दुर्वार इति आह । तत एवेति । नन्वतैजसत्वेन नैमित्तिकद्रव-वत्वेऽकारणत्वाद्विपक्षबाधकाभावाद्व्याप्यत्वासिद्धेर्न त-तस्तत्सिद्धिरित्याशङ्क्याह । अन्तत इति । एतावत्प-र्यन्तं विमर्श इत्यर्थः। पृथिवीत्वेनैव तत्कारणत्वावधार-णात्तदेव ततः सिध्येन्न जलत्वव्यतिरेकोऽपि । तथा च तैजसत्वसाधकहेतुव्याप्तिग्राहकतर्कसहकृतप्रमाणेन पृ-थिवीत्वसिद्धेर्बाध इति भावः। मानमनोहरकारीयं मानं दूषयितुमनुभाषते वादिवागीश्वरस्त्विति । तथेति । समानाधिकरणात्यन्तानलसंयोगे भस्मानारम्भकत्वादि-

भस्मनि जतुत्वापत्तेः । उपष्टम्भकेन व्यभिचा-
राच्च । नन्वतिचिरमनलसंयोगे पीतिमगुरुत्व-
विशिष्टमुपष्टम्भकामितं पार्थिवं द्रवीभावेऽप्यभ-
स्मीभूतमनुभूयते । अतस्तत्रापार्थिवं द्रवत्वाधि-
करणं दाहप्रतिपक्षोऽनुमीयते । क्षीरादेरतितरां
क्वथ्यमानस्य निक्षिप्तजलस्य दाहप्रतिबन्ध-
दर्शनात् । तथा च यदेवापरावर्तमानरूपं मपो-
दरवर्ति प्रतीयते तदेवापार्थिवं कल्प्यताम् ।

---

त्यर्थः । ननु लाक्षादेरप्यसिद्धो भस्मीभाव इति
कुतो व्यभिचार इत्यत आह न ह्यनेनेति । लाक्षात्व-
विशिष्टेत्यर्थः । उत्पद्यत इति । लाक्षात्वरहिततदा-
रम्भकपरमाणुभ्य इति शेषः । लाक्षात्वविशिष्टावयवा-
रभ्यमेव कुतो न स्यादित्यत आह अन्यथेति । ला-
क्षात्वं यदिभस्मारम्भकपरमाणुवृत्तिजातिः स्याद्भस्म-
वृत्ति स्यादित्यर्थः । सत्तान्यद्रव्यत्वसाक्षाद्व्याप्यजाते-
रेव परमाणुष्वभ्युपगमादिति भावः । ननु भस्मकार-
णीभूतध्वंसाप्रतियोगित्वमेव भस्मानारम्भकत्वं विवक्षि-
तमत आह उपष्टम्भकेनेति । यद्यपि क्वथ्यमानजल-
मध्यस्थपीतपटादौ व्यभिचारवारणाय सति विरोध-
सम्बन्ध इति विशेषणस्यावश्यकत्वात् द्रुततेजोरूप-
विरोधिसम्बन्धिन्युपष्टम्भके न व्यभिचारः । त-

पार्थिवत्वे च दाहप्रतिपक्षताविरोधात् । तच्च स्नेहादिरहिततया जलं न भवति। वायुत्वादिकं तु तस्य रूपवत्त्वादेवानुपपन्नम् । तथा च परिशेषादेवास्य तैजसत्वमिति । अस्तु ताव-दापातरम्यमेतत् । तथापि येन रूपेण दाह-प्रतिबन्धकता दृष्टा तद्रूपविशिष्टमेव क-ल्पयितुमुचितम् । सा च नापार्थिवत्वे सति द्रवत्वेन । किन्तु जलत्वेनैव लाघवात् । जल-त्वव्यवस्थापकबाधात्तद्बाध इति चेत् न अ-भास्वरापाकजरूपस्य तद्व्यवस्थापकस्य प्रत्य-

यापि विरोधिसम्बन्ध एव नाद्यापि सिद्ध इति भावः । पूर्वोक्तसर्वहेतुसाधारणीमुक्तामाश्रयासिद्धिमु-द्धरन्नेव तत्र विशेषेण तैजसत्वसाधनायाह नन्विति । अत्यन्तानलसंयोग्युपष्टम्भकाभिमतं द्रुतापार्थिवसम-वहितमप्रतिबद्धात्यन्तानलसंयोगेपि भस्मकारणीभूत-ध्वंसाप्रतियोगि द्रुतपार्थिवत्वात् क्वथ्यमानजलगतक्षी-रवदित्याखण्डलकार्यः । अप्रयोजकत्वं निरस्यति पा-र्थिवत्व इति। अद्रवत्वे वेति शेषः। आश्रयासिद्धिं परि-च्छिनत्ति तच्चेति। तथा च बाधादेव तन्निरास इत्यर्थः। गौरवेण व्यापकतायाऽनवच्छेदकतया व्याप्यत्वासिद्धिं सूचयन्नाह अस्तु तावदिति । आपातरम्यं व्यभिचारानुप-

क्षसिद्धत्वात् । किञ्च किमत्र तेजस्त्वव्य-वस्थापकमुपलब्धवान् भवान् येन तेजस्त्वं कल्पयितुमुद्यतोऽसि । व्यवस्थापकमपि क-ल्पनीयमिति चेत् न । नूनमतिप्रज्ञोऽसि । यस्त्वं क्लृप्तव्यवस्थापकं जलत्वं परिहरसि । न परिहरसि कल्पनीयव्यवस्थापकं तेजस्त्वम् । अभास्वरत्वं सुवर्णरूपस्यासिद्धमिति चेत् न तत्किमाहान्धकारस्थेन सुवर्णेन घटादिकं प्रका-श्यत इत्यपि वक्तुमध्यवसितोऽसि । नैमित्तिक-द्रवत्वं जलत्वबाधकमिति चेत् न तत्किमेत-

लम्भमात्रेण प्रतीयमानम् । उचितमिति । कार्यकारण-भावमूलकतर्कावधृतव्याप्तिकत्वादिति भावः । प्रति-बन्धहेतुतापि नैवेत्यत आह । सा चेति । ननु जलत्वव्यापकस्नेहाद्यनुपलब्ध्या जलत्वबाधे भवेत्ते-जस्त्वविशेष इति शङ्कां निरस्यति । जलत्वेनेति । स्नेहादेर्व्यापकत्वासिद्धेर्व्यापकस्य चानुपलब्धेरसिद्धेर्न तया जलत्वबाध इत्याह । अभास्वरेति । ननु नात्राभास्वरत्वोपलब्धिः किन्तु भास्वरत्वानुपलम्भ-मात्रमिति शङ्कमानं प्रत्याह । किञ्चेति । भास्वरत्वा-नुपलम्भस्य त्वयैवाभिहितत्वादिति भावः । व्यवस्था-पकमपीति । अनुपलम्भमात्रस्य कल्पनायामबाधकत्वा-

देव न तैजसत्वबाधकम् येन लज्जामपहाय पुनः पुनरेवमभिधत्से । स्नेहशीतस्पर्शविरहाज्जलत्वविरह इति चेत् न । तयोरनुद्भूतत्वेनाप्युपपत्तेरिति ।

अत्रोच्यते । यत्तावदुक्तं पृथिवीतरद्रवत्वाश्रयत्वेन न दाहविरोधित्वम् । किन्तु जलत्वेनैव लाघवात् । तदनुपपन्नम् । शिलातलसम्बद्धस्यापि जलस्य दाहप्रतिपक्षत्वप्रसङ्गात् । तथापि प्रत्यक्षसांसिद्धिकद्रवत्वाश्रयत्वेनैव दाहप्रति-

---

दिति भावः । उपहसन्परिहरति । नूनमिति । विरोधिलक्षणया प्रमाणस्वभावानभिज्ञोऽसीत्यर्थः । तदेवोपपादयति । यस्त्वं क्लृप्तेति । अनुव्यवसायसाक्षिकप्रत्यक्षसिद्धाभास्वररूपलक्षणव्यवस्थापकमित्यर्थः । विरोध्यनुपलम्भमात्रेणोपलम्भापलापेऽव्यवस्थाप्रसङ्गादिति भावः कल्पनीयेति । अनुपलम्भस्यान्यथोपपादनेनाप्रामाणिककल्पने शशे शृङ्गसिद्धेरपि प्रसङ्गादिति भावः । अभास्वररूपमध्यक्षयामीत्यनुव्यवसाय एवासिद्ध इत्याशयेन तथापि शङ्कते अभास्वरत्वमिति । भास्वरत्वव्यापकनिवृत्त्या भास्वरत्वसिद्धिस्तथापि दुर्वारेत्याह । तत्किमिति । तत्किमेतदिति । सम्प्रतिपन्ने नैमित्तिकद्रवत्व-

बन्धकत्वमास्तामिति चेत् न। प्रकृतेऽपि सांसिद्धिकद्रवत्वस्य बाधात्। तर्हि जलव्यतिरिक्तस्यसांसिद्धिकद्रवत्वानाश्रयस्य दाहप्रतिपक्षत्वाभावात् जलस्य बाधाद्दाहप्रतिपक्ष एव न सिद्ध्येदिति चेत् न तथासति दाहप्रसङ्गात्। दाहप्रसङ्गभयेन करकायदुपष्टम्भकाभिमतपीतिमगुरुत्वाश्रयेण प्रतिबद्धसांसिद्धिकद्रवत्वं जलमेव तर्हि सिध्यतु। उपष्टम्भकस्यैव वा तथा स्वभावः कल्प्यताम्। येन तथा पार्थिवत्वेऽपि न दाह इति चेत् न प्रथमे कल्पनागौरवात्। तथाहि तैजसत्वपक्षे

दर्शनमात्रेण जलत्वबाधकत्वे तेजस्यपि नैमित्तिकद्रवत्वादर्शनात्तदपि न स्यादित्यर्थः। पूर्वोक्तलाघवाज्जलत्वसिद्धौ जलविशेषे नैमित्तिकद्रवत्वकल्पनस्य प्रामाणिकत्वात्। करकावदत्यन्तानलसंयोगात् प्राक्सांसिद्धिकद्रवत्वस्यैव वा प्रतिबन्धमात्रकल्पनादिति भावः।

पूर्वपक्षरहस्यं दूषयितुमनुभाषते। यत्त्ववदिति। अन्वयव्यभिचारेण दूषयति। शिलेति। शिलाशैत्यानुमेयत्वात्तस्येति भावः। न च शैत्यानुमितजलसम्बन्धकाल इष्टापत्तिस्तदभावकाले तु न दाहेऽनुपपत्तिरिति वाच्यम्। तथासत्यग्निसम्बन्धस्य तन्नाशकत्वपर्यवसाने प्रकृतेऽपि तथैव दाहप्रसङ्गात्। व्यभिचारो-

नैमित्तिकद्रवत्वम् अनुद्भूतस्पर्शवत्त्वं परप्रकाशता-विरोध्युपष्टम्भकसम्बन्धश्चेति त्रयमेव कल्पनीय-म्। जलत्वे त्वनुद्भूतस्पर्शवत्त्वमनुद्भूतस्नेहवत्त्वम् सांसिद्धिकद्रवत्वग्रहविरोध्युपष्टम्भकसम्बन्धः । उद्भूतरूपवत्त्वेऽपि सति जलस्यानुद्भूतस्पर्शव-त्त्वम् अनुद्भूतस्नेहवत्त्वमित्याद्यूह्यम् । तैजसत्वे तु नादृष्टचरकल्पना । उद्भूतरूपानुद्भूतस्पर्शा-

द्वारं शङ्कते । प्रत्यक्षेति । लाक्षादिद्रवत्वव्यावृत्त्यै सां-सिद्धिकेति । शिलातलसम्बद्धजलव्यावृत्त्यै प्रत्यक्षेति द्र-वत्वविशेषणम् । शैत्यानुमेयशिलातलसम्बद्धजलद्रवत्वस्य चायोग्यवृत्तितया न प्रत्यक्षतेति भावः । सुवर्ण एव व्यतिरेकव्यभिचारेण दूषयति । प्रकृतेऽपीति । अन्य-थानुपपत्त्या द्रवत्वप्रतिबन्धकल्पनान्न बाध इति गूढा-शयः शङ्कते । तर्हीति । प्रसक्तबाधसहकृतमन्यथासिद्धका-र्यदर्शनमेव तं साधयिष्यतीति-गूढाभिसन्धिरेवोत्तरयति तथासतीति । शङ्किता स्वाशयमुद्घाटयति । दाहेति । प्रतिबद्धेति । अग्निसंयोगात्प्रागिति शेषः । ननु जलेनो-पष्टम्भकपीतस्यैव तदन्तर्गततृणादेरप्यदाहापत्तिः । अथोपष्टम्भकमात्रदाहप्रतिबन्धकत्वमपि तस्य कल्प्यते तदपि न जलमात्रे दृष्टस्वभावविरोधात् । प्रकृत एव वि-शेषस्वभावकल्पने तूपष्टम्भकाभिमतपार्थिवविशेष एव

स्य प्रभादेर्दृष्टत्वात्। वह्नेरपत्यं प्रथमं हिरण्यमित्यागमवाक्यादेरपि तैजसत्वे । न चैवं तेजो वै घृतमित्यागमवाक्यात् घृतस्यापि तैजसत्वप्रसङ्गः। अक्ताः शर्करा उपदधातीत्यत्राक्तत्वस्य द्रवद्रव्यमात्रसाध्यत्वात् द्रवद्रव्यमात्रेणाक्तत्वे प्रसक्ते अन्यद्रव्यव्यावृत्त्यर्थं सर्पिः स्तूयते । तेजोवत्पवित्रं घृतं न तैजसत्वे तात्पर्यम् । तद्द्रव्यव्यवस्थाप-

---

तदस्त्वित्यस्वरसादाह । उपष्टम्भकेति । धर्मिकल्पनातो धर्मकल्पनाया लघुत्वादिति भावः । सिद्धान्त्यपि स्वाशयमुद्घाटयन् परिहरति। नेति। उपष्टम्भकप्रतिबद्धद्रवत्वं जल एवेत्यत्र पक्षे दोषमाह । प्रथम इति । अनुद्भूतस्पर्शवत्त्वमिति । इदं च बहिर्द्रव्यप्रत्यक्षत्वे उद्भूतस्पर्शस्याप्रयोजकतापक्षे पक्षान्तरे तूद्भूताभिभूतस्पर्शवत्त्वम् चेत्यपि द्रष्टव्यम्। उपष्टम्भकसम्बन्धो यदि तेन रूपाभिभवस्तदा वन्हेरिव सुवर्णस्यापि परप्रकाशकतापत्तिरित्यत उक्तम् परप्रकाशकताविरोधीति । उद्भूतरूपवत्त्वे सतीत्युत्तरत्राप्यनुषज्यते । आदिपदेन शुक्लत्वशीतत्वाभिभवग्रहः । अत्र नीरसत्वे सतीति द्रवत्वम्, प्रत्यक्षतेजसः प्रत्यक्षरूपस्य स्पर्शान्यतरत्वाभावः, तस्यैव परप्रकाशकत्वाभाव इत्यादिकल्पनागौरवं तेजस्त्वेपि तुल्यम् । किञ्च प्रत्यक्षपृथिवीतरद्रव-

त्वाश्रयत्वापेक्षया प्रत्यक्षसांसिद्धिकद्रवत्वाश्रयत्वस्य ला-
घवेन पार्थिवदाहविरोधितावच्छेदकत्वे सिद्धे प्रामा-
णिकत्वेन पूर्वोक्तगौरवस्य फलमुखत्वेन दोषत्वानुप-
पत्तिः । अत एव सुवर्णे करकावत्सांसिद्धिकद्रवत्वप्रति-
बन्धकल्पनमपि नाप्थमित्यनुशयेनाह । ऊह्यमिति ।
चिन्त्यमित्यर्थः । कल्पनीयन्यूनाधिकभावेन लाघवगौ-
रवे दर्शयित्वा क्लृप्ताक्लृप्तकल्पनयापि ते दर्शयति
तैजसत्वेति । प्रभादेरित्यादिपदेन साजात्यलक्षणाश्र-
यणादिति भावः । यद्यप्यत्र धनमिच्छेद्धुताशनादित्या-
दिप्रतिपादितधनसाधनतानिर्वाहार्थं हिरण्यस्य वन्हि-
पारतन्त्र्यं विवक्षितम् यथा हि अपत्यानि पितरि स्नि-
ह्यन्ति तत्समीपे निवसन्ति तस्येच्छामनुवर्त्तन्ते तथाग्ने-
र्हिरण्यमिति । यद्वा सुवर्णधारणविधेरयमर्थवादः । तथा-
पि प्रमाणबलेन तैजसत्वे सिद्धे साजात्यं प्रतिपाद्यापि
तत्परता न विरुद्ध्यते इति भावः । प्रतिबन्दीमाश-
ङ्क्य परिहरन्ति । नचेति । पवित्रमिति । अत्रापि तैज-
सत्वतात्पर्यकत्वनिषेधे तात्पर्यम् नतु पावित्र्यतात्पर्य-
कत्वे तेजसैवैवं स धर्मवतीत्यादिवाक्यशेषपर्या-
लोचनया तेजःसाधनतायामेव तात्पर्यप्रतीतेः ।
तैजसत्वे तात्पर्यपीतरथ्यावृत्तिः सम्भवत्येवेत्यत आह ।
तद्रूपवत्त्वापकेति । परप्रकाशतोष्णस्पर्शादिबाधेनेत्यर्थः ।
यद्यपि सुवर्णपीदं सुवचम् उपष्टम्भकेनाभिभवकल्पनं च

कबाधेन प्रथमं(१)बाधितत्वात्। बाधितेऽर्थे स्मृतेस्तात्पर्यकल्पनायामप्रामाण्यप्रसङ्गात्। स्मृतौ माषकादिव्यवहारस्तु सुवर्णोपष्टम्भकगुरुत्वेनान्यथासिद्धः। भस्मानारम्भकत्वं तु यथा काचादिमूलपरमाणूनां भस्मद्व्यणुकारम्भकत्वं न तथैतन्मूलपरमाणूनां भस्मद्व्यणुकारम्भकत्वं विवक्षितम्। न च पार्थिवविशेष एव तथा कल्पनीय इति द्वितीयपक्षो युक्तः। द्रवत्वाधिकरणस्य पार्थिवस्य तथाविधानलसंयोगे सति भस्मारम्भकत्वानियमात्। तत्र च बाधकाभावेन सङ्कोचस्यान्याय्य-

घृतेपीति नेदं युक्तम् तथापि स्वोक्तलाघवोपष्टम्भेनेदम्। ननु सुवर्णतैजसत्वेपि नागमतात्पर्यम् स्मृत्या तदन्यतात्पर्यकत्वनिर्णयादित्यत आह स्मृताविति।

माषमात्रं सुवर्णं वै यो दद्यात्प्रयतः पुमान्।

दत्ता तेन मही सर्वा किल्बिषौघविनाशिनी॥

इत्यादावित्यर्थः। तैजसो गुरुत्वादिति भावः। वागीश्वरानुमान उक्तं दोषं निरस्यति। भस्मेति। भस्मसमवायिसमवायिकारणकभिन्नत्वं विवक्षितमित्यर्थः। तथाविधेति। विरोध्यसमवहितात्यन्तानलसंयोगे सति

(१) बाधेन तस्य बाधितत्वात्-पा-३ पु।

त्वात् । नैमित्तिकद्रवत्वाश्रयस्य भस्मारम्भकत्व-
व्याप्यत्वावच्छेदकत्वाच्च पृथिवीत्वस्यैव । किञ्च
पार्थिवत्वकल्पनायां रूपमप्यपरावर्त्तमानम-
नुपपन्नम् । रूपपरावृत्तौ पृथिवीत्वस्यैव तन्त्र-
त्वात् । ननु नैमित्तिकद्रवत्वस्य पृथिवीत्वनिय-
तस्य कथमपृथिव्यामुत्पत्तिः । तथात्वे वा

---

भस्मकारणीभूतध्वंसप्रतियोगित्वनियमादित्यर्थः । ननु सुवर्णादन्यत्र स नियम इत्यत आह । तत्र बाधकेति । अन्यथा नियममात्रोच्छेदप्रसङ्गादिति भावः । ननु तेजस्त्वपक्षेऽपि नैमित्तिकद्रवत्वस्य भस्मारम्भकतानियमेन तत्प्रसक्तौ स्वभावविशेष एव निस्ताराय तद्वरमुपष्टम्भकस्य पार्थिवस्यैव स्वभावविशेषः कल्प्यतामत आह । नैमित्तिकेति । यद्वा ननु भस्मारम्भकतानिवृत्तावपि नैमित्तिकद्रवत्वस्येव द्रवपृथिवीत्वस्यापि न निवृत्तिः सहचारेप्यसत्त्वादित्याशङ्क्य वैषम्यमाह । नैमित्तिकेति । तस्योभयमतेऽपि सुवर्णे सत्त्वेन व्यभिचारादिति भावः । पृथिवीत्वस्य द्रवपृथिवीत्वस्य भस्मारम्भकत्वव्याप्यतावच्छेदकत्वादिति शेषः । न लाक्षात्वादेरप्यननुगतत्वादित्येवकारार्थः । पृथिवीत्वे बाधकान्तरमाह । किञ्चेति । कुत इत्यत आह । रूपपरावृत्ताविति । अग्निसंयोगाद्विजातीयरूपोत्पत्तौ पृथिवीत्वस्यैव सम-

वाय्वादावप्युत्पत्तिप्रसङ्गः । रूपवत्त्वं नियामकमिति चेत् । तर्हि जले तदुत्पत्तिप्रसङ्गः । स्वाभाविकद्रवत्वविरहसहकृतं तथेति चेत्तर्हि आलोके तदुत्पत्तिप्रसङ्गः । आलोकादौ तदुत्पत्तिप्रयोजकाभावान्नोत्पद्यत इति चेत् । तदेव पृथिव्यादिव्यतिरिक्ते नास्तीति वयं ब्रूमः । तथा च नैमित्तिकद्रवत्वमेव तैजसत्वसाधकमिति । नैवम् । नहि पृथिवीत्वमेव नैमित्तिकद्रवत्वसमानाधिकरणतावच्छेदकम् । पृथिवीमात्रे तदुत्पत्तिप्रसङ्गात् । नापि घृतत्वादिकम् परस्परव्यभिचारात् । तस्माद्दृष्टमेव मृदुत्वमदृष्टमेव वा तत्र नियामकं वक्तव्यम् । तच्च पृथिव्यामिवान्यत्रापि न

---

वायितावच्छेदकत्वादित्यर्थः । अन्ततः पृथिवीत्वमेवानेन साधयितुं शक्यते इत्यादिनोक्तं बाधं दूषयितुमुपपादयति तावत् । नन्विति । पृथिवीत्वेति । अपृथिव्यां क्वचिदनिश्चयादिति भावः । स्वाभाविकेति । यद्यपीदमपि वाय्वादावपीत्यादिना दुष्टम् तथापि रूपवत्त्वविशेषिततन्नियामकमभिसन्धाय दोषान्तराभिधानम् आलोकेपीत्यादिना । यद्वा आलोकेपीत्यपिशब्देन वाय्वादिसमुच्चयादयमपि दोषो विवक्षित इति ध्येयम् । गूढाभिसन्धिः शङ्कते । आलोक इति । अभिसन्धिमजान-

दण्डत्वारितमिति न पृथिवीत्वव्याप्यं नैमित्तिकद्रवत्वमिति न सम्प्रतिपन्नत्वमपि । नन्वस्तु घृतत्वादिव्यापकसामान्यविशेष एव नैमित्तिकद्रवत्वाश्रयतावच्छेदकः । न च तथाविधं सामान्यमप्रामाणिकमिति वाच्यम् । नैमित्तिकद्रवत्वाश्रयत्वस्यैव तत्र व्यवस्थापकत्वात् । गन्धाश्रयत्वस्येव पृथिवीत्वे पृथिवीत्वावान्तरसामान्यस्य परमाणुष्वसत्त्वात्तेषु नैमित्तिकद्रवत्वाऽनुत्पत्तिप्रसङ्ग इति चेन्न मोत्पद्यताम् । न हि परमाणुद्रवत्वेन पार्थिवेऽवयविनि द्रवत्वमुत्पाद्यत इति क्वचित्सिद्धं वर्तते तस्माद् द्व्यणुकादावेव नैमित्तिकद्रवत्वमस्ति । तत्र च(१) घृतत्वादिव्यापकपृथिवीत्वव्याप्यसामान्यविशेष

ननु दूषयति । तदेवेति । पृथिवीत्वातिरिक्तस्य तस्य दुर्वचत्वादिति भावः। सिद्धान्ती स्वाभिप्रायं विवृण्वन् परिहरति । नैवमित्यादिना । परस्परेति । घृतद्रवत्वे लाक्षाया लाक्षाद्रवत्वे घृतत्वस्य व्यभिचारादित्यर्थः। तत्किमनवच्छेद्यमेव नेत्युपसंहरन्नाह । तस्मादिति । मृदुत्वं तूलजलादिसाधारणम् अवयवसंयोगविशेषरूप-

(१) तथा च पा० २ पु० ।

एव नियामक इति कथं पृथिवीत्वेन न व्याप्ति-
रिति । मैवम् । नैमित्तिकद्रवत्वं न तज्जातिव्य-
वस्थापकमत्यन्तायोगव्यवच्छेदेन यथा गन्धः
पृथिवीत्वे । न च काचादिषु सर्वत्र नैमित्तिकद्रव-
त्वमुत्पद्यते । अद्रवाणामपि काचादीनां विना-
शदर्शनात् । तथा च काचत्वादिनैव परापरभा-
वानुपपत्तिभिया न नैमित्तिकद्रवत्वव्यवस्थापक-
जातिसिद्धिरिति । तस्मात् द्रवत्वं यथा पृथिव्यामे-

---

तया परमाणुष्वसम्भवि चेत्यत आह । अदृष्टमेव वेति ।
नैमित्तिकद्रवत्वभाजकादृष्टमेवेत्यर्थः । ननु तदपि
पृथिव्यामेवेत्यत आह । तच्चेति । कार्यैकोन्नेयत्वात्तस्ये-
ति भावः । न सत्प्रतिपक्षत्वमिति । व्याप्यत्वासिद्ध्या
हीनबलत्वादिति भावः । अदृष्टहेतुकेऽपि तस्मिन् घृता-
दीनां समवायिकारणताया अनुगतावच्छेदकावच्छेद्य वा-
त्तस्य च पृथ्वीत्वव्याप्यत्वाद्दोषतादवस्थ्यमिति शङ्कते -
नन्वस्त्विति । पृथिवीत्वावान्तरसामान्यावच्छेद्यत्वे नै-
मित्तिकद्रवत्वस्य परमाणावनुपपत्तिरवच्छेदकाभावा-
दिति शङ्कते पृथिवीत्वेति । सत्तान्यद्रव्यत्वसाक्षाद्व्याप्य-
जातेरेव परमाणुष्वङ्गीकारादिति भावः । इष्टापत्तिमाह ।
मोत्पद्यतामिति । कुतस्तर्हि द्व्यणुकादौ तदित्यत
आह । नहीति । अग्निसंयोगासमवायिकारणत्वाच्चा-

वेति न नियमः तथा नैमित्तिकद्रवत्वमपि । किन्तु मृदुत्वादिसहकारिसम्भवादन्यत्रापि न तदुत्पत्तिसम्भावना दण्डवारिता । न सत्प्रतिपक्षतापि अस्य च स्वप्रमाणावपि सम्भवात्तत्रापि नैमित्तिकद्रवत्वोत्पत्तिर्न विरुद्धेति सङ्क्षेपः ॥

इतिसुवर्णतैजसवादः ॥

---

स्येति भावः। इष्टापत्तिमुपसंहरति। तस्मादिति। प्रकृतमुपसंहरति तथाचेति । कथमिति । व्याप्यव्याप्यस्य सुतरां व्याप्यत्वादिति भावः । साङ्कर्येण परिहरति मैवमिति । तज्जातिः पृथिवीत्वव्याप्यघृतत्वादिव्यापकजातिः । अयोगेति । अन्यूनातिरिक्तवृत्त्येत्यर्थः । यथा गन्ध इति । व्यवस्थापक इति शेषः । यद्यपि सुरभ्यसुरभिद्व्यारब्धे गुणविरोधेन गन्धानारम्भान्निर्गन्धे पृथिवीत्वस्य न गन्धायोगव्यवच्छेदः तथाप्यापातत इदमुक्तम्। यथा सांसिद्धिकद्रवत्वं जलत्वे इति तु द्रष्टव्यम् । ततः किमत आह । नचेति । तथा च तद्बलकल्प्याया जातेस्तत्राभाव इति भावः। ततोऽपि किमत आह । तथाचेति । अद्रवकाचे घृते च परस्परपरिहारेण वर्तमानयोः काचत्वतज्जात्योः द्रवकाचे सङ्करप्रसङ्ग इति भावः। नन्वग्निसंयोगाभावाद्द्रवत्वानुत्पादेपि काचे स्वरूपयोग्यरूपयोग्यतया सा जातिरस्त्येव । अन्यथा गन्धसमवायि-

पङ्कजादिशब्दानां योग एवेत्येके। योगरूढि-रिति गौतमीयाः। तत्र केवलयोगवादिनामिदमाकूत किमर्थं समुदायकल्पना पद्मत्वप्रतीत्यर्थं कुमुदाद्यप्रतीत्यर्थं वा ? नाद्यः संस्कारादेव तदुपस्थितेः। न च शाब्दी

तावच्छेदकतया निर्गन्धपृथिव्यां पृथिवीत्वमपि न कल्प्येतेति चेत् न। द्रवत्वसमवायितावच्छेदकतया निर्गन्धपृथिव्या इव नैमित्तिकद्रवत्वसमवायितावच्छेदकतया काचादावपि तदकल्पनमित्यत्र तात्पर्यात्। अबाधमुपसंहरति। तस्मादिति। कुतस्तर्ह्याकाशादौ न द्रवत्वमत आह। किन्तु मृदुत्वादिति। अतद्गुणसंविज्ञानबहुव्रीहिणाऽद्रुतमेव विवक्षितम्। अग्रे परमाणौ तत्सम्भवप्रदर्शनविरोधात्। अवयवसंयोगविशेषात्मनो मृदुत्वस्य परमाणावसम्भवात्। न च यथासम्भवमुभयमपीति युक्तम्। अननुगमाद्गौरवाच्चेति॥

इतिश्रीसकलशामन्त—सुवर्णतैजसप्रकरणम्।

पङ्कजादिपदानां योगरूढिस्थापनाय विचारमारभमाणः तदङ्गसंशयजननीं विप्रतिपत्तिमाह पङ्कजादीति। योगोऽवयवपदशक्तिः। एके वैयाकरणाः। रूढिः समुदायशक्तिः। अपरे भाट्टाः। पङ्कपदोत्तरजपदत्वं पद्मत्वशक्त्यवच्छेदकं नवा शाब्दान्वयप्रतियोगित्वप्रवृत्तिस्मारितपदार्थवृत्ति न वेति तज्जन्यसंशये योगमात्रवादिमतमवतारयति। तत्रेति। प्रतीतिः स्मृतिरनुभवो वा।

ह्याकाङ्क्षाशब्देनैव शाम्यतीतिन्यायेन प्रकारान्तरोपस्थितस्य शाब्देऽनुभवेऽनवभासः । अन्यथा पचतीत्युक्ते प्रत्यक्षोपस्थितकलायमादाय कलायं पचतीत्यन्वयबोधप्रसङ्गात् । अत एव पिधेहीत्यत्र द्वारादिपदमध्याहार्यान्वयबोधो नार्थमिति स्वीकुर्वन्तीति वाच्य-

माद्य इत्याह । संस्कारादेवेति । व्युत्पत्तिग्रहापेक्षितया पदत्वनियतशक्त्योपस्थित्या जनिततत्फलबलकल्प्योद्बोधके उद्बोधिनाच्छक्तिनिरपेक्षसंस्काराच्छक्तिस्मृतिवच्छक्यस्मृतेरप्युपपत्तिरिति भावः । द्वितीयं पक्षं दूषयितुमुपपादयति तावत् शाब्दोहीत्यादिना वाच्यमित्यन्तेन । पदविशेषजन्यपदार्थोपस्थितेरेव तादृशपदार्थान्तरोपस्थितिं विना अन्वयापर्यवसानस्यान्वयव्यतिरेकसिद्धत्वात्तथानुपस्थितस्य न शाब्दानुभवेऽन्वयप्रतियोगितयावभास इत्यर्थः । पदजन्यत्वविशेषणे गौरवमाशङ्क्य विपक्षबाधकेन प्रामाणिकतामाह । कलायं पचतीति । कलायकर्मकपाकान्वयबोधप्रसङ्गादित्यर्थः । यद्यपि कलायमात्रस्य प्रत्यक्षोपस्थितावपि कर्मत्वपदार्थानुपस्थित्या न तत्कर्मत्वप्रकारकान्वयानुभवसम्भवस्तथापि पुरुषान्तरोक्तकर्मपदस्मृतं कर्मत्वं प्रकारीभूय संसर्गीभूयैव वा भासेतेति भावः । युक्तिमभियुक्तसंमत्या द्रढयति । अत एवेति । शाब्दोपस्थितेरन्वयबोधाङ्गत्वादेवेत्यर्थः । अन्यथावश्यं कार्याध्याहारमेव

म् । पुरुषान्तरेण कलायमित्यभिधाने स्वयं वा स्मर्यमाणे समानत्वात् । न च तत्र तथा तात्पर्यग्रहादन्वयबोध इति वाच्यम् । प्रत्यक्षोपस्थितकलायेऽपि समानत्वात् । अत एव पिधेहीत्यत्रार्थाध्याहार एव युक्तो लाघवात् । पदाध्याहारेऽपि तदर्था(१)न्वयतात्पर्यकस्य-

स्वीकुर्वीरन्निति भावः । अनुभवत्वमन्यथोपपादयितुं नियममूलं विपक्षबाधकं प्रतिबन्द्या विघटयति । पुरुषान्तरेणेति । अन्यान्वयतात्पर्यक इति शेषः । अन्वयतात्पर्यके त्रिपदसमासवदन्वयबोधस्येष्टत्वात्?। स्मर्यमाणे कलायमिति इत्यनुषज्यते । समानत्वात्तात्पर्यग्रहात् । अन्वयानवबोधस्येति विपरिणतमनुषज्यते । अत एव तदन्वयतात्पर्यग्रहे वधूपदर्शितकलायमादायाऽप्यन्वयबोध इति भावः । तथाचावश्यकस्य तात्पर्यग्रहस्यैव नियामकत्वे सम्भवति कृतं शब्दोपस्थापितत्वनियमेनेति न संस्कारोपस्थितस्य पदार्थस्यान्वयानुभवानुपपत्तिरिति प्रकृतसङ्गतिः । कुतस्तर्हि पदाध्याहार इत्याशङ्क्य न कुतश्चिदस्माकमित्याह अत एवेति । प्रत्यक्षोपस्थापितस्याप्यन्वयबोधविषयत्वादेवेत्यर्थः । ननु पदानुपस्थापितत्वस्याप्यतन्त्रत्वादवधारणे को हेतुरत आह ।

(१) पदार्थान्वय—पा० ३ पु० ।

स्योपजीव्यत्वात् । अत एव शाब्देऽनुभवे(१)सर्वेषां पदार्थानां पदोपस्थापितत्वं तन्त्रमिति न युक्तिमत् । गौरवप्रसङ्गात् । न च शक्तिं विना संस्कारादुपस्थितं शाब्दे बोधे नियमेन न भासत इति साम्प्रतम् । आकाशपदादशक्यस्य संस्कारादुपस्थितस्याकाशत्वस्याकाशं द्रव्यमिति शाब्दे बोधेऽन्वयभानस्वी-

---

लाघवादिति । तदेव दर्शयति पदेति । तात्पर्यविषयान्वयप्रतियोगिप्रतिपादकस्यैव पदस्याध्याहार्यत्वात्तत्र विशेषणतयार्थस्यैव प्रथमोपस्थितेर्लाघवमित्यर्थः । ननु पदजन्यपदार्थोपस्थितेरेवान्वयव्यतिरेकाभ्यां शाब्दानुभवहेतुताया क्लृप्तत्वात्कथं संस्कारोपस्थितपद्रान्वयबोधः शाब्द इत्याशङ्क्य पदजन्यपदार्थोपस्थितिरिष्यत एव किञ्चिदुपस्थितेः शाब्दत्वेनापि तदुपपत्तेः नियमस्तु नेष्यते अप्रामाणिकगौरवादित्याह । अत एवेति । सति तात्पर्यग्रहे प्रमाणान्तरोपस्थापितमर्थम् आदाय पदैरन्वयबोधनादेवेत्यर्थः । ननु शक्त्यभावे नियतोद्बोधसंस्कारजन्यायाः स्मृतेरप्यनियमान्नानुभवे पद्भविषयतानियमः स्यादत आह । नचेति । संस्कारादिति वस्तुस्थितिकथनम् । अशक्यस्यस्यैव तत्पदप्रकरणकानुभवविषयत्वनियमाभावव्याप्तेर्लस्यादौ दर्शनात् ।

---

( १ ) अन्वयबोधे—प० १ पु० ।

कारात् । अन्यथाऽऽकाशपदान्निर्विकल्पकोदय-
प्रसङ्गात् । नापि द्वितीयः । तत्राशक्तेरेव तद-
प्रतिपत्तेः । न हि घटपदादावपि पटाद्यप्रती-
त्यर्थं शक्तिकल्पनम् । न च योगस्य कुमुदादिसा-
धारणत्वात्तत्रापि प्रयोगप्रसङ्ग इति वाच्यम् ।
योगपुरस्कारेणेष्टत्वात् । नहि पङ्कजं शैवालमान-
य पङ्कजं कुमुदमानयेति प्रयोगं कश्चिदपि बाध्य-

---

आकाशेति । व्यक्त्यैक्येनानन्त्यव्यभिचाराभावेनुगमक-
शक्यतावच्छेदकानपेक्षणादाकाशव्यक्तिरेव शक्येति भावः।
ननु तस्यापि नियतभानमसिद्धम् शब्दवदाकाशमिति
सहप्रयोगादत आह । अन्यथेति । व्यक्तिव्यतिरिक्ताना-
मशक्यतया भानानियमे कदाचित्कस्याप्यनुपस्थितौ
निर्विकल्पकप्रसङ्गः एकानुपस्थितिवदन्यानुपस्थितेरपि
सम्भवादिति भावः । वस्तुतः शक्तिं विनापि शक्तेरिव
शक्यस्यापि नियतस्मृतिसम्भवेऽनुभवनियमोऽपि युक्तः ल-
क्ष्यादेरनुभवानियमस्योपस्थित्यनियमप्रयोज्यत्वात् । अ-
न्यथा नानार्थे तात्पर्यविषयस्यापि शक्यतया नियतानु-
भवविषयताप्रसङ्गात्। शक्यानेकोपस्थितौ तात्पर्यं निया-
मकमिति चेत्। शक्योपस्थितावपि तदेवास्तु किं शक्त्ये-
ति । अप्रसक्तप्रतीतिप्रतिबन्धाय शक्तिकल्पनेऽतिप्रसङ्ग
इति व्यतिरेकमुखेनाह । नहीति । अप्रसक्तत्वमेव प्रकृते-
सिद्धमित्याशङ्क्याह । न चेति। हन्तैवं शक्तिकल्पनमनि-
ष्टफलकमेव स्यादित्याह। योगपुरस्कारेणेति । असिद्धिं

तया व्यवहरति । अस्तु वाऽवयवशक्तावेव पद्मत्वमशक्यमेव प्रयोगोपाधिः । यथा हृतिहरिपदे पशुत्वम् यथा वा धेनुपदे गोत्वं शक्त्युपाधिः । तत्र समुदायशक्तेरिव पद्मत्वस्मरणस्य कुमुदादिषु प्रयोगप्रतिबन्धकत्वम् । पङ्कपदोत्तरजपदस्यैव वा । नचप्रतिबन्धात्पद्मत्वोपस्थितिरपि तदा न स्यादिति वाच्यम् कार्यदर्शनेन कुमुदादा-

---

निरस्यति । नन्वेवं पद्मकुमुदयोः पङ्कजपदस्य यौगिकत्वे कुतः कोशेषु पद्मपदपर्यायताकीर्त्तनं पङ्कजपदस्य कुतो वा व्युत्पन्नस्य पद्मबोधे सत्येव कुमुदबोध इत्यस्वरसादाहास्तुवेति । अदृष्टमिदमित्याह । यथेति । पदे पदसमुदाये प्रयोगोपाधिः प्रयोगनियामकं हृतिहरणकर्त्तर्य्यपि मनुष्ये प्रयोगवारकमिति यावत् । ननु हरतेर्हृतिनाशयोः पशाविति व्याकरणादेव कोशादिवच्छक्तिग्राहकात्पशु वविशिष्टे शक्तिरेवेत्यत आह । यथावेति । न ह्यत्रापि गव्यनुशासनमस्तीति भावः । ननु तत्राप्यन्वयव्यतिरेकाभ्यां गोत्वविशिष्टे शक्तिरेवेति दृष्टान्तासिद्धिरित्यरुचेराह । तत्रेति । योगस्योभयत्र तुल्यतया पद्मत्वस्मरणकाले कुमुदप्रियस्य कुमुदस्मरणेन तत्प्रतिबन्धे कुमुदे प्रयोगापत्तिरित्यत आह । पङ्केति । गोबलीवर्द्दाविवत्यादौ बलीवर्द्दसमभिव्याहृतगोपदस्य ब-

वेव प्रतिबन्धकल्पनात्। एवमप्युपपत्तौ शक्तिकल्पने गौरवप्रसङ्गात्। अथावयवशक्तावेव कौट्यं वा कल्प्यताम्। न च घटपदादावपि घटत्वादेः प्रयोगोपाधित्वप्रसक्तौ प्रकारे क्वचिदपि शक्तिर्न स्यादिति वाच्यम्। घटपदादेर्निर्विकल्पकोदयप्रसङ्गात्। ननु यथा घटमानयेति वृद्धवाक्यात्प्रयोज्यप्रवृत्तिमुपलभमानो बालस्तस्य घटकर्मकानयनाऽनुभवमनुमिनोति तत्र चावापोद्वापक्रमेण घटत्वप्रकारकघटान्वयानुभवजनकत्वं घटपदस्यावधारयति एवमानयपदेपि तथा पङ्कजमानयेति वाक्यादपि प्रयोज्यवृद्धस्य पङ्के प्रवृत्त्युपलम्भात्पङ्कत्वप्रकारकपङ्कमान्व-

---

लीवर्द्दस्मरणा इवेति भावः। एवकारेण प्रथमोपस्थितिलाघवेन तत्र प्रतिबन्धकत्वकल्पनस्यौचित्यम् सूचयति। पदस्य प्रतिबन्धकस्वभावत्वेतिप्रसङ्गमाशङ्क्याह। कार्येति। कार्यान्नेयधर्माणां यथा कार्यमुन्नयनादिति भावः। नन्वक्लृप्तकल्पनापेक्षया शक्तिकल्पनैव युक्तेत्यत आह। एवमपीति। क्लृप्तस्य प्रतिबन्धकतास्वभावकल्पने धर्मकल्पनालाघवादिति भावः। ननु पङ्कादोत्तरजपदस्य प्रतिबन्धकत्वे लक्षणयापि कुमुदे पङ्कजपद-

यबोधजनकत्वं पङ्कजपदस्य विचारयति । न च तत्प्रकारकतदन्वयानुभवजनकत्वात् तत्प्रकारकतया तत्स्मरणजनकत्वाद्वा अन्यत् पदस्य शक्तत्वं नामेति । नैवम् । न हि यद्विषयोऽनुभवो येन पदेन जन्यते तत्र तस्यावश्यं शक्तिकल्पनम् संसर्गांशेऽपि शक्तिकल्पनप्रसङ्गात् । न चा-

प्रयोगो न स्यादित्यत आह । अवयवशक्त्यैवेति । केऽयं सङ्कोचः पद्मत्वस्य शक्युपाधितापक्षेऽतिप्रसङ्गमाशङ्क्य निराचष्टे । न चेति । यत्र विपक्षे बाधकं तत्रास्तु शक्तिर्न सर्वत्र गौरवादित्याह । घटपदादेरिति । इति तु योगार्थसंसर्गगोचरतयैव तन्निरासस्सम्भव इति भावः । शक्तिग्राहकस्योभयत्र तुल्यत्वे विनिगमकाभावाद्घटादिपदानां घटादाविव पङ्कजपदस्य पद्मत्वे शक्तिसिद्धिरिति शङ्कते । ननु यथेति । वाक्यादिति प्रवृत्तौ हेतुत्वे पञ्चमी । प्रकृते योजयति । तथेति । अनुभावकत्वं सिद्ध्यतु शक्तिसिद्धौ किमागतमत आह । न च तत्प्रकारकेति । अन्वयपदमनुभववत्तोपपादनाय विषयाधिक्यं दर्शयितुम् प्रकारविशेषशक्तत्वस्य लक्ष्यत्वाभिप्रायेण तत्प्रकारकपदं लाक्षणिकं चाननुभावकमिति नातिव्याप्तिरिति भावः । तत्स्मरणेति । अत्र हि लाक्षणिकातिव्याप्तिर्दोषो बोध्यः । न च नियमत इति विशेषणात्तन्निरासः । अव्युत्पन्ने व्यभिचारेणासिद्धेः । व्युत्पन्नं

निरताभिधानवादिनोऽत्रेष्टापत्तिः । अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात् । न च तत्प्रकारकतद्विषयकानुभवजनकत्वम् एवम्भूतस्मरणजनकत्वं वा शक्तत्वम् । गङ्गापदादेस्तीरत्वादिप्रकारकतीरादिविषयकानुभवजनकत्वेन तत्र शक्तिप्रसक्तौ लक्षणामात्रोच्छेदप्रसङ्गात् । तद्विषयकज्ञानजनकत्वाप्रतिसन्धानेपि देवदत्तादिपदादसौ बोद्धव्य इत्यभिप्रायप्रतिसन्धानादप्यर्थोपस्थितेर्दर्शनात् । सर्वत्र तु तत्तदर्थविशेषेऽभिप्रायविशेषविषयत्वमेव तत्तत्पदानां

प्रतीतिचासिद्धत्। शक्त्यसिद्धिदशायां गृहीतशक्तिकत्वापरपर्यायस्य तस्य दुर्ज्ञानत्वात्।अन्यदिति । पदार्थान्तरमीश्वरसङ्केतो वेत्यर्थः । तज्ज्ञाने नैयायिकमीमांसकयोः पदार्थप्रत्यये व्यभिचारेणाकारणत्वात् । तदनुपयुक्तायाश्च शक्तित्वस्य परिभाषामात्रत्वात् । न च तदभावेऽनुभावकत्वस्यैवानुपपत्तिः असम्बद्धानुभवेतिप्रसङ्गादिति वाच्यम्। पूर्वपूर्वतज्ज्ञानविषयत्वस्यैव सम्बन्धत्वत्।तस्य चानादित्वादिति भावः । किं जनकतावच्छेदकत्वेनाभ्युपगतायाः शक्तेस्तन्नियततामात्रेण तादात्म्यव्यवहारः उत वस्तुत इति विकल्प्याद्ये तदनुभवजनकत्वमिव तदन्वयानुभवजनकत्वमपि न शक्तिनियतम् अन्यलभ्यत्वाविशेषेणाप्रयोजकत्वादित्याशयेनानुभवजनकत्वस्य व्यभिचारमाह न हि यद्विषय इति । अनन्येति ।

तथा च तयैव युक्त्या सोऽन्वयशक्तिं त्याजयितव्य इति भावः । द्वितीय आह । नचेति । गङ्गापदादेरिति । लाक्षणिकस्याप्यनुभावकत्वमभिप्रेत्येदम् । ननु स्वशक्त्या- न्वयानुभवजनकत्वं पदानामिति लाक्षणिकमननुभावक- मेव किन्तु लक्षणास्मारिततीराद्यन्वयानुभावकत्वं घोषा- दिपदस्यैव तच्च शक्तमेवेत्यत आह । तद्विषयकेति । तथा चाधुनिकसङ्केतस्थले तद्ग्रहात्पूर्वं तद्विषयज्ञान- जनकत्वज्ञानासम्भवाद्व्यभिचार इत्यर्थः । सर्वत्रेति । शाब्दबोधसामान्ये सङ्केतग्रहस्य कारणत्वे बाधकाभावा- दिति भावः । ननु देवदत्तादिपदे सङ्केतज्ञानस्य कारण- तावधारणात्पूर्वं गवादिपदेषु सङ्केतकल्पकप्रमाणा- भावादर्थप्रतीतेश्चानुभवसिद्धत्वाद्व्यभिचारेणेदं न हेतुः किन्तु तद्विषयानुभवजनकत्वज्ञानमेव । न च देवदत्तादि- पदे व्यभिचारान्न तदपीति वाच्यम् । एतदर्थज्ञानमेत- त्पदजन्यत्वेनेच्छाविषय इति सङ्केतज्ञाने तृतीयार्थस्य प्रकारत्वेनार्थज्ञाने पदजन्यत्ववैशिष्ट्यभानस्यावश्यक- तया पदेऽपि तज्जनकज्ञानसम्भवात् इति चेन्न । सङ्के- तत्वेन रूपेण ज्ञानस्य हेतुत्वानभ्युपगमेन तेन रूपेण व्यभिचारज्ञानेऽप्यदोषात् । तद्धीजनकतावच्छेदकत्वा- दिना तज्ज्ञानस्य पूर्वमपि गवादिपदेऽपि सम्भवेन व्यभि- चाराभावात् । अन्यथा लाघवावतारात्पूर्वं भेदाग्रहा- देव प्रवृत्तिरासीदिति व्यभिचाराद्विशिष्टज्ञानं न त- द्धेतुः सिद्ध्येत् । अथ लाघवादवधारणमात्रमिदानी-

शक्तत्वम् । न च पदानुपस्थितस्यापि शाब्दसंसर्गावगमविषयत्वे लक्षणोच्छेदप्रसङ्ग

सेव विशिष्टज्ञानं तु स्वकारणायातं पूर्वमपीति न व्यभिचारस्तदा देवदत्तादिपदे तद्धेतुताग्रहे गवादिपदेपि तद्धीजनकतावच्छेदकत्वादिना रूपेण स्वकारणाधीनं तदाधीदेवेति कल्पनान्न व्यभिचार इति तुल्यम् । नापि पूर्वोक्तरीत्याऽनुभवजनकत्वज्ञानस्याप्यव्यभिचारः। एतदर्थज्ञानमेतत्पदजन्यमेवैतज्ज्ञानविषय इत्यादौ ज्ञानप्रकारकतयाक्षिप्तवैशिष्ट्यभानेपि पदात्तदर्थप्रत्ययप्रसङ्गेनेदं पदमेतदर्थानुभवजनकमिति स्वातन्त्र्येण पदेऽनुभवजनकत्ववैशिष्ट्यज्ञानस्य हेतुतायाः परेणाभ्युपेयत्वात्तस्य चाधुनिकसङ्केतग्रहस्थले व्यभिचारोपदर्शनादिति दिक् । नन्वपभ्रंशादर्थबोध ईश्वरेच्छास्ति न वा? आद्ये शक्त्यारोपात्ततोर्थप्रत्यय इति सङ्केतभङ्गः। द्वितीयेऽर्थबोध एव न स्यात्सामान्यहेतोरभावादिति चेत्। अस्त्येव सा न तु तत्र जनकतावच्छेदिका मानाभावात्। किन्तु स्वातन्त्र्येणैवेतरकार्येष्विव जनिका साधुपदेषु तु जनकतावच्छेदिका जनिका वा धर्मोपजननोपयोगानुपयोगाभ्यां तथा व्यवस्थाकल्पनादित्याहुः। ननु वृत्त्यानुपस्थितस्य शाब्दान्वयप्रतियोगितावगमविषयत्वेन लक्षणोच्छेदः संस्कारोपस्थितेनैव तीरादिनान्वयानुभवसम्भवादित्याशङ्क्याह। न चेति।प्रकार्युपस्थापकत्वेन लक्षणास्वीकारो न प्रकारोपस्थितयेऽ-

इति वाच्यम् । प्रकारस्यान्यथोपस्थितस्यापि भानाङ्गीकारात् । कथमन्यथा जलाहरणप्रस्तावे घटमानयेत्यत्र छिद्रेतरघटत्वेनान्वयबोधः । छिद्रेतरत्वस्याशक्यत्वात् । न चात्र लक्षणा युगपद्वृत्तिद्वयविरोधात् । नचाऽजहत्स्वार्था सा शक्याशक्योपग्राहकस्य रूपस्यानुपस्थितेः ।

तथापि तज्ज्ञानसम्भवादित्याह । प्रकारस्येति । अन्वयप्रतियोगितावच्छेदकस्येत्यर्थः । असद्विषयताभङ्गीकारस्य निरस्यति । कथमन्यथेति । अस्तूपस्थितिः किन्तु वृत्त्यैव सेत्याशङ्क्य क्रमेण वृत्तीर्निराचष्टे । छिद्रेतरेति । गौरवादिति भावः । युगपदिति । भिन्नकालीनसामग्रीकत्वेन द्वयोरेकदानुपस्थापकत्वेन सकृत्प्रयुक्तः शब्दो मुख्यवृत्तिर्जघन्यवृत्तिर्वा भवतु नोभयवृत्तिरिति भावः । ननु काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदादजहत्स्वार्थलक्षणया शक्याशक्यकाककुक्कुरादिबोधवद्घटच्छिद्रेतरत्वबोधः स्यादित्यत आह । न चाजहदिति । जहति स्वार्थं यस्यां पदानीति वैयधिकरण्येपि गमकत्वाद्बहुव्रीहौ नञ्समासः । शक्येति । तत्र दध्युपघातकत्वादिवदिति शेषः । यद्यपीहापि तदुभयवैशिष्ट्याधारत्वं रूपमस्त्येव तथाप्यजहत्स्वार्थापरमुभयताधारतालक्ष्यतावच्छेदकप्रकारकज्ञानं न चेह तथेत्याह । अनुपस्थितेरिति । प्रकारीभूयेति शेषः । अशक्यत्वसंस्का-

न च शब्दसम्बन्धमनपेक्ष्य संस्कारमात्रोपस्थितस्य पङ्कजमानयेत्यत्रान्वये पद्मत्वव्यापकानां द्रव्यत्वादीनामप्यन्वयः स्यादिति वाच्यम् । शब्दसम्बन्धोपगमेपि संस्कारप्राकट्यस्यावश्योपजीव्यत्वात् तदेवास्तु नियामकं कृतं शब्दसम्बन्धकल्पनया । न च गङ्गायां घोष इत्यत्रापि संस्कारादेव तीरविशेषप्रतीत्युपपत्तौ न वृत्त्यन्तरकल्पना ज्यायसीति वाच्यम् । गङ्गापदोपादानयोरविशेषे पद्मत्वानुभवे विनिगमकतया शक्यसिद्धिरित्याशङ्क्य निराचष्टे । न च शब्दसम्बन्धमिति । प्राकट्येनैव विनिगमकान्यथासिद्धेर्न शक्तिरित्याह । शब्दसम्बन्धेति । असति प्राकट्ये शब्दादपि पदार्थस्मरणाभावेन तस्यावश्यकत्वात्प्रकृते च पद्मत्व एव तन्न द्रव्यत्वादौ फलबलकल्प्यत्वात्तस्येति भावः । नन्वेवं प्रकारिण्यपि न लक्षणा तस्यापि प्रकारवदन्यथा भानसम्भवादिति सैव लक्ष्योच्छेदापत्तिरिति आह । न च गङ्गायामिति । न तीरस्मरणानुपपत्त्या लक्षणाकल्पना अपि त्वाक्षिप्योक्तगङ्गापदसमभिव्याहारान्यथानुपपत्त्या पदानां सम्भूयकारित्वस्य व्युत्पत्तिसिद्धत्वादित्याह गङ्गापदेति । तत्किं यदप्रतिसन्धाने यत्पदवैयर्थ्यं तत्तल्लक्षकमेव तथा सति गङ्गायां मीना इत्यत्रापि कुतो न लक्षणेत्यत

वैयर्थ्यात् अशक्यतात्पर्यकत्वस्यैव तत्त्वात् । तस्य च पुरुषेच्छाधीनस्याशक्यानियमत्वात् । यद्वा-पङ्कजादीनां सामान्यशब्दानां तत्र तत्र तात्पर्यसहायानामेव विशेषबोधकत्वमस्तु कृतं समुदायकल्पनया । कथमन्यथा कुमुदेऽपि प्रयोगः । लक्षणयेति चेत् । मम तु मुख्यतयेति महान्विशेषः ॥

आह । अशक्येति । शक्यसम्बन्धिनि तात्पर्यस्येत्यर्थः । यद्यपि गच्छ गच्छसि चेत्कान्तेत्यादावशक्यस्मरणतात्पर्यकत्वेऽपि न लक्षणा अनुमानादपि तन्निर्वाहात्तथाप्यसति गत्यन्तरे तात्पर्यस्य लक्षणाकल्पकत्वं विवक्षितम् । ननु गत्यन्तरविरहिण्यर्थे तत्प्रतीक्षयोच्चारणमेव कथमित्यत आह । तस्य चेति । घटादिपदानां विशेषतात्पर्यसाहाय्येन नीलघटादिबोधकत्ववत्पङ्कजपदस्यापि पङ्कजनिकर्तृविशेषपद्मतात्पर्यग्रहसाहाय्येन पद्मान्वयबोधकत्वसम्भवादपि न तत्र शक्तिरिति ऋजूनां मतमाह । यद्वेति । नन्वेवं पङ्कजनिकर्तृत्वेनैव तदुपस्थितिः स्यान्न पद्मत्वेनेत्याशङ्क्य विपक्षबाधकेनेष्टापत्तिं द्रढयति । कथमन्यथेति । रूढ्युपस्थिते पद्मत्वबाधे लक्षणया तदुपपत्तेर्न पद्मत्वानुपस्थितिरित्याशङ्कते लक्षणयेति । वृत्तिं विनैव कुमुदबोधसम्भवान्न तत्र लक्षणेत्याह । मम त्विति । मुख्ययावयवशक्त्या तात्पर्याकाङ्क्षादिसकलतत्कारणसमवहिततया तथैव वाक्यार्थविधया कुमुदबोधसम्भवादिति भावः ।

अत्रोच्यते । पङ्कजमानयेति वाक्यश्रवणानन्तरं पद्मानयनं कुर्वतः प्रयोज्यवृद्धस्य पद्मानयनानुभवो निश्चीयते । तत्र संस्कारमात्रवशात् पद्मत्वभाने नियमतः कल्प्यमानेऽव्युत्पन्नस्यापि तथाभानप्रसक्तौ किं नियामकमध्यवसितमायुष्मता । दृश्यते चात्र व्युत्पत्तिग्रहापेक्षा । कथमन्यथा प्रत्येकं व्युत्पन्नस्य पुंसः

सिद्धान्ताभिधानं प्रतिजानीते अत्रोच्यत इति । पद्मानुपजननेऽव्युत्पत्तिग्रहापेक्षान्यथानुपपत्तिं समुदायशक्तौ प्रमाणयितुं भूमिकामारचयति । पङ्कजमित्यादिना । निश्चीयतामनुभवो न तावता शक्तिसिद्धिः संस्कारोपस्थितं तदादायान्वयानुभवोपपत्तेरित्याशङ्क्याह । तत्रेति । अनुभव इत्यर्थः । संस्कारः तज्जन्या स्मृतिः । भानं विषयभावः । अव्युत्पन्नस्य अगृहीतसमुदायशक्तेः अनुभूतपद्मत्वस्येति शेषः । तथाभानम् पद्मत्वप्रकारकभानम् । नियामकम् निवर्तकम् । पङ्कोत्तरजपदग्रहस्येव संस्कारोद्बोधकत्वस्य त्वया वाच्यत्वात्तस्य च व्युत्पत्त्यग्रहेऽपि सत्त्वादिति भावः । अस्त्येव भानं किं नियामकेनेत्यत आह । दृश्यते चेति । अत्र पद्मत्वप्रकारकानुभवे । व्युत्पत्तिः समुदायशक्तिः । प्रतीतिकलहं निरस्यति । कथमन्यथेति । समुदायशक्तिग्रहे विलम्बात्तत्र न पद्मानुभवविलम्बः किन्त्ववयवशक्तिग्रहविलम्बादेवेति शङ्कमानं प्रत्याह । प्रत्येकं व्युत्पन्नस्येति ।

पङ्कजमानयेति श्रुतवतो न पद्मानयनानुभवः यथा समुदायव्युत्पन्नस्य । कथञ्चान्यथा पद्मादिपदेन पङ्कजपदस्य पर्यायताकीर्तनम् कोशाहाराणाम् । प्रत्येकाव्युत्पन्नस्य वा कथं पङ्कजशब्दात्पद्मत्वप्रतीतिः । न चान्वयप्रतियोगिप्रति-

---

पद्मानुभवः पङ्कजनिकर्तृत्वेनेष्यत एवेत्याशङ्क्याह । यथेति । पद्मत्वप्रकारकपद्मानयनानुभवः कुतो न स्यादिति पर्यवसितार्थः । कोशोपि समुदायशक्तौ मानमित्याह । कथं चान्यथेति । यद्वा ननु तदन्वयतात्पर्यग्रहे भवत्येव तथानुभवः तदग्रहे तु तत एव न स्यादित्यरुचेराह । कथं चान्यथेति । ततः पद्मत्वप्रकारकानुभवाभाव इत्यर्थः । समानप्रवृत्तिनिमित्तकत्यस्यैव पर्यायपदार्थत्वादिति भावः । नन्वेवं द्विरेफादिपदेष्वलिपर्यायताकीर्तनात्कीटविशेषे शक्तिकल्पनाप्रसङ्ग इत्यरुचेराह । प्रत्येकेति । अगृहीतावयवशक्तेः पङ्कजपदात् पद्मत्वप्रकारकभानं समुदायशक्तौ मानमित्यर्थः । नन्वावापोद्धारकल्पनापूर्वं घटमानयेति वाक्यजन्यप्रवृत्तिदर्शिनो घटानयनप्रतीतेस्तत्र कुतो न शक्तिस्तदानीं शक्तिभ्रमेप्यग्रेन्यलभ्यताप्रतिसन्धानात्त्यज्यत इति चेदिहापि तुल्यमित्यस्वरसादेतत्परित्यज्याधाच्छब्दस्य पद्मत्वस्य नियतशाब्दबोधविषयतानुपप-

यं गितावच्छेदकयोः शब्दानुपस्थितयोः संस्कारप्राबल्यात् शब्दानुभवविषयभावो नियमेन युज्यते । घटगोचरप्रबलसंस्कारवशादासादितघटस्मरणस्य घटाव्युत्पन्नस्य घटमानयेति वाक्यश्रवणानन्तरं घटानयनबुद्धिप्रसङ्गात् । न चाकाशादिप्रतिपन्निदग्रहो युक्तः । नियमेन तत्र शब्दसमवायिकारणत्वस्य स्मरणात् । तत्र कदाचिद्दृष्टद्रव्याभिन्नत्वं कदाचिच्च शब्दसमवायित्वं संस्कारवशाद्भासते अत्र तु व्युत्पन्नस्य पद्मत्वं नियमेन भासते इति महान्विशेषः । शक्तिरेव तत्रापीति केचित् । न च

---

त्तिमेव समुदायशक्तिसाधकमवलम्ब्य तत्रोक्तामन्यथोपपत्तिं निराचष्टे । न चेति । घटाव्युत्पन्नस्येतीष्टापत्तिवारणाय । यद्यपि तात्पर्यज्ञाने इष्टापत्तिस्तदभावे च तत एव न प्रसङ्गस्तथापि तत्कारणत्वमप्यग्रे दूष्यमेवेति हृदयम् । ननु कथं तर्ह्याकाशपदान्नियमेन शब्दाश्रयत्वभानमत आह । न चाकाशेति । कदाचिदिति । अशक्यत्वे एकमात्रसंस्कारोद्बोधे नियामकाभावादिति भावः । ननु पद्मत्वमपि प्रत्येकमात्रव्युत्पन्नस्य न भासत इति नियमासिद्धिरित्यत आह । अत्र व्युत्पन्नस्येति । गृहीतसमुदायशक्तेरित्यर्थः । महान्विशेष इति तथा चाभ्युपगमदोषतौल्याभावान्न प्रतिबन्दि-

पशुत्वगोत्वयोः प्रयोगोपाधित्वं शक्त्युपाधित्वं घटादिपदे घटत्वादेरपि तथाभावप्रसङ्गात् । न च तस्मान्निर्विकल्पकोदयभिया तथा नाङ्गीक्रियत इति वाच्यम् । उपाधिभूतेन घटपटत्वादिना(१) संस्कारोपस्थितेन प्रकारेण निर्विकल्पकोदयनिरासस्य शक्यभाषणत्वात् । तस्मात्परिभाषैवैषा प्रयोगोपाधिः शक्त्युपाधिर्वे-

सम्भव इति भावः । नन्वाकाशादिपदाच्छब्दसमवायित्वादिभाननियमानभ्युपगमे कदाचिदेकस्यैवापरस्यापि दैवादनुपस्थितौ निर्विकल्पकप्रसङ्ग इति मन्वानानां मतमाह शक्तिरेवेति । नहि यस्यावच्छेदकत्वानभ्युपगमे दोषः तदेव शक्यतावच्छेदकमपि तु नियमेन यत्प्रकारिका प्रतीतिः पदात्तदेवेति भावः । प्रयोगोपाधित्वं शक्त्युपाधित्वं चातिप्रसङ्गेन दूषयति न च पशुत्वेति । ननूक्तम् घटादिपदान्निर्विकल्पकप्रसङ्गस्तत्र बाधक इति तत्राह न च तस्मादिति । शक्यभाषणत्वादिति । भवन्मत इति शेषः । न च कदाचित्संस्कारानुद्बोधादनुपस्थितौ तदापत्तिरिति वाच्यम् । उपाधेः शक्यतुल्यतया नियतोपस्थितेरविशेषादिति भावः । परिभाषेति । निर्युक्तिकाभिधानमित्यर्थः । कुमुदादिप्रयोगप्रतिबन्धस्य पङ्कस्मरणादिभिरुक्तामन्यथासिद्धिं निरस्यति । न चेति ।

(१) घटत्वादिना—पा० ३ पु० ।

ति । न च कुमुदादौ प्रयोगवारणार्थं पद्मत्वस्मरणस्य प्रतिबन्धकत्वं पङ्कोत्तरजशब्दस्य वा शक्तिकौट्यं वा कल्प्यताम्(१) । अव्युत्पन्नस्य पङ्कजपदात्पङ्कजनिकर्तृत्वेन रूपेण कुमुदादिबोधदर्शनात् । अत एवाव्युत्पन्नः पङ्कजमानयेति-वाक्यश्रवणानन्तरं कुमुदाद्यानयने दोलायते । न च सामान्यशब्दत्वादमीषां विशेषतात्पर्यवशाद्विशेषबोधजनकत्वमिति वाच्यम् । विशेषबोधकत्वं वस्तुगत्या यो विशेषस्तद्वाचकत्वं वा विशेषप्रकारेण वा । नाद्यः पद्मत्वानुभवापातात् । नेतरः स हि विशेषः शक्तिगोचरो न वा । नाद्यः विवादपर्यवसानात् । नेतरः लक्षणापातात् । न चात्रेष्टापत्तिः । मुख्यार्थ-

अव्युत्पन्नस्येति । अगृहीतपद्मशक्तेरित्यर्थः । अवयवव्युत्पन्नस्य प्रबलसंस्काराहितपद्मगोचरस्मरणेन पङ्कपदोत्तरजपदग्रहेण शक्तिकौट्येन वा प्रतिबन्धप्रसङ्गः तु तन्न स्यादिति भावः । स्वोक्तेऽनुभवं प्रमाणयति । अत एवेति । अन्यथा नियतपद्मस्मरणादिना कुमुदोपस्थितेरेव प्रतिबन्धे तत्कोटिकसंशयानुपपत्तिरिति भावः । सामान्यशब्दत्वपक्षमपि विकल्पानुपपत्तिव्यभिचार-

(१) कल्पनीयम्—पा० १ पु० ।

विशेषितस्य पद्मत्वस्य भानात् । वाक्ये न लक्षणेत्यप्याहुः । तात्पर्याप्रतिसन्धानेऽपि पङ्कजमानयेति वाक्यार्थबोधात्पद्मानयनबाधावधारणाच्च । अन्यथा घटपदादिशब्दानामपि सामान्यशब्दत्वमेवास्तु । तत्तद्विशेषतात्पर्यवशात्तत्तद्विशेषबोध उत्पत्स्यत इति ब्रुवाणं को वारयिता स्यात् । न च पङ्कजं कुमुदमानये-

प्रतिबन्दिभिर्दूषयितुम् विकल्पयति तावत् विशेषबोधेति । मुख्यार्थेति । पङ्कजनिकर्तृत्वविशिष्टस्य पद्मत्वस्येत्यर्थः । तथा च युगपद्वृत्तिद्वयविरोध इति भावः । न च गङ्गायां मीनघोषावित्यादावुभयतात्पर्यग्रहे वृत्तिद्वयस्वीकारवदिहापि स्यादिति वाच्यमित्याह । विशेषितेति । तत्रैव तस्य दोषत्वाभ्युपगमादिति भावः । पद्मत्वस्येत्यसम्बन्धिकतोपदर्शनम् राजपुरुष इत्यादौ मुख्यार्थविशेषितसम्बन्धभानस्य लक्षणया स्वीकारेण सम्बन्धिके तस्य दोषत्वानभ्युपगमात् । मतान्तरमाह । वाक्य इति । शक्याभावेन तत्सम्बन्धासम्भवादिति भावः । चित्रगुरित्यत्रान्यतरपदेऽन्यपदार्थलक्षणावदिहाप्युपपत्तिरित्यनुशयेनाह । इत्यप्याहुरिति । तात्पर्यज्ञानस्य व्यभिचारमाह । तात्पर्येति । प्रतिबन्दिमाह । अन्यथेति । को वारयितेति । विनिगमकाभावादिति भावः । समुदायशक्तिपक्षे कुमुदे लक्ष-

त्यत्र पङ्कजपदे लक्षणा किन्तु पद्मत्वमुपस्थितमप्ययोग्यतया नान्वेतीति न किञ्चिदनुपपन्नम्। यदुक्तम्—प्रत्यक्षोपस्थितेनापि कलायेन तात्पर्यग्रहं सहकारिणमासाद्य कलायं पचतीत्यत्रान्वयबोध इति तत्तदा शोभेत यदि तात्पर्यग्रहस्य वाक्यार्थप्रतिपत्त्यावङ्गत्वमीक्षामहे। तदेव तु नास्ति प्रमाणाभावात्। प्रत्युत तात्पर्य-

---

णाप्रसङ्गं परिहरति। न च पङ्कजं कुमुदमिति। अयोग्यतयेति। कुमुदकर्मकानयनेऽयोग्यत्वादित्यर्थः। न च रूढ्या शीघ्रोपस्थितेन पद्मेनावरुद्धतयोपस्थितस्य पङ्कजनिकर्तृत्वस्य कुमुदान्वये निराकाङ्क्षत्वात् स्वतन्त्रोपस्थितये लक्षणावश्यम्भाव इति वाच्यम्। योगार्थस्य रूढ्यर्थविशेषणतायां तथाभावेपि विशेष्यतायां स्वातन्त्र्यानपायात्। अन्यथा श्येनेन यजेतेत्यत्र कृतिसाध्यत्वे सतीष्टसाधनत्वमेव योग्यतयान्वेति न बलवदनिष्टाननुबन्धित्वमयोग्यत्वादिति सिद्धान्तभङ्गप्रसङ्गः। अत एव गौर्नित्य इत्यत्र लक्षणानुरोधो न तु गौरनित्य इत्यत्रेति वदन्ति। अशाब्दस्याप्य तात्पर्यग्रहे शाब्दबोधविषयत्वमित्युक्तं दूषयितुमनुवदति। यदुक्तमिति। न साधकाभावमात्रं प्रत्युत बाधकमप्यस्तीत्याह प्रत्युतेति। तथा च व्यभिचारादकारणे तात्पर्यज्ञाने कारणताग्राहकं बाधितमिति भावः।

मस्य ज्ञायते नाऽस्माद्वाक्यादयमर्थस्तावदवगम्यत इति विचिन्त्य परावृत्य कुत्रास्य तात्पर्यमिति पृच्छति प्रयोज्यवृद्ध इति। न च लक्षणास्थले तात्पर्यग्रहस्य कारणतावधारणादन्यत्रापि तत्कारणत्वमिति वाच्यम्। तत्र हि पदार्थोपस्थित्यनुकूलत्वं तात्पर्यज्ञानस्य तावता विना तत्र पदार्थोपस्थितिरेव न भवति। न तु वाक्यार्थप्रतिपत्त्यनुकूलत्वम् अत एव तत्र तात्पर्यं पदार्थमात्रे न तु वाक्यार्थे। तथा च पुरुषान्तरोदी-

ननु तात्पर्यज्ञानाविष्करणप्रश्नस्य विशेषतात्पर्यविषयत्वेन सामान्यतस्तत्सत्त्वान्न व्यभिचारो न च प्रमाणाभावोऽनुमानस्यैव तत्त्वादित्याशङ्क्याह। न चेति। अन्यत्रापीति। वाक्यार्थप्रतीतित्वेनेति शेषः। दृष्टान्तं साध्यवैकल्येन विघटयति तत्र हीति। ननु किमत्र विनिगमकमत आह। तावता विनेति। तथा चान्वयव्यतिरेकाभ्यां लाक्षणिकपदार्थोपस्थितावेव तात्पर्यज्ञानं हेतुरिति भावः। न तु वाक्येति। सत्यां पदार्थोपस्थितौ तात्पर्यग्रहविलम्बेन वाक्यार्थानुभवे विलम्बानुपलब्धेरिति भावः। उक्तेऽभियुक्तसंमतिमाह। अत एवेति। ननु पुरुषान्तरोदीरितकलायपदार्थोपस्थितावपि तात्पर्यग्रहाग्रहाभ्यामन्वयबोधाबोधदर्शनाद्वाक्यार्थानुभवेपि तद्धेतुरित्याशङ्क्याह। तथा चेति।

रितकलापपदेन वा स्वयं स्मृतेन पचतीत्यस्य समभिव्याहारप्रतिसन्धाने भवत्येवान्वयबोधः यथा नानापुरुषेण खण्डशः क्रियमाणे श्लोके इति युक्तमुत्पश्यामः । किञ्च द्वारं पिधेहीत्यत्र शब्दादन्वयबोधस्य(१) तदुपस्थापकपदजन्यत्वद-र्शनादन्यत्रापि तथा कल्पने लाघवात् । अपि च विभक्तिविशेषसमभिव्याहारविशेषमासाद्यैव परं पदानामनुभावकत्वम् । तथैवाकाङ्क्षादिदर्शनात्

समभिव्याहारेति । तथाच सति तत्सदसत्त्वाभ्यामेव तौ न तात्पर्यग्रहसदसत्त्वाभ्यां योग्यतादिमच्छब्दसम-भिव्याहारप्रतिसन्धानस्यैव शाब्दबोधप्रयोजकत्वादिति भावः । असांङ्गत्यिकतां निरस्यति । यथेति । उपोद्घात-सङ्गत्या शब्दाध्याहारं साधयति । किञ्चेति । अन्यत्रेति । विवादपदं द्वारान्वयबोधो द्वारोपस्थापकपदजन्यः शा-ब्दद्वाराऽन्वयबोधत्वात्सम्प्रतिपन्नवदित्यनुमानादित्य-र्थः । अनुग्राहकमाह लाघवादिति । कॢप्तत्वलाघवादि-त्यर्थः । अर्थाध्याहारपक्षे तु भावकसामग्रीविरहादन्वय-बोधविरहात्परिशेषादपि शब्दाध्याहारसिद्धिरित्याह अपिचेति । विनिगमकमाह । तथैवेति । विभक्तिवि-शेषार्थान्वयप्रकारककर्मत्वाद्यन्वितत्वयैव किमित्याद्या-कारेणाकाङ्क्षानुभवादित्यर्थः । विपक्षे बाधकमाह ।

(१) शब्दद्वाराऽन्वयबोधस्य=पा० ३ पु० ।

अन्यथा गामानयेत्यत्रैव गौः कर्मत्वमानयनं कृतिरित्यत्रान्वयबोधप्रसङ्गात्। एवं सर्वपदार्थानामेव पदोपस्थापितत्वं तन्त्रमिति युक्तिमत्(१) प्रमाणवतो गौरवस्यापि न्याय्यत्वादिति न्यायात्। यद्वा पदोपस्थापितपदार्थत्वमेव तन्त्रम् न तु सर्वत्वं तन्त्रम्। किन्तु सङ्कोचकाभावात्पदार्थमादाय विश्राम्यतीत्यलमतिपीडया। तस्मात्पदाध्याहार एव युक्तो नार्थाध्याहार इति। तस्मात्पङ्क-

अन्यथेति। अन्वयप्रतियोग्युपस्थित्यविशेषादिति भावः। एवञ्च य एव पदार्थो न शाब्दः स्यात्तदंश एवाकाङ्क्षाद्यसम्भवेनान्वयबोधानुपपत्तेर्बाधकाद्गौरवस्य प्रामाणिकत्वे यावदन्वयप्रतियोग्युपस्थितेः शाब्दत्वं शाब्दबोधे तन्त्रमित्याह। एवञ्चेति। तुष्यतु दुर्जन इति न्यायेनाह। यद्वेति। अतो न गौरवं सर्वत्वस्योपश्लिष्टत्यप्रकारत्वादिति भावः। कुतस्तर्हि तत्सिद्धध्येदत आह किन्त्विति। विश्राम्यतीति। पर्यवस्यतीत्यर्थः। न च पर्यवसितेऽर्थे गौरवम् क्षितिसकर्तृकत्वानुमानाद्युच्छेदप्रसङ्गादित्याह। अलमिति। पदाध्याहारमुपसंहरति। तस्मादिति। नार्थेति। अन्वयबोधानङ्गत्वेनोपजीव्यत्वस्याप्यप्रयोजकत्वादिति भावः। तदेवमुद्धृतेषु कण्टकेषु न्यायमवतारयन्नेवोपसंहरति। तस्मा-

(१) इतियुक्तिमत्-इति नास्ति १ पु०।

जशब्दः पद्ममन्वे शक्तः । वृत्यन्तरविरहे सति व्यु-त्पन्नं प्रति नियमतः पद्मत्वावच्छिन्नप्रतियोगिकान्वयबोधजनकशब्दत्वात् पद्मशब्दवदिति । गृहविवादस्तु पङ्कजमानयेत्यत्र पङ्कजशब्देन वाक्यार्थज्ञानानुकूलं पदार्थज्ञानं कीदृक् जन्यते । पद्मः पङ्कजनिकर्त्तेत्याकारमिति चेत् । एतत्किमनुभवरूपं वा स्मरणरूपं वा । नाद्यः सामग्रीविरोधात् । तथाहि(१) पङ्कजनिकर्तृत्वांशे ह्यनुभवसामग्री पद्मत्वांशे स्मरणसामग्री तेच मिलित्वा

दिति । लाक्षणिके व्यभिचारादाह । प्रवृत्यन्तरविरहे सतीति । अविद्धिवारणाय व्युत्पन्नं प्रतीति । प्रकरणादिवशात्कदाचिदीदृशबोधजनके पुष्पादिपदे व्यभिचारदाह नियमत इति । आत्मादिव्युदासाय शब्दत्वादिति । पङ्कजपदं समुदायावयवशक्तिभ्यामेव वाक्यार्थज्ञानानुकूलं स्मरणं जनयतीति सिद्धान्तव्यवस्थापनाय विचारमारभमाणस्तदङ्गं विप्रतिपत्तितः संशयमाह । गृहविवादस्त्विति । कीदृगिति स्मरणमनुभवो वा । तदप्येकमनेकं वेत्यर्थः । पद्म इति । अर्द्धर्चादिपाठात्पुंस्त्वमपि । विरोधमेव विवृणोति । पङ्केति । तदंशे तस्य वाक्यत्वादितरत्र च पदत्वात्तथा च

(१) तथाहि=इति नास्ति १ पु० ।

कथङ्कार्यं जनयेताम् । न द्वितीयः प्रत्येकसमुदाय-सङ्केतप्रतिसन्धानजस्मरणानामेकदासत्त्वात् । न चैकमेव पङ्कजनिकर्त्तृत्वपद्मानां स्मरणं तत्र कार्य-दर्शनात्कल्प्यत इति युक्तम् । एवमपि हि पङ्कजनिकर्तृत्वपद्मानामानयनान्वयः प्रत्येकं स्यात् न तु विशिष्टवैशिष्ट्येन । किञ्च प्रत्येकान्वये वाक्यभेदप्रसङ्गः केन वारणीयः । कथं वा गवा-दिपदे न योगरूढिः । को हि गमेर्डो सप्तम्यां

---

पद्मत्वांशेऽनुभावकाभावान्नोभयानुभव इति भावः । ननु सामग्रीद्वयसमाजादेक एवोभयानुभवः स्यादित्यत आह । तेचेति । कार्यमनुभवरूपम् । अविनिगमादुभया-त्मकत्वे सङ्करापातात् । कार्यैक्याभावे च सामग्र्यो-र्मेलनस्याप्यनुपपत्तेरिति भावः । अनेकस्मरणपक्षं दूषयति । प्रत्येकेति । उपपदधातुप्रत्ययप्रत्येकसङ्केत-प्रतिसन्धानजस्मरणानां समुदायार्थस्मृतिकालेऽसत्त्वा-दुत्तरेण पूर्वपूर्वनाशादित्यर्थः । स्मरणैक्यपक्षं दूष-यति । नचेति । प्रत्येकस्मरणजन्यसंस्कारसमुदाया-दिति शेषः । ननु विशिष्टेति । उत्तरोत्तरविशेषणस्य पूर्वपूर्वविशिष्टतयाऽनुपस्थितेर्विशिष्टवैशिष्ट्यबोधे च तथोपस्थितेरेव हेतुत्वादिति भावः । न केवलमिष्टा-सिद्धिमात्रमनिष्टापत्तिरपीत्याह । किञ्चेति । अति-

जनेर्ड इत्यनयोर्विशेषः । येनैकत्र रूढिमात्रमपरत्र योगरूढिरिति।

अत्र ब्रूमः(१)। पङ्कजमानयेति वाक्यात्तावत्पङ्कजनिकर्त्तारं पद्ममानयेति प्रतीतिर्जायत इत्यनुभवसिद्धम् । तत्र पङ्कजपदेन प्रत्येकसमुदायशक्तिप्रतिसन्धानसहकारिवशान्मिलितगोचरमेकमेव स्मरणं जन्यते। तत्राकाङ्क्षादिवशेन पङ्कपदार्थस्याधारत्वेन जनिपदार्थस्याधेयत्वेन तत्क्रियाकर्तृत्वेन प्रत्ययार्थस्य तत्रैवान्तर-

प्रसङ्गादपि न पङ्कजादिपदे योगरूढिरित्याह । कथ चेति । को हीति । अनुशासनावधृतविभागप्रकृतिप्रत्ययशक्तिभिर्योगरूढेरेव सम्भवादिति भावः ।

प्रतीत्यनुपपत्त्या समूहालम्बनस्मरणं व्यवस्थापयिष्यन्प्रतीत्यसिद्धिं तावन्निरस्यति । पङ्कजमिति । ततः किं तदित्याह । तत्रेति । नन्वेवं पङ्कादीनां प्रत्येकमानयनान्वयप्रसङ्ग इत्युक्तं तत्राह । आकाङ्क्षादीति । आकाङ्क्षाद्युपेतपदकदम्बस्य तात्पर्यविषयीभूतस्वार्थान्वयबोधकस्वभावत्वादिति भावः । एकदैवेति । विशेष्ये विशेषणं तत्र च विशेषणान्तरं भासत इत्येव विशिष्टवैशिष्ट्यज्ञानं न तु विशिष्टविशेषणज्ञानजन्यं ज्ञान-

(१) अत्राभिधीयते—पा १ पु० ।

ज्ञतया पङ्कत्वस्यैतद्द्वितयविशिष्टे आनयनस्यै-
कदैवान्वयः प्रतीयते नतु पङ्कत्वविशिष्टे पङ्कज-
निकर्तृत्वं तद्विशिष्टे वानयनमिति प्रतीतिः ।
यद्वा पङ्कजनिकर्तृत्वानां प्रथमतस्तावदन्वयबो-
धस्तदनन्तरन्तेन सममम्पङ्कत्वस्यानन्तरमानयने-
नान्वय इत्याद्यूह्यम् । न च पङ्कजशब्दस्यै-
कत्वात्कथमन्वयबोधकत्वमिति वाच्यम् । समु-
दायापेक्षया पङ्कजशब्दस्य पदत्वमवयवापेक्षया
वाक्यत्वम् । न च गवादिपदेपि योगरू-
ढिर्डोप्रत्ययस्य शक्त्यवधारकन्यायाभावात् ।

---

मिति भावः । नत्विति । पङ्कजनिकर्तृत्वादेर्विशिष्टस्य
पूर्वमनुपस्थितत्वादिति भावः । विशिष्टविशेषणकमेव
विशिष्टवैशिष्ट्यज्ञानमित्यस्मिन्नपि पक्षे यद्यदाकाङ्क्षितं
योग्यमित्यादिप्राचीनमतेनान्वयबोधमुपपादयति । य-
द्वेति । ननु कथमेकस्मात्पदादनेकान्वयबोधसम्भवः क्व-
चिदप्यदर्शनादित्याशङ्क्याह न चेति । समुदायाव-
यवशक्तिभेदादेकपदत्वासिद्धेर्नान्वयबोधद्वैविध्यापत्ति-
रित्याह । समुदायेति । अतिप्रसङ्गं निरस्यति । न चेति ।
शक्त्यवधारकेति । नियतैकप्रकृतिकत्वेनावापोद्धारकल्प-
नासम्भवादित्यर्थः। नन्वनुशासनमेवावधारकमत आह ।

गमेर्डोरितिवचनं यथाकथञ्चिद्व्युत्पत्तिपरम् । ननु धेन्वादिपदेऽप्येवं स्यात् । न स्यात् । दानुजानुभानुशब्दादावावापोद्वापक्रमेण शक्तेः कल्पनात् यत्र योगार्थान्वितरूढ्यर्थावबोधस्तत्र सर्वत्र योगरूढिरित्येवम्परत्वाद्वा । नन्वस्तु रूढिरेव न योगार्थानन्वयप्रसङ्गात् । यौगिकार्थबुद्धिरूपसहकारिलाभाद्विशिष्टार्थोपस्थापकत्वं रूढेर्योग-

---

मेर्डो इति । व्युत्पत्तिर्गोशब्दसाधुत्वज्ञानं रेखागवयेनरगस्त्यगवयज्ञापनवदनुशासनं साधुत्वान्वाख्यानमात्रप शक्तिग्रहस्त्वन्वयव्यतिरेकाभ्यामेवेति भावः। प्रतिबन्द्या प्रत्यवतिष्ठते । नन्विति । एवं योगरूढ्यभावः शक्त्यवधारकन्यायाभावाविशेषादिति भावः। हेत्वसिद्ध्या परि हरति । न स्यादिति । तामेव स्फुटयति । जानुदानुभानु इति । प्रकृतिप्रत्यययोः प्रत्ययप्रकृत्यन्तरसमभिव्याहारेपि तत्र कर्मणि शक्त्यकल्पनात्क्लृप्तमौत्सर्गिकं कर्त्रर्थत्वमपहाय धयत्युत्तरनुत्वेनात्रैव कर्मशक्तिः कल्प्या तद्वरं रूढिरेवतया। कथमादिपदेन धेन्वादीनि सङ्गृह्य पङ्कजादिपदानां योगरूढिरिति गौतमीया इत्युक्तमत आह। योगार्थेति। न हि धेन्वादिपदे योगरूढिरिति गौतमवचनमस्ति येन योगत्यागेऽपसिद्धान्तः स्यादिति योगाग्रहोऽस्माकं स्यात् । आदिपदन्तु सम्भवदुभयार्थपरमिति

रूढत्वम् न च योगार्थेपि समुदायशक्तिरिति सर्व-
मवदातम् ।

इतियोगरूढिवादः ।

---

भावः । केवलरूढिवादी शङ्कते । अनुभवविरोधेन नि-रस्यति । योगेति । पङ्कजनिविशिष्टे पद्मे समुदायश-क्तिर्योगरूढिरिति भ्रमवतो गौरवशङ्कामपाकरोति । यौगिकेति । अवयवानां स्वार्थे शक्तिः क्लृप्तैव समुदा-यस्य तु पद्मत्वमात्रे शक्तिः कल्प्यत इति क्व गौरवमि-ति भावः ।

इतिश्रीसकलसामन्त० योगरूढिप्रकरणम् ॥



इहानुमितौ लिङ्गस्य पक्षधर्मताज्ञानम् कारणमित्युभयवादिसिद्धम्। तस्य ज्ञानस्य व्याप्ति-

व्याप्यत्वेन प्रतीयमानस्य पक्षसम्बन्धावगाहिज्ञानमनुमितिहेतुतया व्यवस्थापयिष्यन् विचाराङ्गसंशये धर्म्यसिद्धिं तावदुद्धरति। अनुमिताविति। लिङ्गस्य तत्त्वेनाभिमतस्य। पक्षधर्मताप्रकारकमिति। यद्यपि धूमवांश्चायमिति वा वन्हिव्याप्यधूमवांश्चायमिति वा कारणीभूतं ज्ञानं न पक्षताप्रकारकम् किन्तु धूमप्रकारकम्। तथापि पक्षधर्मताप्रकारकमपि धूमः पर्वतवृत्तिरिति ज्ञानं कारणं भवत्येवेत्येतावदेव विवक्षितं नान्ययोगव्यवच्छेद इति न दोषः। यद्वा पक्षसम्बन्धावगाहित्वं पक्षधर्मताप्रकारकत्वं तच्चोभयत्राविशिष्टम्। नचैवं प्रमेयत्वादिना सम्बन्धज्ञानादप्यनुमितिप्रसङ्गः पक्षवर्त्तिव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वज्ञानविरोधिज्ञानत्वस्य विवक्षितत्वादिति ध्येयम्। सिद्धे धर्मिणि संशयमाह। तस्येति। पक्षवृत्तिव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वधीविरोधिप्रकारकपक्षलिङ्गसम्बन्धज्ञानवृत्त्यवृत्तिकारणत्वं व्याप्तिप्रकारकताघटितावच्छेदकावच्छेद्य न वा व्याप्तिप्रकारकत्वं तद्वृत्त्यनुमितिकारणतावच्छेदकं न वेति वार्थः। पूर्वविधिकोटिप्रसिद्धिः केवलव्याप्तिज्ञानकारणतायाम्। उत्तरविधिप्रसिद्धिः पक्षतात्वे। ननु व्याप्तिज्ञानव्याप्तिविशिष्टपक्षधर्मताज्ञानयोर्व्याप्तिप्रकारक-

प्रकारकत्वेनानुमितिकारणत्वं न वा व्याप्तिविशिष्टपक्षधर्मताविशिष्टज्ञानमनुमितिकारणं नवेति विप्रतिपत्तिसङ्क्षेपः । तत्र परेषामयमाशयः ।

त्वेनैव कारणत्वेऽन्यतरवैयर्थ्यापत्तिः कारणतावच्छेदकाक्रान्तकिञ्चित्समवधानस्यैव कार्यहेतुत्वाद्विशकलितव्यभिचाराभावसहचारस्मरणवतः पक्षवृत्तिहेतौ तदुभयवैशिष्ट्यज्ञानाज्जायमानायामनुभवसिद्धानुमितौ व्यभिचारेण व्याप्तिप्रकारकत्वस्यानुमितिकारणतानवच्छेदकत्वाद्विधौ बाधश्चेत्यरुचेराह । व्याप्तिविशिष्टेति । व्याप्तिविशिष्टं व्याप्तिविषयकं तच्च पक्षधर्मताज्ञानं चेति कर्मधारयः । ज्ञाने च व्याप्तिवैशिष्ट्यं तद्विषयतैव । ननु व्याप्तिस्मृतिसहकृतपर्वतीयधूमेन्द्रियसंनिकर्षजविशिष्टज्ञानस्य वा वन्हिव्याप्यवानयमिति शब्दविशिष्टज्ञानस्य वा विशिष्टज्ञानत्वेन कारणतानङ्गीकारेऽपि कारणत्वमात्रवर्जनीयतया परेणापीष्यत एवेति विधौ सिद्धसाधनम् । न च तत्त्वमनुमितिकारणतावच्छेदकं नवेति विवक्षितम् । व्यधिकरणव्याप्तिपक्षधर्मतासमूहालम्बने प्रमेयत्वप्रकारकज्ञाने वानुमित्यकारणेतिप्रसक्तस्यानवच्छेदकत्वेन तदवच्छेदकत्वसाधने बाधप्रसङ्गात् । न चैकस्मिन्धर्मिणि व्याप्तिपक्षधर्मताप्रकारकज्ञानत्वं धर्मिवन्हिव्याप्यधूमवानयमिति कारणत्वाभिमते ज्ञानेऽव्याप्तेः धूमव्या-

विशिष्टज्ञानस्याऽनुमितिकारणत्वं किमन्वयव्यतिरेकाभ्यामन्यथा वा। नाद्यः। अनुमितिपूर्वसमये व्याप्तिज्ञानपक्षधर्मताज्ञानव्यतिरिक्तस्य विशिष्टज्ञानस्यैवाऽसिद्धेः। नन्वस्तु द्वितीयः।

---

प्तिप्रकारकत्वेऽपि पक्षधर्मतायाः स्वाविशेष्ये तत्र प्रकारत्वासम्भवात्। प्रकारत्वे वा तदीयसम्बन्धान्तरभानप्रसङ्गात्। तस्य तत्सम्बन्धस्य वा पक्षे प्रकारत्वेन एकधर्मिकप्रकारद्वयाभानात् व्याप्तिप्रकारकत्वस्य व्यभिचारेण कारणतानवच्छेदकत्वस्योक्तत्वाच्च। व्यभिचारज्ञानविरोधिप्रकारेण व्याप्तिविषयकत्वमेव व्याप्तिविशिष्टमिति चेत्। एवमप्येकस्मिन्धर्मिणीत्यविवक्षायामुक्तएव दोषः। विवक्षायामपि पक्षधर्मता धूमे न प्रकार इति चेत्। न व्यभिचाराधिद्धिज्ञानविरोधिप्रकाराभ्यामेकस्मिन्धर्मिणि व्याप्तिपक्षसम्बन्धावगाहिज्ञानत्वमनुमितिकारणतावच्छेदकं न वेति विवक्षितत्वात्। तदिदमाह इति विप्रतिपत्तिसंक्षेप इति। पूर्वपक्षमवतारयति। तत्र परेषामिति। पक्षतादिसमवधाने व्याप्तिज्ञानपक्षधर्मताज्ञाने सत्यप्यनुमितेरनुत्पत्तिः। परिशेषसध्रीचीनाव्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वेऽनुमितेर्मानमिति शङ्कते नन्वस्तु द्वितीय इति। अन्यथासिद्ध्या परिशेषं विघटयति नेति। उपक्षीणत्वम-

तथाहि । व्याप्तिस्मरणानन्तरं किञ्चित्त्वादिना रूपेण पक्षधर्मधूमज्ञानेन तावद्वह्न्यनुमितिरुत्पद्यते तथाचानुमित्युत्पत्तिपूर्वकाले रूपान्तरेण पक्षधर्मधूमज्ञानं कारणं वक्तव्यम् । तच्च प्रकारान्तरं परिशेषाद्व्याप्यत्वमेवेति सिद्धं विशिष्टज्ञानमिति चेन्न । किञ्चित्त्वादिव्यतिरिक्तस्य धूमत्वादेरेव सम्भवे परिशेषस्योपक्षीणत्वात् । तथाहि प्रथमं व्याप्तेः स्मरणमनुभवो वा । अनन्तरं व्याप्य-

---

न्यथासिद्धिः । तामेवोपपादयति तथाहीत्यादिना । न्यायमतेनाह स्मरणमिति । स्वमतेनाह । अनुभवो वेति । सामान्यलक्षणानङ्गीकारात्पक्षीयधूमे प्राग्व्याप्तेरग्रहान्न स्मरणसम्भवः किन्तु येन रूपेणोपस्थिते धूमे प्राग्व्याप्तिर्गृहीता तद्रूपपक्षीयधूमे दृष्टान्तवदेव तत्र व्याप्तिरनुभूयत इति भाव. इति यत्तन्न । सामान्यलक्षणाभावेन पक्षीयधूमव्याप्तेरग्रहादस्मरणेपि धूमत्वपुरस्कारेण गृहीतमहानसीयपक्षीयधूमव्याप्तिस्मरणसम्भवात् । पक्षीयधूमे व्याप्तिनिश्चयस्य गुरुणानपेक्षितत्वाच्च । अपेक्षितत्वे वा पक्षधर्मस्य व्याप्यत्वज्ञानस्वीकारे परामर्शस्यानायाससिद्धिप्रसङ्गात् । तस्मात्सामान्यविशेषव्याप्त्यभिप्रायेण पक्षद्वयमिदम् । तथा-

त्वावच्छेदकधूमत्वादिधर्मप्रकारकपक्षनिष्ठधूम-ज्ञानमनन्तरं व्यवहितसमये एवानुमितिरप्रत्यूहमुत्पद्यत इति एवमप्युपपत्तावन्तरा विशिष्टज्ञान-कल्पने तत्कारणत्वे च गौरवमेव बाधकम् । न च विशिष्टज्ञानसामग्रीबलात्तत्कल्पनं युक्तम् ।

---

हि । सामानाधिकरण्यरूपतया प्रतिसम्बन्धिभिन्ना व्याप्तयो वन्हिव्याप्तित्वेनानुगतीकृता धूमत्वेनानवच्छिद्यन्त इति पक्षे पक्षीयधूमेन्द्रियसन्निकर्षदशायां महानसीयधूममात्रवृत्तिव्याप्तेः प्रागनुभूताया इन्द्रियासंनिकृष्टत्वेनानुभवासम्भवात्स्मृतिरेव युक्ता सामान्यावच्छिन्नैकव्याप्तिपक्षे तु महानसीयधूमे धूमत्वेन प्रतीताया एव पक्षीयधूमावच्छेदेनेन्द्रियसंनिकृष्टतयानुभवसामग्रीप्राबल्यादनुभव एव न स्मृतिरिति । न च पक्षीयधूमे व्याप्त्यनुभवाभिधाने विशिष्टज्ञानप्रसङ्गः । गगनचारिणि तस्मिन्पक्षीयत्वाग्रहदशायामेव तदभिधानात् । पक्षनिष्ठेति । पक्षनिष्ठतयेत्यर्थः । गौरवमिति । अन्यथानुपपत्त्यमूलकत्वेनाप्रामाणिकत्वादिति भावः । ननु मा भूदनुपपत्तेस्तत्कल्पनं सामग्रीबलात्तु स्यात् । न च सामग्रीबलायातेऽप्यर्थे गौरवं नामेत्यत आह न च विशिष्टेति । कार्येति । तदेकोन्नेयत्वात्तस्या इति भावः । ननु विशेषणज्ञानादिघटिता सामग्री सा च न कार्योन्नेया येन तदसिद्धौ न सिद्ध्येदत

कार्यासिद्धौ सामग्र्या अण्यसिद्धेः सिद्धौ वाऽनुमिति-
सामग्र्या बाधितत्वात् । न चानुमितिसामग्र्यपे-
क्षया प्रत्यक्षसामग्री बलवतीति वाच्यम् । तृती-
यलिङ्गपरामर्षधारावहनप्रसङ्गात् । न चानु-
मितिसामाग्र्या बलवत्त्वेनानुमितिधारावहन-
प्रसङ्गेनानुमिनोमीत्यनुव्यसायो न स्यादिति
वाच्यम् । पूर्वसामग्र्या दत्तफलत्वात्(१) अपर-

आह । सिद्धौ वेति । तथा च प्रतिबन्धकाभावाभावेन
वैवासिद्धेति भावः । ननु संशयविपर्ययो-
त्तरविशेषदर्शनजन्यपुरुषादिप्रत्यक्षानुरोधेन प्रत्यक्षसा-
मग्र्या एव बलवत्त्वविकल्पनात्कथं दुर्बलयाऽनुमिति-
सामग्र्या तत्प्रतिबन्धसम्भव इत्यत आह । न चेति ।
तदनुरोधेन समानविषय एव तस्या बलवत्त्वं न विषय-
भेदेपीत्यभिप्रेत्याह तृतीयेति । ननु चक्षुर्मनःसंयोग-
कादाचित्कत्वान्न तद्धारेत्यत आह । तदनुव्यवसायेति ।
अनुमितिसामग्र्या बलवत्त्वे समानो दोष इत्यत आह न
चेति । अनुमितिधारेति । लिङ्गोपहितलैङ्गिकभानपक्षे
पूर्वपूर्वानुमितेरेव लिङ्गज्ञानत्वादिति भावः । न स्या-
दिति । दृश्यते चेति शेषः । किम् पूर्वसामग्रीतस्तद्धा-
रामापादयसि सामग्र्यन्तराद्वा ? नाद्य इत्याह । पूर्वेति ।

(१) बलवत्वात्–पा० ३ पु० ।

सामग्र्याः सिद्धसाधनेनानुदयात् । अत एव धूमविशिष्टं पर्वतमुपलभ्य समयान्तरेऽपि व्याप्तिं स्मरतोऽपि(१) वह्न्युमितिरुत्पद्यत इति । न हि तत्र तृतीयलिङ्गपरामर्षसम्भावनापि कारणाभावात् । न हि तत्रेन्द्रियं कारणमसन्निकर्षात् । न च ज्ञानान्तरोपनीते धूमे मानस एव परामर्ष इति वाच्यम् । बहिर्विशेष्यके ज्ञाने मनसः सर्वथाऽसामर्थ्यात् । नापि संस्कारः । पूर्वं वह्निव्याप्यधूमत्वेनानुभवात् । नाप्यानुमानिकः स परामर्शः । अनवस्थापातात् । किन्तु

---

इसफलत्वात् उत्पादितसिद्धिकत्वादित्यर्थः । सिद्ध्यभावाभावादिति भावः । न द्वितीय इत्याह । सिद्धसाधनत्वेनेति । सन्देहसिषाधयिषाद्यभावेन पक्षताभावादित्यर्थः । यत्तु पक्षधर्मताज्ञानाभावादिति । तन्न । पक्षत्वज्ञानस्याहेतुत्वात्पर्वतादिधर्मत्वज्ञानस्य चाविघातात् । व्यभिचारादपि न विशिष्टज्ञानमनुमितिहेतुरित्याह अत एवेति । तस्याहेतुत्वादेवेत्यर्थः । अन्यथा सा न तद्व्यभिचरेदित्यर्थः । असिद्धः स इत्यत आह न हि तत्रेति । असन्निकर्षादिति । विशेष्येणेति शेषः । ज्ञानमेव संनिकर्षः स्यादत आह । न च ज्ञानान्तरेति ।

---

(२) व्याप्तिस्मरणवतोऽपि–पा० १ पु० ।

केवलव्यतिरेक्यनुमानवादिना भवतापि तत्र कथं तृतीयलिङ्गपरामर्षः समर्थनीयः । इतरभेदव्याप्यत्वस्य पृथिवीत्वेऽग्रहात् । ग्रहे वा साध्यहेतुनियतसामानाधिकरण्यस्य पृथिव्यां व्याप्तिग्राहकेणैव परिच्छिन्नत्वात्किमधिकमनुमेयं स्यात् । व्यतिरेकव्याप्तिग्रहेणैव त्वद्दर्शने इतरभेदा-

सर्वथा ज्ञानस्य संनिकर्षत्वेपीत्यर्थः । अननुभवादिति । पक्षीयधूमस्येति शेषः । अनवस्थेति । पर्वततद्वृत्तिधूमयोरिन्द्रियासन्निकृष्टत्वेनै।न्द्रियकतदुभयान्यतरविशेष्यकतद्धेतुपरामर्शयोगात्तत्रानुमित्यनुसरणेऽनवस्या स्यादित्यर्थः।न्यायनये कार्यान्तरेणापि व्यभिचारादकारणं तदित्याह । केवलेति । अग्रहादिति । अन्वयसहचाराग्रहादिति भावः । अस्तु व्यतिरेकद्वयसहचारदर्शनादेव तद्ग्रहः प्रतियोग्यनुपयोगिभावस्य नियामकत्वेनातिप्रसङ्गाभावादित्याशङ्क्याह । ग्रहे वेति । किमधिकमिति । तस्यैव चानुमेयत्वे सिद्धसाधनमिति भावः । ननु पृथिवीत्वमितरभेदव्याप्यमिति ग्रहेऽपि सर्वा पृथिवीतरभिन्नेति पृथिवीविशेष्यकबुद्धेर्व्यतिरेकसाध्यत्वाद्रु तुनः पृथिव्यां तदुभयसामानाधिकरण्यग्रहेपि गन्धवत्त्वरूपपक्षतावच्छेदकावच्छेदेन तस्याग्रहणाज्ञास्त्येवानुमेयाधिक्यमित्याशङ्क्याह । व्यतिरेकव्याप्तिग्रहेणैवेति । एवञ्चाप-

नुमितेः स्वीकृतत्वाच्च(१)। ननु तृतीयलिङ्गपरामर्षमस्वीकुर्वता त्वयाऽनुमितित्वावच्छिन्नं कार्यं प्रति किमनुगतं कारणं वाच्यम्। न तावद्धूमत्वादिविशिष्टपक्षधर्मपरामर्षः अननुगमात्। नापि व्याप्यतावच्छेदकप्रकारकतद्विशिष्टपरामर्षः। उपजीव्यत्वेन व्याप्यत्वस्यैव तथात्वेनाङ्गीकारार्हत्वादिति। मैवम्। अनुमितित्वावच्छिन्नं प्रति

सिद्धान्तप्रसङ्ग इति भावः। अनुमितित्वजात्याकस्मिकप्रसङ्गादनुगतकारणावश्यम्भावे परिशेषात्तृतीयलिङ्गपरामर्शसिद्धिरिति शङ्कते। नन्विति। अननुगमाद्व्यभिचारादित्यर्थः। धूमत्वादीनामननुगमेऽपि व्याप्यतावच्छेदकत्वेनानुगमात्तद्विषयकविशिष्टपरामर्शोऽनुगत एव। अत एव पक्षविशेष्यकसाधनविशेष्यकत्वाभ्यामप्यननुगमौ न दोषाय। व्याप्यतावच्छेदकप्रकारवद्धूमादिविषयकविशिष्टपरामर्शत्वेन द्वयोरप्यनुगमादित्यत आह नापीति। उपजीव्यत्वेनेति। व्याप्यतावच्छेदकत्वेन धूमत्वादिप्रतीतेर्व्याप्यत्वरूपविशेषणज्ञानाधीनत्वादित्यर्थः। तथात्वेन परामर्शानुगमकत्वेन। अङ्गीकारार्हत्वादिति। प्रथमोपस्थितिलाघवादिति भावः। अन्यथोपपत्त्या दूषयति। मैवमिति। व्याप्तिज्ञानस्यैवेति। ननु यस-

(१) स्वीकाराच्च—पा० २ पु०।

व्याप्तिज्ञानस्यैव कारणत्वात् धूमत्वादिविशिष्टपक्षधर्मज्ञान(१)स्यानुमितिविशेष एव प्रयोज

दुर्भतया विकल्पेनान्योन्याभावात्यन्ताभावगर्भतया च व्याप्तेरननुगमान्न तज्ज्ञानमनुगतम् । साध्यत्वसाधनत्वाभिमानस्यापि विशेषणत्वेनानुगमः । उपलक्षणत्वे व्यावर्त्तकतैव । न च पक्षताप्यनुगता यत्तद्गर्भत्वादेव । तथा चानुमितित्वस्याकस्मिकतापत्तिरिति चेत् । अत्र केचित् व्याप्तेरननुगमेऽपि तज्ज्ञानानां व्याप्तिपदवाच्यतावच्छेदकावगाहिज्ञानत्वेनानुगम इत्याहुः । अन्ये तु सम्बन्धज्ञानत्वेनैव तेषां हेतुता । न चातिप्रसङ्गः । परामर्शस्य विशेषसामग्रीत्वेनापेक्षणादित्याहुः । नव्यास्तु वस्तुतो व्याप्तिज्ञानानां तत्तदनुमितिविशेष एव जनकत्वम् । न चानुमितित्वस्याकस्मिकता । तद्धि कारणाप्रयोज्यत्वमप्रामाणिकत्व मृ वा ? नाद्य इष्टत्वात् नित्यवृत्त्यात्मत्वादिवदविरोधात् । न च जन्यमात्रवृत्तिजातौ तथात्वनियमः अप्रयोजकत्वात् । न द्वितीयः । अनुगतमतेरेव प्रमाणत्वात् । तस्माद्यथा प्रत्यक्षत्वस्यानुगतमते नित्यानित्यवृत्तितया कार्यतावच्छेदकस्यापि जातित्वं तथानुमितित्वस्यापि युक्तमित्याहुः । नन्वेवमालोको वन्हिव्याप्यः धूमवांश्चायमितिज्ञानाभ्यामपि वन्ह्यनुमितिप्रसङ्गः सा-

(१) विशिष्टपक्षज्ञानस्या– ४ पु० ।

कत्वात्। यद्वा यद्वस्तुतो(१) व्याप्यन्तद्विशिष्ट-ज्ञानस्यैवानुमितिमात्रं प्रति प्रयोजकत्वात्। न च यद्वस्तुतो व्याप्यं तस्य किञ्चित्त्वादिना रूपेण ज्ञानादनुमानं स्यादिति वाच्यम्। तथाहि। किंरूपानुमितिस्तत्रापाद्यते किं धूमादिलिङ्ग विशेषोपहिता लिङ्गसामान्योपहिता वा नाद्यः। धूमत्वादिप्रकारकज्ञानादेव तदुपपत्तेः। न द्वितीयः।

मान्यविशेषप्रयोजकसामग्रीसत्त्वात्। न च व्याप्यतावच्छेदकप्रकारकज्ञानविषयीभवद्धूमादिविशिष्टपक्षज्ञानं विशेषसामग्री तथा सत्वपजीव्यत्वाल्लघुत्वाच्च व्याप्यत्वप्रकारकज्ञानविषयीभवद्धूमादिविशिष्टपक्षज्ञानस्यैव प्रयोजकत्वौचित्ये न लिङ्गपरामर्शाङ्गीकारप्रसङ्गादित्यरुचेराह। यद्वेति। यद्यपि ह्रदो वन्हिमानित्यादौ यद्वस्तुतो वन्हिव्याप्य धूमादि तद्विशिष्टज्ञानं पक्षे न सम्भवति अन्यथाख्यातिप्रसङ्गात्। यद्विशिष्टज्ञानं सम्भवति तच्च व्याप्यं तथापि तत्रानुमित्यनङ्गीकारपक्ष एव ध्येयः। अङ्गीकारे वेति वक्ष्यमाणन्तु सम्भवत्यलविशेषाभिप्रायम्। उपक्रमवशाद्वा यद्वस्तुतो व्याप्यं तस्य विशिष्टमसंसर्गाग्रहेण विशिष्टं यत् ज्ञानमुपस्थितपक्षासंसग्रहसहितं व्याप्यज्ञानरितियावत्। अतो न व्य-

(१) वस्तुगत्या-पा० ३ पु०। एवमग्रेपि।

तथाभूतानुमितेरेवासिद्धेः । किञ्च यद्व्यतिरेकात्तृतीयलिङ्गपरामर्षस्तत्र नोत्पद्यते तद्व्यतिरेकस्योपपत्तेः । नन्वनुपपन्नमेतत् । यद्वस्तुगत्या वह्निव्याप्यं तद्विशिष्टपक्षज्ञानादनुमितिर्भविष्यतीति । तथा हि । यद्वस्तुतो वह्निव्याप्यं नास्ति धूलीपटलादिकं तद्विशिष्टज्ञानादप्यनुमितिदर्शनादिति । मैवम् । मया तत्रानुमितेरेवानङ्गीकारात् । अङ्गीकारे वा यद्वस्तुगत्या वह्निव्याप्यं तद्ज्ञानादेवानुमित्युपपत्तेः । तस्मादनुपपन्नश्चरमकारणत्वाभिमानो नैयायिकानामिति ।

भिचारः । धूमादिलिङ्गेति पक्षद्वयम् लिङ्गोपधानाभिप्रायेण । ननु लिङ्गविशेषप्रकारकज्ञानाभावेन तद्विशेषणकानुमित्यभावेपि वन्ह्यनुमितिः स्यादेव लिङ्गोपधानपक्षस्य निरस्यत्वात् । न च तत्रापि धूमत्वादिप्रकारकं ज्ञानं हेतुः धूमे व्याप्यत्वाग्रहेपि धूमत्वप्रकारकवस्तुसद्व्याप्यज्ञानसम्भवेन तदापत्तेर्दुर्वारत्वादत आह किञ्चेति । एवञ्चोभयसमाधेयमेतदिति भावः । कूटलिङ्गजानुमित्युच्छेदं बाधकमाशङ्कते । नन्विति । इष्टापत्त्या परिहरति मैवमिति । कूटलिङ्गजानुमितेर्भ्रमत्वेन तत्स्थानेऽसंसर्गाग्रहमात्रस्यैव मया स्वीकारादिति भावः । संसर्गोच्छेदभयादाह अङ्गीकारे वेति ।

एवं प्राप्ते ब्रूम (१) व्याप्तिस्मरणानन्तरं किञ्चित्यादिना रूपेण धूमविशिष्टपर्वतज्ञानाद्वह्निरनुमीयत इत्यविवादम् । तत्र किं धूमत्वप्रकारकव्यतिरेकाद्वा कार्यव्यतिरेकः कल्प्यताम् तद्व्याप्यत्वप्रकारकव्यतिरेकाद्वा ? तत्र प्रथमस्य गौरवकरत्वात् द्वितीयस्य व्याप्तिज्ञाने स्वीकारात् लघुत्वाच्च द्वितीय एव ज्यायान् । एत-

तज्ज्ञानादेवेति । पक्षागृहीतसंसर्गकव्याप्यभानादेवेत्यर्थः । चरमकारणत्वं स्वोत्तरभाविकारणानपेक्षकारणत्वम् तच्च कारणत्वस्यैवासिद्धावत्यन्तासम्भावितमिति भावः ।

सिद्धान्ताभिधानम् प्रतिजानीते । एवं प्राप्त इति । प्रथमस्येति । प्रत्येकधूमत्वादिप्रकारकत्वव्यतिरेकस्य प्रयोजकत्वेऽननुगमादेव निरस्ते व्याप्यतावच्छेदकत्वेन ताननुगतीकृत्य व्याप्यतावच्छेदकप्रकारकत्वव्यतिरेकस्यैव तद्व्यतिरेकप्रयोजकत्वं वाच्यम् तया च गौरवमित्यर्थः । लघ्वसम्भवे गौरवं न दोषाय नचेह तथेत्याह द्वितीयस्य चेति । लघुत्वादिति । प्रतीतितः स्वरूपतश्चेति शेषः । तदाप्यनुमते तदित्याह । व्याप्तिज्ञाने स्वीकारादिति । अन्यथा तत्रापि व्याप्यतावच्छेदकप्रकारकज्ञानत्वेनैव

(१) अत्राभिधीयते—पा० ३ पु० ।

देवानुसन्धायाचार्यैरिदमुक्तम् । तत्र लिङ्गत्वोल्ले- खितृतीयज्ञानमेषितव्यमिति । न च धूमाद्यु- पहितानुमितौ धूमत्वादिप्रकारकज्ञानस्य पूर्व- मुपजीव्यत्वेन धूमत्वादिप्रकारकत्वपनेव युक्तेति वाच्यम् तस्य ह्यनुमितिविशेषम्प्रति प्रयोज- कत्वं न तु सामान्यम्प्रति । प्रकृते त्वनुमितिमा- त्रम्प्रति कारणत्वावच्छेदकः प्रकारो विचार्यते । नच तथा धूमत्वादि व्यभिचारात् । किन्तु त-

कारणता त्वयोच्येत इति भावः । लिङ्गत्वोल्ले- खीति । व्याप्यत्वोल्लेखीत्यर्थः । तृतीयमित्युपल- क्षणम् । आप्तवाक्यादिना प्रथममपि तादृशज्ञा- नसम्भवात् । ननु धूमादिलिङ्गविशेषोपहितानुमितावु- पजीव्यत्वाद्धूमत्वादिप्रकारकज्ञानमेवानुमितिमात्रहेतु- रित्याशङ्क्याह । न चेति । नतु सामान्यम्प्रतीति । प्रत्येकरूपेण व्यभिचाराद्व्याप्यतावच्छेदकत्वेनानुगमे गौरवस्योक्तत्वाच्चेति भावः । व्यतिरेकादिति । व्यभिचारादित्यर्थः । वस्तुतो विशेषेपि न धूमत्वा- दिप्रकारकत्वेन जनकत्वं व्याप्त्यप्रतिसन्धानेऽपि धूमत्वप्रकारकज्ञानाद्धूमोपहितवह्न्यनुमित्यापत्तेः । अतो व्याप्यत्वप्रकारकज्ञानत्वेनैवेति तस्योपजीव्यत्व- मप्यसिद्धमित्याह । किन्त्विति । किन्तु तद्व्याप्यत्वेति । तथा च यद्विशेषयोरित्यादिव्याप्तिबलेनानुमितिसा-

स्तदुपाहितवह्न्यनुमितित्वं न धूमत्वादिप्रकारकज्ञानप्रयोज्यम् किन्तु तद्व्याप्यत्वप्रकारकज्ञानप्रयोज्यम् धूमत्वादिप्रकारकज्ञानप्रयोज्यन्तु धूमाद्विविशिष्टज्ञानत्वमेव । यत्पुनर्विकल्पापादानदूषणं कृतम् तदापादनमात्रोच्छेदकत्वेनोपेक्षणीयम् । तथाहि । सामान्यप्रसिद्धिमादायापादनं प्रवर्त्तते न विशेषप्रसिद्धिम् । तथैव सर्वत्र दर्शनात् । यत्पुनरुक्तम् ज्ञानद्वयानन्तरं तृतीयज्ञानमुत्पद्यत इत्यसिद्धम् अनुमितिसामग्र्या प्रतिबन्धक-

मान्ये व्याप्यत्वप्रकारकज्ञानसामान्यप्रयोज्यत्वमेव युक्तमिति भावः । क्व तर्हि धूमत्वाप्रकारकत्वस्य विनियोग इत्यत आह धूमत्वादीति । वस्तुतो यद्व्याप्यं तद्विशिष्टज्ञानस्यानुमितिहेतुत्वे किञ्चित्त्वादिनापि तज्ज्ञानानुमितिप्रसङ्ग इत्यत्र परोक्तां विकल्पानुपपत्तिं निरस्यति । यत्पुनर्विकल्पेति । न लिङ्गसामान्योपहितानुमितित्वेनापादनं येन तदप्रसिद्धिर्दोष उच्येत किन्त्वनुमित्यापादनमेव तत्र पर्यवस्यतीत्याशयेनाह । सामान्यप्रसिद्धिमिति । अनुमितिसामग्र्या प्रतिबन्धाल्लिङ्गपरामर्श एवासम्भवी कस्य लाघवानुगमाभ्यामनुमितिजनकताकल्पनेत्यनूद्य दूषयति । यत्पुनरित्या-

त्वादिति । तदपि मन्दम् । उक्तन्यायेन तत्तत्कारणत्वव्यवस्थितौ तद्विरहेऽनुमितिसामग्र्या एवासिद्धेः । केचित्तु ज्ञानद्वयानन्तरमेव विशिष्टज्ञानमुत्पद्यत इति न ब्रूमः । किन्तु व्याप्तिरूपविशेषणज्ञानसम्भवाद्द्वितीयज्ञानावसर एव वह्निव्याप्यधूमवानयमितिज्ञानसम्भव इत्याहुः । न च व्याप्यत्वाज्ञानेऽपि धूमत्वावच्छिन्नग्रहस्योपजीव्यत्वात्स एवानुमितौ कारणमस्त्विवति वाच्यम्

---

दिना । उक्तन्यायेन लाघवलक्षणेनानुगमलक्षणेन वा । न च स्वरूपासम्भवे तस्य युगपदुपस्थित्यभावान्न लाघवादिविचारावसर इति वाच्यम् । पक्षताविरहस्थले तत्स्वरूपसम्भवात् । नन्वनुमितिपूर्वोपस्थितिः कारणतानिर्वाहिका सा च नैवमपि निर्व्यूढेति वदन्तं प्रति स्वस्यैकदेशिमतेन परिहारमाह । केचित्त्विति । द्वितीयेति । शास्त्रे तृतीयलिङ्गपरामर्शकारणताप्रसिद्धिः स्थलविशेषाभिप्रायेणेति भावः । व्याप्तेः ससम्बन्धिकपदार्थतया तज्ज्ञानमात्रे सम्बन्धितावच्छेदकधूमत्वादिप्रकारकज्ञानस्य हेतुत्वात्तद्धेतोरेवेति न्यायेन तदेव हेतुरास्तामित्याशङ्क्य दूषयति । न चेत्यादिना । व्याप्यत्वसाक्षात्कार इति । ससम्बन्धिकपदार्थलौकिकप्रत्यक्ष एव तथा नियमः । स्वर्गवैजात्या-

अवच्छेदकज्ञानं व्याप्यत्वसाक्षात्कारे कारणं न तु व्याप्यत्वज्ञानमात्रे अवच्छेदकज्ञानं(१) विनापि वह्निव्याप्यवानयमिति वाक्यात् व्याप्यत्वज्ञानदर्शनात्। किञ्चैवमवच्छेदकज्ञानस्यापि कारणता न स्यात्। तत्रापि यदुपजीव्यं तदेव कारणमास्तामित्यस्यापि सुवचत्वात्। एतेन व्याप्तिस्मरणेऽपि किञ्चित्त्वेन रूपेण पक्षधर्मधूमग्रहे सति यद्व्यतिरेकात्तृतीयलिङ्गपरामर्शव्यतिरेकस्तद्व्यतिरेकेण ममाप्यनुमितिव्यतिरेक इति निरस्तम्। यदुक्तमसंनिकृष्टे धूमे विशिष्टज्ञानास-

नुपस्थितावपि यागस्वर्गसाध्यसाधनभावस्य श्रुत्या बोधनादिति भावः। तत्रापि यदुपजीव्यमिति। उपजीव्यमवच्छेदकमित्यर्थः। धूमत्वादेरप्यतिप्रसङ्गनिरासाय वृत्त्यवच्छेदकापेक्षाया आवश्यकत्वादिति भावः। एतेनेति। अनुमित्यपेक्षितव्याप्यत्वज्ञानमात्रेऽवच्छेदकग्रहापेक्षाभावेनेत्यर्थः। असन्निकृष्टपक्षकानुमितौ व्यभिचारमुद्धरति। यदुक्तमिति। ननु कारकानुपपत्तिमूलकासम्भवशङ्कायां ज्ञापकव्यवहारोपन्यासायार्थान्तरम् तत्सम्भवे तु कृतमनेनेत्यत आह। तस्मादिति। त्वयापि सामान्यतस्तदभ्युपगमादित्यर्थः। निष्टङ्कनं विशिष्याभिधानम्। ननु मन्मतेऽसंसर्गा-

म्भव इति । तदपि मन्दम् तथा हि । प गापि तत्र व्याप्तिविशिष्टज्ञाननमुत्पद्यत इति स्वीकर्त्तव्यम् । अन्यथा वह्निव्याप्तः स धूम इति व्यवहारो न स्यादिति । तस्मादुभयवादिसमाधेयमिदमिति किं निष्टङ्कनेन तथापि सुहृद्भावेन तत्र किं कारणमिति यदि ब्रूषे । तदा तच्छृणु । ज्ञानान्तरोपनीते धूमे संयुक्तसमवेतलक्षणाया प्रत्यासत्त्या

ग्रहादेव तदुपपत्तिः नव तु तदभ्युपगमेऽन्यथाख्यात्युच्छेदप्रसङ्ग इत्याशङ्क्याह । तथापीति । व्युत्थाय प्रश्ने संसर्गाग्रहस्य संसृष्टव्यवहारहेतुत्वं निरसिष्याम इत्यभिप्रेत्य सुहृद्भावेन प्रश्ने उत्तरमाह । ज्ञानान्तरोपनीत इति । स्मृत इत्यर्थः । धूमस्य विशेष्यत्वात्तज्ज्ञानस्य च विशिष्टज्ञानाजनकत्वात्तदुपदर्शनवैयर्थ्यमाशङ्क्य विरोधयसन्निकर्षत्वेनोपयोगमाह । संयुक्तेति । मनःसंयुक्तात्मसमवेतज्ञानविशेषणतयेत्यर्थः । इदञ्च ज्ञानस्य पृथक् प्रत्यासत्तित्वे षोढा तत्परिगणनविरोधपरिहारायेत्यवधेयम् । अतिप्रसङ्गादिति । चाक्षुषादिज्ञानेष्वपि मनस एव करणत्वप्रसङ्गादित्यर्थः । तथा च तत्करणतया चक्षुरादिसिद्धिरप्रत्यूहैवेति भावः । ज्ञानान्तरेति । तथा च ज्ञानान्तरानुपनीतरू-

ज्ञानरूपया वा मन एव तत्र कारणम् न च बहिर्विशेष्यके प्रत्यये न मनसोऽस्वातन्त्र्यमतिप्रसङ्गादिति वाच्यम्। ज्ञानान्तरोपनयस्यैव नियामकत्वात्। न च विशेषणलक्षणया प्रत्यासत्त्या विशेषणमेव भासत इति वाच्यम्। इह भूतले घटाभाव इत्यत्राभावविशेष्यकस्य प्रत्ययस्य दर्शनात्। जम्बीरस्य रूपरसाविति सर्वसाधारणप्रत्ययाच्च। न चैवमनुमित्युच्छेदः सर्वत्र ज्ञानान्तरोपनीतस्य वह्नेर्भानसम्भवादिति वाच्यम् नहि ज्ञानान्तरो-

पादिसाक्षात्कारे मनसोऽनतिप्रसङ्गेनानन्यथासिद्धतत्करणतया चक्षुरादिसिद्धिरप्रत्यूहैवेति भावः। विशेषणमेवेति। परमाणुमहं जानामीत्यादौ तथावधारणादिति भावः। अधिकरणानधिकाभाववादिनो नेदं विशेषणतोदाहरणम् संयोगेनैवोपपत्तेरत आह। जम्बीरस्येति। चक्षुरसनयोः समुच्चित्य करणत्वे चित्रज्ञानापत्तेरन्यतरमात्रस्य चेतरविषयज्ञापकत्वानुपपत्तेरेकैककरणकैकैकविषयज्ञानद्वयविशेषणताप्रत्यासत्तिसहकृतेन मनसैव तदुभयविशेष्यकज्ञानस्य स्वीकृतत्वादित्यर्थः। चक्षुरादिवज्ज्ञानान्तरानुपनीतेऽर्थे सार्थक्यासम्भवादुपनीते च ज्ञानप्रत्यासन्नेन मनसैव ज्ञानोपपत्तेरनन्यथासिद्धफलासम्भवाननुमानोच्छेदप्रसङ्ग इत्याशङ्क्याह। न

पनीतभानेऽनुमितिव्यवहारेऽतिप्रसङ्गात् । नहि मनोजन्यतामात्रेण मानसत्वम् किन्त्वसाधारणकारणान्तरनिरपेक्ष(१)मनोजन्यत्वेन । नचानुमित्यादौ तथा। परामर्शादेरसाधारणस्य कारणस्यापेक्षानियमात् । यद्वाऽनुमानादेव तत्र परामर्श उत्प-

चै वमिति। किमनुमितित्वजातीयज्ञानमेवापलप्यते उत तस्य मानससाक्षात्कारविशेषरूपतयाप्युपपत्तेः स्वतन्त्रप्रमाणत्वम् ? नाद्य इत्याह । नहीति । अतिप्रसङ्गादिति । सुरभि चन्दनमित्यादिज्ञानेऽपीति शेषः । विजातीयव्यवहारान्यथानुपपत्त्या विजातीयज्ञानसिद्धिरिति भावः । न द्वितीय इत्याह । न हि मनोजन्यतेति । ज्ञानमात्रे तथात्वप्रसङ्गादिति भावः । वस्तुतस्त्वप्रसिद्धसाध्यके व्यतिरेकिणि ज्ञानान्तरोपनयासम्भवेन मानसभिन्नलिङ्गपरामर्शासाधारणकारणकानुमितिज्ञानसिद्धौ अन्यत्रापि लिङ्गपरामर्शघटितसामग्रीसमवधानेऽनुमितिरवर्जनीयैवेति न तदुच्छेदः । न चैवमपि प्रत्यक्षसामग्र्याश्चानुमिनोमीत्यनुव्यवसायबले बलवत्त्वाकल्पनादिति ध्येयम् । असंनिकृष्टपक्षकपरामर्शस्यानुमानिकत्वमपि न दोष इत्याह । यद्वेति । ननूक्तैव तत्रानवस्थेत्यत आह न चेति । स्मृतावेवेति । तत्र विशेष्यसन्निकर्षादेरनपेक्षणादिति भावः । स्मृति-

(१) कारणनिरपेक्ष—पा० ३ पु० ।

द्यते । न चानवस्थादोषः क्वचित्स्मृतावेव वि-श्रान्तेः । अन्ये तु परामर्शे पक्षविशेष्यकत्वमत-न्त्रमेव । किन्तु पक्षवृत्तेर्विशेष्यस्य व्याप्यत्वं गृ-ह्यते यत्र तत्रानुमितिरुत्पद्यते । एवंभूतश्च तत्र(१) परामर्शः पक्षवृत्तिर्धूमो वह्निव्याप्य इति। अयमप्यनुमितिरूप एव । अत्र धूमत्वमेव लिङ्गम् धूमत्वस्य वह्निव्याप्यत्वं व्यक्त्यन्तरस-न्निकर्षाद्गृहीतम् । असन्निकृष्टपर्वतवृत्तिधूमस-म्बन्धितापि प्रत्यक्षेणैव गृह्यते । तस्मात्प्रत्यक्ष-रूपादेव परामर्शात् पर्वतवृत्तिरस धूमो वह्नि-

पक्षेऽपि पक्षविशेष्यकत्वनियमत्यागावश्यम्भावे किं स्मृ-तावेवेत्यवधारणेनानुभवस्यापि सम्भवादिति यौक्तिकानां मतान्तरह । अन्येत्विवति । अतन्त्रमेवेति । गौरवादिति शेषः। वस्तुस्थितिमुक्त्वानवस्थां परिहर्त्तुम् तत्र सम्भ-वतः परामर्शस्याकारमाह । एवंभूतश्चेति । तत्र वन्हि-व्याप्यधूमवत्त्वेनानुमितेऽसंनिकृष्टे धूमस्येव तन्निष्ठलि-ङ्गस्यापि धूमादेरसन्निकर्षान्न तद्विशेष्यकप्रत्यक्षपरामर्श-सम्भव इत्यत आह । अत्र धूमत्वमेवेति । प्रत्यक्षरूपा-देवेति । ज्ञानप्रत्यासत्तिसहकृतचक्षुर्जन्यत्वादित्यर्थः । एवमसन्निकृष्टपक्षकानुमितौ व्यभिचारनिरासान्न लिङ्ग-

(१) तत्रेति नास्ति २ पु० ।

व्याप्य इत्यनुमितिरूपः परामर्शो जायते । तस्मात्परामर्शात्पर्वतो वह्निमानित्यनुमितिरुत्पद्यते इति न किञ्चिदनुपपन्नमित्याहुः । यत्तु केवलव्यतिरेकिण्यनुपपत्तिरुक्ता तदपि न भद्रम् । तत्र व्यतिरेकद्वयसहचारेणान्वयव्याप्तिरेव गृह्यते । तद्विशिष्टं पृथिवीत्वं पक्षे गृह्यते व्याप्ति-

परामर्शस्यानुगमः कारणत्वं चानुपपन्नमित्युपसंहरति । इति न किञ्चिदिति । केवलव्यतिरेकिण्यपि व्यभिचारं निरस्यति । यत्त्विति । यदुक्तम् व्यतिरेकव्याप्तिग्रहेणैवेत्यादि तदसिद्धमित्याह । व्यतिरेकद्वयेति । सहचारेण तज्ज्ञानेन गृह्यते मानसप्रत्यक्षीक्रियते न त्वनुमीयते । तथासत्यनुमेयम् । अन्वयव्याप्तिमुपन्यस्य लिङ्गतया गमकस्य व्यतिरेकसहचारस्योपन्यासेऽर्थान्तराप्राप्तकालयोरन्यतरापत्तेः । ननु वन्ह्यभावधूमाभावसहचारग्रहेण व्यतिरेकव्याप्तेरग्रहे वन्ह्यभावेन धूमाभावो नानुमीयेत तद्ग्रहे चावधारणानुपपत्तिरिति चेत् । न साधने साध्यानुमित्यनुकूलव्यतिरेकव्याप्तिनिषेधस्यैवावधारणार्थत्वात् । नन्वन्यसहचारेणान्यव्याप्तिग्रहेऽतिप्रसङ्गः । न च प्रकृतसाध्यसाधननिरूपितसहचारत्वस्यानुगमकतयावश्यकस्य नियामकत्वं साध्याभावसाधनसहचारग्रहादपि व्याप्तिग्रहापत्तेः । न च व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेन कारणत्वम् सहचरितयोरेव

व्यभिचारोपलम्भेन सहचारज्ञानस्य व्यभिचारज्ञानाविरोधित्वात् । न च तत्सहचारज्ञानत्वेन व्यतिरेकज्ञानत्वेन च पृथक्कारणत्वम् कार्यान्वयव्याप्तिज्ञानावैचित्र्ये व्यभिचारप्रसङ्गात् । एतदभावेऽप्यन्वयसहचारज्ञानादन्वयव्याप्तिग्रहात् । वैचित्र्यस्य विषयरूपस्यासम्भवाज्जातिरूपत्वे चाक्षुषत्वादिना सङ्करापत्तेरिति चेन्न । स्वाधिकरणे व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेन कारणता यत्राधिकरणे साध्यसाधनयोस्तदभावयोर्वा सहचारग्रहस्तत्र हेतुसाध्याभावसामानाधिकरण्यात्मकव्यभिचारात्मकव्यभिचारज्ञानस्य सर्वथैवासम्भवादिति वदन्ति । अत्रेदं चिन्त्यम् । तथासत्यावश्यकोपजीव्यव्यभिचारज्ञानाभावेनैवान्यथासिद्धा सहचारज्ञानं कारणमेव न स्यात् । शाब्दव्याप्तिबोधादिस्थले क्लृप्तपूर्ववर्त्तिन्याः सहचारज्ञानासहकृतायाः व्यभिचारज्ञानाभावघटितायाः सामग्र्या एव व्याप्तिप्रत्यक्षोपपत्तौ तत्सहभूतत्वाच्च । नहि शाब्दतद्बोधेपि सहचारज्ञानत्वेन कारणता प्रमाणाभावात् । प्रत्यक्षेऽपि न व्याप्तिविशेषणके विशेषणज्ञानत्वेनैव तत्र सहचारज्ञानोपयोगात् । नापि तद्विशेष्यके ससम्बन्धिकपदार्थप्रत्यक्षस्य सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानादिसामग्र्यैवोपपत्तौ सहचारज्ञानकारणकल्पनस्य निर्णीतत्वात् । अन्यथा व्यभिचारज्ञानविरोधितया तर्कस्यापि तर्कत्वेन तत्र

कारणताकल्पनप्रसङ्गात् । अतएव व्यभिचारशङ्काद्वैविध्यं दर्शयित्वा तर्कभूयःसहचारदर्शनयोस्तन्निवर्त्तकत्वं क्रमेण दर्शयंस्तर्कतुल्ययोगक्षेमतां सहचारज्ञानस्य यज्ञपतिरप्युमुचत् । अगृहीतसहचारस्य व्याप्तिप्रत्यक्षानुदयात् स्वतन्त्रान्वयव्यतिरेकाभ्यां तद्धेतुत्वग्रह इति तु मन्दमेव । सहचारेन्द्रियसन्निकर्षसम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानव्यभिचारादर्शनादिघटितसामग्रीसमवधाने तदनुदयासिद्धेः । किञ्च तज्जन्यव्याप्तिप्रत्यक्षं न तावत्साध्यसाधनसहचारविशेष्यकम् व्यभिचाराभावविशेषणकं व्यतिरेकमात्रसहचारज्ञानकालेऽन्वयसहचारासन्निकर्षात् । नापि लिङ्गविशेष्यकं व्याप्तिविशेषणकम् पूर्वमन्वयव्याप्तिलिङ्गेन्द्रियसंनिकर्षयोरभावे तदनुपपत्तेः । न च व्यतिरेकसहचारज्ञानसचिवेन मनसा तज्जननम् । विशेषणोपनयम् विना तस्यापि तत्र सामर्थ्यात् । उपनये तु व्यतिरेकसहचारज्ञानसाचिव्यस्यानुपयोग एवेति । तस्मादन्वयसहचारज्ञानेन व्यतिरेकसहचारज्ञानेन वा व्यभिचारशङ्कानिवृत्तौ सत्यां सहचारेन्द्रियसंनिकर्षादिसामग्र्या साध्यसाधनयोर्व्याप्तिर्गृह्यत इत्येवं ग्रन्थो योज्यः । न चैवमनुमितौ व्याप्तिग्रहे वा कारणवैलक्षण्येऽन्वयिव्यतिरेकिभेदानुपपत्तिः । व्यतिरेकसहचारग्रहेण यल्लिङ्गगोचरव्याप्तिग्रहहेतुव्यभिचारशङ्कानिवृत्तिस्तदेव

श्च न साध्यसामानाधिकरण्यान्तर्भावेन येन फलाभावः । सर्वं चैतद्व्यतिरेकिस्थले स्फुटं भविष्यति । अत्रान्ये तु विशिष्टपरामर्शस्यानुमितिकारणत्वे विनिगमनामाहुः ।

---

व्यतिरेकि एवमन्वयीति परिभाषणात् । न च तद्धेतोपि पक्षधर्मताविवाद इत्याह । तद्विशिष्टं चेति । नन्वेवमितरभेदपृथिवीत्वसामानाधिकरण्यात्मकव्याप्तेः पृथिव्यामवधारणे हेतुसामानाधिकरण्येव साध्यसिद्धेः सिद्धसाधनमित्याशङ्क्यैकदेशिमतेन परिहारमाह । व्याप्तिश्चेति । साध्यात्यन्ताभावासामानाधिकरण्यस्य व्यतिरेकिधर्मव्याप्तित्वेन केनचित्त्वत्यादिना साध्यसाधनसामानाधिकरण्याघटितव्याप्तिनिरूपणे वक्ष्यमाणत्वादिति भावः । नन्वेव केचित्पदेन तत्पक्षाङ्गीकारसूचनात् पारमार्थिकं परिहारान्तरम् मनसि कृत्वाह । सर्वं चैत दिति । यथा न फलाभावस्तत्सर्वं प्रकारजातम् । तत्र पक्षतावच्छेदकस्य हेतोर्भेदहेतुसामानाधिकरण्यस्य पक्षे सिद्धावपि पक्षतावच्छेदकावच्छेदेन हेतुसाध्यसामानाधिकरण्यस्य सिद्धेरुद्देश्याया असिद्धेर्न फलाभाव इति वा पृथिवीत्वेपि इतरभेदसामानाधिकरण्यमिति बुद्धेः सिद्धावपि पृथिवीतरभिन्नेति पृथिवीत्व-

इयं धूमव्यक्तिर्वह्निव्याप्या न वेति संशये विपर्यये च तावदनुमितिर्नोत्पद्यत इत्यविवादम् । तथा चेयं वह्निव्याप्येति ज्ञानेऽनुमितिरुत्पद्यत इति वक्तव्यम् । न च किमर्थं वक्तव्यम् संशये विपर्ययाभाव एव तत्र कारणमास्तामिति वाच्यम् । तावदभावापेक्षया विशिष्टपरामर्शस्य कारणत्वे लाघवात् । विनिगमनाभावेनोभयोः कारणताऽसम्भवात् । न च सर्वोपसंहा-

---

विशेष्यकेतरभेदविशेषणकसामानाधिकरण्यपर्यवसायिबुद्धेरसिद्धेर्वा न भाव इति वा । विरोध्यविषयस्य ज्ञानस्य ज्ञानान्तरप्रतिबन्धकताया जनकीभूतज्ञानविघटनव्याप्तत्वादिति भावः । जनकीभूतविघटनमेव व्यापकम् न ज्ञानविघटितमप्रयोजकत्वात् किञ्चित्कारणविघटनादेव कार्यव्यतिरेकोपपत्तेरित्याशङ्क्य लाघवमूलकत्वेनाप्रयोजकतां निरस्यन्नाह । न च किमर्थमिति । लाघवादिति । एकत्वाद्भावरूपत्वाच्चेति भावः । संशयविपर्यययोः प्रतिबन्धकतया तदभावकारणताया आवश्यकत्वात्तत एवोपपत्तौ विशिष्टज्ञानकारणताकल्पने गौरवमत आह । विनिगमनेति । ननु तव मते सामान्यलक्षणाया धूमत्वेन पुरोवर्त्तिधूमे व्याप्यत्वसंशये विपर्य-

रेण व्याप्यत्वग्रहानन्तरमियं धूमव्यक्तिर्वह्निव्याप्या न वा न व्याप्येति संशयविपर्ययासम्भव इति वाच्यम् । सामान्यनिश्चयस्य सामान्यसंशयविपर्ययप्रतिरोधकत्वात् । विशेषसंशयविपर्ययोर्विशेषविनिश्चयनिवर्त्तनीयत्वात् । किञ्च यत्संशयो यत्प्रतिबन्धको भवति तन्निश्चयस्तस्य कारणं भवतीति सामान्यतः

---

यो वा यस्य प्रतिबन्धकताबलात्तद्व्याप्यत्वनिश्चयः कारणम् स्यादित्याशङ्क्याह । न च सर्व्वेति । यत्र यद्धर्मप्रकारको यन्निश्चयः स तत्र तत्प्रकारकसंशयस्य विरोधी न संशयमात्रस्य घटत्वेनेतरभेदनिश्चयेपि पृथिवीत्वेन तत्रैव तत्संशयस्य दर्शनात् अतो धूमत्वेन व्याप्तिनिश्चयात्तदवच्छेदेन संशयासम्भवेपि एतद्व्यक्तित्वावच्छेदेन स सम्भवत्येवेत्याह । सामान्येति । किञ्च यदिति । ननु व्यभिचारसंशयस्यानुमितिप्रतिबन्धकत्वेपि तन्निश्चयस्यानुमित्यहेतुत्वाद्व्यभिचारः । न च यद्व्यतिरेकनिश्चय इत्यपि विशेषणीयम् तस्यापि व्याप्तिसन्देहव्यतिरेकनिश्चययोः व्याप्तिग्रहप्रतिबन्धकत्वेपि तन्निश्चयस्य व्याप्तिनिश्चयाहेतुत्वेन व्यभिचारतादवस्थ्यात् । न च तत्सन्देहेनैव तन्निश्चयप्रतिबन्धकः ग्राह्यसन्देहत्वादिति वाच्यम् । तथासति तेनानुमितिप्रतिबन्धानुपपत्तेः न हि साक्षादस्यानुमितिप्रतिबन्धकता विरो-

च्यविषयत्वात् । अतो जनकीभूतव्याप्तिनिश्चयविघटनद्वारैव क्षेति व्यभिचारो दुर्वार एवेति चेत् । अत्र वदन्ति । संशयपदेन व्यतिरेकज्ञानमात्रं लक्ष्यते । तत्र ग्राह्याभिन्नत्वेन विशेषणीयम् । तथा च ग्राह्यभिन्नस्य यस्य व्यतिरेकज्ञानं प्रतिबन्धकं तन्निश्चयस्तद्धेतुरिति फलितार्थः । अनौपाधिकत्वव्यतिरेकज्ञानञ्च नानुमितिप्रतिबन्धकम् किन्तु तदाहितव्यभिचारज्ञानमेवेति तन्निश्चयस्यानुमित्यहेतुत्वेपि न व्यभिचार इति । अत्र विशेषसंशयाधिकरणत्वाभिमते काले धूमो वह्निव्याप्य इति निश्चयोस्ति न वा न चेत्तदभावादेव नानुमितिरिति संशयस्य प्रतिबन्धकत्वे मानाभावः । अस्ति चेद्विशेषसंशय एवानुपपन्न इति कस्य कस्य प्रतिबन्धकता स्यात् । ननूक्तम् सामान्यनिश्चयो न विशेषसंशयविपर्ययविरोधीति । सत्यमुक्तम् । न तु युक्तम् । यत्र हि यदवच्छेदकत्वज्ञानविषयीभावस्तद्धर्मज्ञानम् तत्र न तत्कोटिकसंशय इति व्याप्तिर्न तु तदवच्छिन्नतत्कोटिकसंशय इति गौरवादनुभवविरोधाच्च । अतो न संशयप्रतिबन्धकतानुरोधेन विशिष्टज्ञानसिद्धिरित्यस्वरसमन्यत्वोत्कीर्तनेन ध्वनितवान् । शाब्दलिङ्गपरामर्शजानुमितिभेदे व्याप्यत्वज्ञानकारणतासिद्धौ एकत्र निर्णीत इत्यादिन्यायेनानुमितिमात्रे तत्कल्पनमेव युक्तमित्याह । कि-

सिद्धम् । अत्रापि पक्षधर्मस्य व्याप्यत्वसन्देहा-दनुमितिर्नोत्पद्यत(१) इत्यवश्यं तत्र पक्षधर्मस्य व्याप्यत्वप्रकारकनिश्चयः कारणं वक्तव्यमिति । किञ्च पर्वतो वह्निव्याप्यवानयमिति शाब्दज्ञाना-नन्तरं वह्न्यनुमितिरुत्पद्यत इत्यविवादम् । न च तत्र व्याप्यत्वावच्छेदकः प्रकारो भासत इत्यवश्यं पक्षधर्मस्य व्याप्यत्वज्ञानमनुसरणीयम् । न च तत्र व्याप्यत्वस्य व्याप्तिव्याप्यत्वावच्छेदकः प्रकारो भासत इति वाच्यम् । यद्वह्निव्याप्यवद्भवति तद्वह्निमद्भवतीत्यवश्यमवच्छेदकरूपाया अपर-व्याप्तेर्भाने प्रमाणाभावात् । किन्तु तत्रावच्छेद्य-रूपैव धूमे वह्निव्याप्तिर्भासत इति । किञ्च तद्भाने वाऽवच्छेदकं व्याप्यत्वमेव भाति तदा सर्वत्र तदेवास्तु ॥

---

च्चेति । ननु तत्रापि व्याप्यतावच्छेदकज्ञानमेव हेतुरा-स्तामत आह। न च तत्रेति । वह्निव्याप्यत्वस्येत्य-र्थः । व्याप्तिव्याप्यत्वं वह्निनिरूपितमहाव्याप्तिव्या-प्यत्वं धूमालोकादिप्रत्येकवृत्तितत्तदसाधारणधर्मावच्छि-न्ना वह्निव्याप्तयो वह्निव्याप्तित्वेनानुगतीकृताः सकल-

---

(१) नोपपद्यते—पा० ३ पु० ।

इति लिङ्गपरामर्शवादः ।

ननु केयं व्याप्तिः? अनौपाधिकत्वं वा । स्वाभाविकत्वं वा । अव्यभिचारित्वं वा । कात्स्न्र्येन सम्बन्धो वा । साधनसमानाधिकरण-

---

धूमादिवृत्त्येकमहाव्याप्त्यवच्छेदिका इत्यर्थः । तथा च यो वह्निव्याप्यवांश्च वह्निमानिति व्याप्यत्वावच्छिन्नव्याप्त्यन्तरज्ञान एवानुमितिरिति भावः । अस्तु वस्तुतो व्याप्त्योर्भेदो न तु प्रकृते तदुभयभाने प्रमाणमस्ति येन वाक्यावगताया व्याप्तेरवच्छेदकतायोगो व्यवतिष्ठेतेत्याह । यद्वह्निव्याप्यवदिति । भानाभ्युपगमे च भवद्भिर्लिङ्गपरामर्शायैव दत्तः स्वहस्त इत्याह किञ्चेति ॥

इतिलिङ्गपरामर्शप्रकरणम् ।

आक्षेपिण्या सङ्गत्या व्याप्तिपदार्थम् विचारयिष्यन् पूर्वपक्षयति । ननु केयमिति । विषयतया तृतीयलिङ्गपरामर्शवृत्त्यनुमितिकारणतावच्छेदिकेतीदमर्थः । अनौपाधिकत्वं सम्बन्धस्येति शेषः । अनौपाधिकः सम्बन्ध इत्यर्थः । निमित्तनैमित्तिकत्वं न हि तयोः सम्बन्ध इत्यस्वरसात् । एवं स्वाभाविकत्वमित्यत्रापि द्रष्टव्यम् । साधनेति । व्यभिचारिसामानाधिकरण्यनिवृत्त्यै यावदिति । धर्मपदमुपलक्षणम् । विशिष्टेति । साध्यविशिष्टे

यावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यं वा । विशिष्टे वैशिष्ट्यं वा । तादात्म्यं वा । कार्यकारणभावो वा । अविनाभावो वा । निमित्तनैमित्तिकत्वं वा । अन्योन्याभावविशेषो वा । यावत्साध्यव्यापकव्याप्यत्वं वा । साध्यव्याप्यत्वं वा । साधनात्यन्ताभावसामानाधिकरण्यव्याप्यात्यन्ताभावप्रतियोगिसाध्यसामानाधिकरण्यं वा । साधनाभावव्यापकाभावप्रतियोगिसाध्यसामानाधिकरण्यं वा । साधनाभावव्यापकाभावप्रतियोगित्वं वा सम्बन्धमात्रं वा । अन्यद्वा? न तावदाद्यः । किं

---

साधनवैशिष्ट्यमित्यर्थः । निमित्तनैमित्तिकत्वं कार्यकारणविशेषसम्बन्धः कार्यकारणभावः सामान्यं कार्यसमवायिकारणादिसाधारण इति भेदः । यावत्साध्यव्यापकेति । यत्किञ्चित्साध्यव्यापकप्रमेयत्वादिव्याप्यत्वं व्यभिचारिण्यपीत्यत उक्तम् यावदिति । व्यभिचारिणश्च तादृशोपाध्यव्याप्यत्वाद्व्यावृत्तिः । साधनात्यन्ताभावेति । साधनात्यन्ताभावसामानाधिकरण्येन व्याप्यस्यात्यन्ताभावस्य प्रतियोगि यत्साध्यं तत्सामानाधिकरण्यं साधने व्याप्तिरित्यर्थः । साध्यसामानाधिकरण्यं व्यभिचारिसाधारणमतः प्रतियोग्य-

तदनौपाधिकत्वम् उपाधिजन्यत्वम् वा उपाधिरहितत्वम् वा ? नाद्यः । धूमे साध्ये वह्नेरपि गमकत्वप्रसङ्गात् । नहि तयोः सम्बन्ध उपाधिना जन्यते । न द्वितीयः । उपाधिरहितत्वम् हि तदुपाधिरहितत्वम् वाऽन्योपाधिरहितत्वम्

न्तम् । साध्याभावव्यापकेति । साध्याभावस्य व्यापको योऽभावस्तत्प्रतियोगिनः साधनस्य यत्सामानाधिकरण्यं सेत्यर्थः । अत्रापि प्रतियोग्यन्तं व्यभिचारिसामानाधिकरण्यव्यवच्छेदाय । सम्बन्धमात्रमिति । निर्विशेषणं सामानाधिकरण्यमात्रमित्यर्थः । तेन प्रागभावप्रध्वंसाभ्यां प्रतियोगिनोः सम्बन्धे नातिव्याप्तिः । छलशङ्कां निरस्यन्नाह अन्यद्वेति । उक्तविशेषणातिरिक्तविशेषणविशिष्टं सामानाधिकरण्यम् वेत्यर्थः । उपाध्यजन्यत्वमिति । तत आगत इत्यत्र आगतेर्लाक्षणिकत्वादिति भावः । उपाधिरहितत्वमिति । विनयादेराकृतिगणत्वादुपाधिपदात् स्वार्थेठगिति भावः । नहि तयोः सम्बन्ध इति । समानाधिकरणसम्बन्धः संयोगलक्षणः । उपाधिना जन्यत इति । तस्य तदसमवायित्वादित्यर्थः । किन्त्वधिकरणधूमाभ्यां वन्हितदधिकरणाभ्यां चेति शेषः । न चोपाध्यप्रयोज्यत्वं विवक्षितम् प्रकृते चार्द्रेन्धनस्य धूमजनकतया तत्तदधिकरणसंयोगे प्रयोजकत्वमस्त्येव ।

वा ? नाद्यः असम्भवात् । वह्नौ साध्ये धूमस्याप्यगमकत्वप्रसङ्गात् । तदुपाधिराहितत्वस्य तत्र प्रत्येतुमशक्यत्वात् । तदुपाधिप्रतीतौ च सोपाधिकतापत्तेः । न द्वितीयः । धूमस्यापि क्वचिदुपाधित्वेन तद्विरहस्यासम्भवात् उपाधिनिर्वचनेऽन्योन्याश्रयप्रसङ्गात् । नापि द्वितीयः । स्वा-

---

न च रूपाद्रसानुमाने तदुभयसामानाधिकरण्यसमवायरूपतयाऽजनकत्वादनौपयिकत्वप्रसङ्गः । नहि तदुभयोपलक्षितम् समवायमात्रं सामानाधिकरण्यम् वायौ रूपरससामानाधिकरण्यप्रसङ्गात् । किन्तु तन्नियतो विशिष्टधीविशेषनियामकः सम्बन्धविशेषः साध्यसाधनोभयघटितः स च रससामग्र्योपाधिभूतया प्रयोज्य एव । तदभावनियताभावप्रतियोगित्वस्यैव प्रयोज्यपदार्थत्वादिति चेन्न रहितत्वपक्षे वक्ष्यमाणस्य बाधकस्यानुसरणीयत्वात् । असम्भवम् विवृणोति । वन्हावित्यादिना । वन्हिव्यापकत्वे सति धूमाव्यापकस्य तदुपाधिपदार्थस्य ततोन्यत्र प्रतीत्यसम्भववे तत्रैव प्रमितिर्वाच्या ।तत्राग्रय आह। तदुपाधीति। व्याप्यहेतौ उपाधिप्रमानुपपत्तेरिति भावः। आद्य आह । तदुपाधि प्रतीतौ चेति । तत्रैव प्रमितस्य तत्रैव निषेधानुपपत्तेरिति भावः। धूमस्येति । धूमत्वस्येत्यर्थः । क्वचिदिति । व-

भाविकत्वम् हि स्वभावजन्यत्वम् वा स्वभाव एव वा । स्वभावोऽपि स्वरूपम् वा स्वधर्मो वा ? नाद्योऽसम्भवात् । नहि कश्चित्स्वात्मना स्वधर्मेण वा जन्यते । नेतरो व्यभिचा-

न्हिव्याप्यत्वेन मशकनिवर्त्तकत्वानुमानादावित्यर्थः । तद्विरहस्येति । यद्यपि संयोगात्मनि सामानाधिकरण्ये धूमत्वविरहो नासम्भवी तथाप्युपाधिपदेनोपाधिव्यवधानमेव विवक्षितम् तद्विरहश्च न तत्रेत्यर्थः । ननु प्रकृतसाध्यकसोपाधिसाधनभिन्नत्वमेवानौपाधिकत्वम् । वन्हिसाध्यकानि च सोपाधिसाधनानि प्रसिद्धान्येवा-लोकत्वादीनीति धूमादौ तद्भेदावगमसम्भवान्न सिद्ध्य-सिद्धिव्याघात इति चेन्न । अभिधेयत्वादिसाध्यके हेता-वव्याप्तेः । अभिधेयत्वादिव्यापकस्य तत्साधनाव्याप-कस्याप्रसिद्धेस्तद्भिन्नत्वस्य दुर्ज्ञानत्वात् । नचावृत्तिराका-शादिः सोपाधिस्तत्र प्रसिद्ध एवेति वाच्यम् । अभि-धेयत्वव्यापकस्याकाशाव्यापकस्याप्रसिद्ध्या तस्य सोपा-धित्वानिरूपणात् । आकाशाव्यापकत्वम् ह्याकाशव-न्निष्ठात्यन्ताभावप्रतियोगित्वं न चाकाशवत्किञ्चिदस्ति प्रसिद्धम् । द्रव्यत्वादिसाध्यकगुणादिभिन्नत्वविशेषि-तसत्तादिहेतावव्याप्तिश्चान्योन्याभावस्य व्याप्यवृत्ति-त्वादिति वदन्ति । उपाधिनिर्वचन इति । व्यापक-त्वस्य व्याप्तिनिरूपकत्वरूपस्य व्याप्तिज्ञाना-धीनज्ञानत्वादित्यर्थः । स्वभावजन्यत्वं वा स्वभाव

रित्यत्र्यानुपपत्तेः नापि तृतीयः । अव्यभिचारित्वम् हि व्यभिचारशून्यत्वम् विवक्षितम् व्यभिचारश्च साध्यात्यन्ताभावसामानाधिकरण्यम् एतच्च केवलान्वयिनि न सम्भवति । तत्र साध्यात्यन्ताभावासिद्धेः । संयोगाद्यव्याप्यवृत्तौ च साध्ये साध्यात्यन्ताभावसामानाधिकरण्येऽपि व्याप्तेरिष्यमाणत्वात् । किञ्च व्यभिचारस्य साध्यनिर्वचनाधीनानिर्वचनत्वेन साध्यस्य च व्यापकत्वेनान्योन्याश्रयात् । नापि चतुर्थः

---

एव वेति पक्षद्वये पूर्ववद्नुपपत्तिः । स्वभावपदे कर्मधारयषष्ठीतत्पुरुषत्वाभ्यामग्रिमपक्षद्वयोपपत्तिश्च द्रष्टव्या । स्वात्मनेति । आत्माश्रयादिति भावः । स्वधर्मेण वेति । अन्योन्याश्रयादिति भावः । व्यभिचारिसम्बन्धसाधारण्यं विवृणोति । तत्स्वभावस्येति । व्यभिचारिसम्बन्धस्वरूपस्य तद्धर्मस्य च यथायोगं स्वरूपत्वात्तद्धर्मत्वाच्चेत्यर्थः । एतच्च केवलान्वयिनीति । यद्यप्याकाशात्यन्ताभावादेः केवलान्वयिनोऽत्यन्ताभाव आकाशादिः प्रसिद्ध एव तथापि तत्सामानाधिकरण्यमप्रसिद्धमेवेति न तत्रापि तच्छून्यत्वनिरूपणमित्यर्थः । ननु व्यतिरेकिधर्मव्याप्तेरेव लक्षणमेतदत आह । संयोगादीति । ननु प्रतियोगिव्यधिकरणत्वेनात्यन्ताभावविशे-

कार्त्स्न्येन हि सामस्त्येन प्रकारेण सम्बन्धो विवक्षितः । न हि सामस्त्यसम्बन्धघटकः प्रकारः समस्तव्यक्तिगर्भस्य सम्बन्धस्याभावात् । प्रत्येकन्तथात्वे सामस्त्याभावात् व्यभिचारिसा-

---

धारण्यान्नैष दोष इत्यत आह । किन्त्वव्यभिचारस्येति । साध्यस्य साध्यत्वस्य । व्यापकत्वेनेति । व्यापकत्वरूपत्वेनेत्यर्थः । तस्य च व्याप्तिनिरूप्यत्वेनेत्यपि द्रष्टव्यम् । प्रकारेणेति । प्रकारत्वस्यैव तृतीयार्थत्वात्तत्रैवेत्थंभूतलक्षणतायाः पर्यवसानात् । उपाध्यायस्य छात्रेणेव सम्बन्धस्य सामस्त्येन लक्ष्यमाणत्वादिति भावः । समानाधिकरणः प्रकारो भवति छिद्रेतरत्वमिव जलाहरणान्वये । तच्चेह सामस्त्याधिकरणे सम्बन्धसत्त्वाद्वा सम्बन्धाधिकरणे सामस्त्यसत्त्वाद्वा ? नाद्य इत्याह न च सामत्यमित्यादिना अभावादित्यन्तेन । यासु बुद्धिमात्रविषयीकृतासु सामस्त्यं न तासु सम्बन्धः युगपदभावादित्यर्थः । न द्वितीय इत्याह । प्रत्येकं तथात्व इति । सम्बन्धसत्त्वेपि सामस्त्यस्य प्रत्येकमपर्याप्तेरित्यर्थः । माभूत्पर्याप्तिः सामस्त्यनिरूपकाणां प्रत्येकं सम्बन्धस्तु सम्भवलक्षणायोऽस्तु तत्राह व्यभिचारीति । समस्तवह्निवृत्तिसामस्त्यनिरूपकाणामेव केषाञ्चिद्वह्नीनां तादृशधूमसम्बन्धसम्भवादिति भावः ।

धारण्यात्पक्षान्तरप्रवेशाच्च । नापि पञ्चमः । साधनसमानाधिकरण्ययोर्वद्धर्मसामानाधिकरण्यम् हि किञ्चित्साध्यव्यक्तेर्वाऽभिधित्सितम् सकलसाधनसमानाधिकरणयावद्धर्मसामानाधिकरण्यं सकलसाध्यव्यक्तेर्वाऽभिप्रेतम् यत्किञ्चित् साधनसमानाधिकरण्ययावद्धर्मसामानाधिकरण्यं सकलसाध्यव्यक्तेर्वा विवक्षितम् साधनत्वावच्छेदकधर्मवद्यत्किञ्चिद्व्यक्तिसमानाधिकरणयावद्धर्मसमानाधिकरण्यमात्रवृत्तिसाध्यत्वावच्छेदकधर्मवद्व्यक्तिसामानाधिकरण्यं वा यावत्साधनसमानाधिकरण्ययावद्धर्मसामानाधिकरण्यं वा। नाद्यः । रासभादिसाधारण्यात् । नापि द्वि-

---

ननु साध्यवन्मात्रवृत्तित्वं साधनजातीयस्य तदर्थ इत्यत आह । पक्षान्तरेति । विशिष्टवैशिष्ट्येऽविनाभावे वा पर्यवसानात्तत्र च दोषस्य वक्ष्यमाणत्वादिति भावः । पञ्चमे साधनसाध्ययोः किञ्चित्त्वसाकल्यविवक्षयोः प्रथमद्वितीयपक्षयोः सम्भवः । साधने किञ्चित्त्वस्य साध्ये साकल्यस्य विवक्षायाम् तृतीयस्याव्युत्क्रमेण तद्विवक्षायां पञ्चमस्य । प्रथम एव रासभादिसाधारणताव्युदासाय साध्यतावच्छेदकस्य] यावद्धर्मसमानाधिक-

तीयः असम्भवात् । न हि सकलसाधनसमा- नाधिकरणैर्द्धर्मैः सर्व्वाः साध्यव्यक्तयः समाना- धिकरणाः । अत एव न तृतीयः, न चतुर्थः । अ- धिकवृत्तिसाध्ये तदभावात् । न पञ्चमः । एकव्यक्तिके यावदर्थाभावात् व्याप्तिग्रहे सिद्धसाधनप्रसङ्गाच्च । नापि षष्ठः । उक्तरीत्या

रणमात्रवृत्तित्वविवक्षायां चतुर्थस्य(१)। तत्राद्यं दूषयति । राद्यमेति । तत्रापि साधनीभूतस्वसमानाधिकरणयाव- द्धर्मसमानाधिकरणकिञ्चित्साध्यसामानाधिकरण्यसम्भवा- दित्याशयः । असम्भवं विवृणोति । नहीत्यादिना । प्रमेयत्वादयोपि न सकलसाधनसमानाधिकरणाः । सकलसाधनाधिकरणाप्रसिद्धौ तदधिकरणवृत्त्यप्रसि- द्धेरिति भावः । अत एवेति । महानसीयधूमसमानाधि- करणव्यञ्जनवत्त्वादियावद्धर्मसामानाधिकरण्यस्य महा- नसीयवह्निष्वसम्भवादेवेत्यर्थः । अधिकेति । अधिक- वृत्ति साध्यं यस्य साधनस्य तत्र धूमादौ साधने लक्षणा- भावादित्यर्थः । साध्यतावच्छेदकस्य वह्नित्वादेः साधन- समानाधिकरणयावद्धर्मासमानाधिकरणेप्यङ्गारावस्थवह्नौ सत्त्वेन तन्मात्रवृत्तित्वाभावादिति भावः । एकव्यक्तिके विवादपदं वाच्यावत् गोत्वादित्यादौ यावत्प- दस्यानेकार्थवाचित्वादिति भावः । सिद्धसाधनेति ।

(१) सम्भव इत्यनेनान्वयः ।

दूषितत्वात्। यथाकथञ्चित्सम्भवे एतावद्ज्ञायमानेऽप्यनुमितेर्जायमानत्वात गौरवकरत्वाच्च । अन्यथोपपत्तेर्वक्ष्यमाणत्वाच्च । नापि सप्तमः । अव्यापकत्वात् अभेदेन गम्यगमकभावानुपपत्तेश्च । नाप्यष्टमः । अकार्यकारणयोरपि

---

साधनसमानाधिकरणपक्षतावच्छेदकसामानाधिकरण्येन-हेतुसाध्यसामानाधिकरण्यभानादित्यर्थः । उक्तरीत्येति । यत्किञ्चित्साध्यविशिष्टे यत्किञ्चित्साधनवैशिष्ट्यस्य व्यभिचारिसाधारण्यात्। सकलसाध्यविशिष्टे सकलसाधनवैशिष्ट्यस्यासम्भवादित्यादिरूपेणेत्यर्थः। ननु साध्यतावच्छेदकाक्रान्तकिञ्चिद्विशिष्ट एव साधनवैशिष्ट्यम् विवक्षितम् तत्राह । ' एतावदज्ञानेपीति । केवलान्वयिनीति शेषः । तत्र ह्यभिधेयत्वविशिष्टे ज्ञेयत्ववैशिष्ट्यं ज्ञायते मावधारणगर्भमपि अवधारणव्यावर्त्याप्रसिद्धेरिति भावः । ननु व्यतिरेक्यनुमितिप्रयोजिकैवेयम् व्याप्तिः केवलान्वयिनि तु पृथगेव व्याप्तिर्वाच्या तत्राह । गौरवकरत्वाच्चेति । व्याप्तिज्ञानद्वयकारणताकल्पने गौरवादित्यर्थः । सर्वतो बलवत्त्वान्यथानुपपत्तिस्तदङ्गीकारयिष्यतीत्यत आह । अन्यथोपपत्तेरिति । एकथैवोपपत्तेरित्यर्थः । अव्यापकत्वादिति । धूमवन्ह्यादौ तादात्म्याभावादित्यर्थः । असम्भवादपीत्याह । अभे-

व्याप्यव्यापकभावात् । न नवमः । अविनाभावो हि साध्यं विना हेत्वभावो विवक्षितस्तथा च केवलान्वयिन्यप्रसिद्धेः । नापि दशमः । निमित्तनैमित्तिकत्वं, हि कार्यकारणभावो वा समानावच्छेदकत्वं वा ? नाद्यः । कार्यकारणभावप्रवेशात् । न द्वितीयः । अवच्छेदकत्वं हि सामानाधिकरण्यमात्रं वा नियतसामानाधिकरण्यम् वा । नाद्यः । व्यभिचारिसाधारण्यात् । नान्त्यः(१) । अन्योन्याश्रयात् । यथाकथञ्चिदवच्छेदकत्वनिर्वचनेऽप्यवच्छेकत्वान्तर्भा-

---

द्वेनेति । अकार्येति । रूपरसाद्योरित्यर्थः । विवक्षित इति । पर्युदासाश्रयणे व्यभिचारिसाधारण्येन-प्रसज्यप्रतिषेधाश्रयणादिति भावः । अप्रसिद्धेरेति । साध्यं विनेत्यंशस्य केवलान्वयिन्यसम्भवादव्याप्तिरित्यर्थः । अवच्छेदकत्वं हि समानावच्छेदकत्वं हीत्यर्थः । अन्यथावच्छेदकपदस्यैव सामानाधिकरण्याद्यर्थत्वे समानपदवैयर्थ्यापत्तेः । समानमेवावच्छेदकमधिकरणम् यस्येत्यवधारणगर्भव्युत्पत्तिमाश्रित्याह । नियतेति । अन्योन्याश्रयादिति । शब्ददृष्ट्या वस्तुत आत्माश्रयात् । ननु आपाततः साध्यवैयधिकरण्यानधिकरणत्वमेव समाना-

वेन व्यापकव्याप्यत्वे स्याताम् । तथाच केवलधूमस्य व्याप्यत्वं केवलस्य वह्नेर्व्यापकत्वं न स्यात्। नाप्येकादशः तथाभूतेऽन्योन्याभावे प्रमाणाभावात् । अव्यभिचारादेव तद्बोधकत्वे व्यभिचारस्योपजीव्यत्वे वा तस्यैव व्याप्तित्वस्वीकारस्योचितत्वात् । तदेवास्तु इति चेत न दूषितत्वात । नापि द्वादशः । आत्माश्रयात् साध्यव्यापकपदेन साध्यसमनियतावि-

---

वच्छेदकत्वमत आह । यथाकथञ्चिदिति । तत्र दोषमाह । तथाचेति । यद्यप्यवच्छेदकत्वगर्भयोरपि व्याप्यव्यापकत्वयोः केवलधूमादौ वृत्तिरविरुद्धा अन्यथा सिद्धान्तेऽप्यगतेश्च तथापीदमापाततः । साध्यवैयधिकरण्यस्य केवलान्वयिन्यप्रसिद्धिस्तु दोषो द्रष्टव्यः । तथाभूते व्याप्तित्वाभिमते । व्यभिचाराव्यभिचारवैलक्षण्योपपादकतया तत्कल्पनान्मानाभावासिद्धिरित्यत आह । अव्यभिचारादिति । अनौपाधिकत्वपर्यवसायी हि द्वादशः पक्षः स किम् समव्याप्तोपाधिवादिनो विषमव्याप्तोपाधिवादिनो वा । उभयत्र साधारणम् दोषमाह । आत्माश्रयादिति । समव्याप्तपक्षे दोषान्तरमाह । साध्यव्यापकपदेनेति । उपाधित्वाभिमतपरत्वात्तस्यैवोपाधित्वेन त्वदभिमत-

वक्षायां शेषवैयर्थ्यात् । न च तावदेवास्त्विति वाच्यम् । साध्यव्याप्यत्वस्यैव लक्षणत्वे शेषवैयर्थ्यात् । नापि त्रयोदशः । आत्माश्रयाच्छेषवैयर्थ्याच्च । नापि चतुर्दशः । अव्याप्यवृत्तौ साध्ये केवलान्वयिनि चाभावात् । अत एव न पञ्चदशः, नापि षोडशः । सम्बन्धमात्रज्ञान-

त्वादित्यर्थः । एवंसति साध्यव्याप्यत्वे सति ये साध्यव्यापका यावत्तद्व्याप्यत्वं पर्यवस्यति तत्र साध्यव्यापकांशो व्यर्थ इत्याह । शेषेति । अस्तु यावत्साध्यव्याप्यव्याप्यत्वमेव लक्षणम् तत्राप्याह । शेषेति । यावत्पदस्य मध्यमव्याप्यपदस्य चेत्यर्थः । द्रव्यत्वव्याप्यजलत्वाद्यव्याप्यपृथिवीत्वादौ द्रव्यत्वव्याप्यत्वाभावप्रसङ्गाच्चेत्यपि द्रष्टव्यम् । न च तदपि आत्माश्रयस्योक्तत्वादिति भावः । शेषेति । मध्यमव्याप्यपदस्येत्यर्थः । अव्याप्यवृत्ताविति । वृक्षः संयोगी द्रव्यत्वादित्यादौ संयोगादिसाध्यात्यन्ताभावस्य द्रव्यत्ववति द्रव्ये वृत्तेः साधनात्यन्ताभावसामानाधिकरण्याव्याप्यत्वादित्यर्थः । केवलेति । तदत्यन्ताभावाप्रसिद्धेरिति भावः । सामानाधिकरण्यवैयर्थ्यञ्च इदम् रूपवद्रसादित्यादौ रूपाद्यत्यन्ताभावस्य रसे साधनीभूतरसात्यन्ताभावसामानाधिकरण्याभावेन तदव्याप्यत्वादव्याप्तिश्चेत्यपि द्रष्टव्यम् । उक्तदोषो पञ्चदशेऽतिदिशति । अत एवेति । नन्वस्तु

स्यानुमित्यजनकत्वात् । व्याप्तिज्ञानस्य येन रूपेणानुमितिकारणत्वं तस्येह निरूप्यमाणत्वात् । नापि सम्बन्धत्वं संयोगाद्यनुगतमस्ति । नापि सप्तदशः । तदनिर्वचनात् । अखण्ड एव व्याप्तिपदार्थ इति चेत् न नियामकाभावात् ।

षोडशः पक्षः । न च व्यभिचारिसाधारण्यम् तदीयसामानाधिकरण्यस्यापि देशकालविशेषावच्छिन्नतद्व्याप्तित्वात् । देशकालान्तरयोश्चाभावादेवाप्रसङ्गादित्याशङ्क्य किमिदं लिङ्गपरामर्शवृत्त्यनुमितिजनकतावच्छेदकं रूपमुत लक्षणं व्याप्तेरिति विकल्पवाद्यं प्रत्याह नापीति । नन्वनुमितिविशेषे जनकत्वं हेतुरनुमितिसामान्ये वा ? नाद्यः । विशेषव्याप्तित्वाभावसाधनस्यार्थान्तरत्वात् । अनुमितिसामान्यप्रयोजकरूपेणैव च व्याप्तेर्निरूप्यमाणत्वात् । अनुमितिसामान्यप्रयोजकव्याप्तिसामान्यत्वाभावसिद्धेः लाघवानुगमाभ्यामस्यैवानुमितिसामान्यप्रयोजकत्वात् । न च तज्ज्ञानादनुमितिसामान्यप्रसङ्गः । विशेषसामग्रीसहकृताया एव सामान्यसामग्र्याः कार्याजकत्वादिति चेत् । अत्र वदन्ति सर्वं हीदं वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वं वाच्यत्वसमानाधिकरणमिति जानतोऽपि विशेषादर्शनदशायां वाच्यत्वं ज्ञेयत्वसमानाधिकरणात्यन्ताभावप्रतियोगीति भ्राम्यतोऽनुमितिप्रसङ्गः । न च व्यभिचारपर्यवसायीद-

मेव तासां प्रतिबन्धकत्वम् । तद्धि न व्याप्तिज्ञानविषयत्वक-
तया तस्य सम्बन्धमात्रज्ञानाविघटकत्वात् । अपि
चासात् बाधप्रतिरोध्यान्यहेत्वाभासानां साक्षा-
त्प्रतिबन्धकत्वानङ्गीकारात् विरोध्यविषयत्वेनासम्भ-
वाच्चेति । न च केवलान्वयिनि केवलान्वयिसम्बन्धत्वेन
ज्ञानस्य विशेषसामग्रीत्वाद्बाध्यत्वं ज्ञेयत्वसमानाधिकर-
णात्यन्ताभावप्रतियोगीति ज्ञाने च वाच्यत्वे वृत्तिमदत्य-
न्ताभावप्रतियोगित्वस्यैव ग्रहणात् तद्विघटने च सामा-
न्यसामग्र्या अप्यसत्कल्पत्वान्नानुमितिरिति वाच्यम् ।
तथासति साधनवत्पदप्रक्षेपेणाक्लृप्तस्य वृत्तिमदत्यन्ता-
भावाप्रतियोगिसाध्यसामानाधिकरण्यज्ञानस्यैव व्यतिरे-
कण्यपि सम्भवेनानुगतविशेषसामग्रीद्वयस्य तद्भिन्नानुभव-
विद्धसम्बन्धसामान्यसामग्रीस्वरूपस्य च कल्पने गौरव-
प्रसङ्गात् । अन्यथा वस्तुत्वज्ञानमभावज्ञानम् वा सामा-
न्यसामग्रीं कल्पयित्वा विशेषसामग्रीव्यतिरेकादनुमिति
व्यतिरेक उपपाद्यताम् कृतं सम्बन्धज्ञानेनापीति ।
द्वितीयं दूषयति व्याप्तिज्ञानस्येति । तथा च तदभि-
धानमर्थान्तरमिति भावः । नापि सम्बन्धत्वमिति ।
अनुगमस्य विशिष्टधीनियामकत्वस्य नियमगर्भत्वेनान्यो-
न्याश्रयादिति भावः। अविद्धो हेतुरित्याह अखण्ड इति ।
जातिवद्धर्मान्तराघटितशरीरः । अभावसमवायादिवद-
नुभूयमानतयाऽसमवायित्वाच्च जातिभिन्न इत्यर्थः ।

नियामकसद्भावे तेनैवान्यथासिद्धेः अन्यथोप पत्तेर्वक्ष्यमाणत्वाच्च। नन्वविनाभाव एव व्याप्तिः। न च केवलान्वयिन्यव्याप्तिः साधनसमानाधिकरणाव्याप्यवृत्त्यत्यन्ताभावाप्रतियो-

अत्राप्यो नात्रेति परिचायकाभावादतिप्रसङ्ग इत्याह नियामकेति। अविनाभावादेर्नियामकत्वमाशङ्क्याह तेनैवेति। नन्वेवंजातेरनुच्छेदप्रसङ्गः साक्षात्सम्बन्धाखण्डत्वानुगमादि चात्रापि तुल्यमत आह। अन्यथेति। तथा चाप्रामाणिकगौरवादखण्डोपाधिरयुक्त इति भावः। अत्र सखण्डोपाध्युच्छेदप्रसङ्गः साधनसमानाधिकरणात्यन्ताभावप्रतियोगित्वज्ञानेपि तज्ज्ञानाभिघातादनुमितिप्रसङ्गश्च दोषोऽधिको बोध्यः। साधनसमानाधिकरणेति। साधनसमानाधिकरणस्य व्याप्यवृत्तेरत्यन्ताभावस्याप्रतियोगि साध्यं यस्य सामानाधिकरण्येन सम्बन्धेन तत्त्वमित्यर्थः। पृथिवीत्वसमानाधिकरणप्रागभावप्रतियोगिगन्धादिनिरूपिततद्व्याप्तिसङ्ग्रहायात्यन्तेति। व्यतिरेकिव्याप्तावव्याप्तिनिरासाय साधनसमानाधिकरणेत्यन्ताभावविशेषणम्। एतत्संयोगसाध्यकैतद्द्रव्यत्वादिव्याप्तिसङ्ग्रहाय व्याप्यवृत्तीति। न चाव्याप्तिवारकविशेषणवैयर्थ्यम्। अखण्डाभावे तदसम्भवात्। व्याप्यवृत्तिविशेषणप्रक्षेपगौरवेणापरितुष्यन्नाह। अन्योन्याभावेन वेति। तस्याविना-

गिसाध्यकत्वस्य तदर्थत्वात् । अन्योन्याभावेन वा तन्निर्वचनम् । तथाहि साधनसमानाधिकरणान्योन्याभावाप्रतियोगिसाध्यवत्कत्वम् वा साधनत्वाभिमतसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्कत्वं वा तदर्थ इति । तदपि(१)न व्याप्तिमन्तरेण प्रतियोगित्वस्य निर्वक्तुमशक्यत्वात् । साधनत्वाभिमतसाध्यत्वाभि-

भावस्य निर्वचनम् । साधनसमानाधिकरणस्यान्योन्याभावस्याप्रतियोगिसाध्यवद्यस्याधिकरणम् तस्य तदधिकरणकत्वमेव व्याप्तिरित्यर्थः । असम्बिद्धिनिरासाय साधनसमानाधिकरणेत्यन्योन्याभावविशेषणम् । धूमवान्पर्वतो न वन्हिरिति धूमसमानाधिकरणान्योन्याभावप्रतियोगिसाध्यकत्वेनाव्याप्तिनिरासाय वदिति । अन्योन्याभावस्य व्याप्यवृत्तित्वान्न संयोगसाध्यकद्रव्यत्वादिव्याप्तावव्याप्तिः । अत्र साध्यत्वसाधनत्वयोर्व्याप्तिघटितत्वादात्माश्रयः । धूमवन्महानसं वन्हिमत्पर्वतो न भवतीति प्रतीतेर्वन्हिमतः पर्वतस्य साधनसमानाधिकरणधूमवन्महानसवृत्त्यन्योन्याभावप्रतियोगित्वाद्व्याप्तिश्चेत्यरुचेराह । साधनत्वाभिमतेति । अभिमानस्यैव सामानाधिकरण्यनिरूपकत्वान्नात्माश्रयः । धू-

(१) एतदपि–पा० १ पु० ।

मतयोरपि व्याप्तिपदार्थत्वप्रसङ्गात्। कथं वा व्यर्थविशेषणे नातिप्रसङ्गः। तत्र व्याप्तेरनभ्युपगमात्। अत्यन्ताभावान्योन्याभावाभ्यां निरुक्तयोर्मध्ये का व्याप्तिः। न तावद्द्वितयमपि अननुगमात्। उभयसाधारणस्यैकस्याभावात्। तस्मादविचारितसुन्दर एवायं व्याप्तिपदार्थ इति।

---

समानाधिकरणान्योन्याभावप्रतियोगिता च वन्हिमत्पर्वतत्वेनैवावच्छिद्यते न वन्हिना साध्येन। धूमवान्न वन्हिमानिति सामान्येनाप्रतीतेरिति नाव्याप्तिरपीति भावः। त्रितयसाधारणमन्योन्याश्रयं दोषमाह। व्याप्तिमन्तरेणेति। प्रतियोगित्वं हि विरोधित्वम्। विरोधश्च सहानवस्थाननियमः नियमश्च व्याप्तिरेवेत्यन्योन्याश्रयादित्यर्थः। तृतीये साधारणम् दोषमाह साधनत्वाभिमतेति। तथा चाभिमतस्वभावदशायां व्याप्यस्याव्याप्यत्वप्रसङ्गः। न च यद्यद्व्याप्यं तदेव कदापि तदव्याप्यं सम्भवतीति भावः। केचित्तु तथासत्यचाक्षुषत्वप्रसङ्ग इति भावमाहुः। त्रिष्वप्यतिव्याप्तिमाह कथं वेति। ननु लक्ष्यमेव तत्तत्राह। तत्रेति। का व्याप्तिरिति। विषयतया लिङ्गपरामर्शवृत्त्यनुमितिकारणतावच्छेदिकेति शेषः। किं प्रत्येकरूपेणोतधर्मोपग्रहेण नाद्य इत्याह। अननुगमादिति। न द्वितीय इत्याह। उभयसाधारणेति।

अत्रोच्यते । प्रतियोगित्वं तावदभावविरोधित्वमेव(१)। अभावत्वञ्च सत्तानधिकरणत्वमे-

सिद्धान्ताभिधानं प्रतिजानीते । अत्रेति । तत्र धूमवृत्तितत्तद्वह्निसामानाधिकरण्यरूपव्याप्तिविशेषणानाम् वन्हिनिरूपितधूमनिष्ठव्याप्तित्वेनानुगतीकृतानां धूमत्वमवच्छेदकम् नतु धूमत्ववन्हित्वावच्छेद्यव्यधिकरणधूमवन्हिसाधारणम् व्याप्त्यन्तरमस्ति । एवमालोकेपि व्यभिचारिसाधारणधर्मावच्छिन्नं ययोः सामानाधिकरण्यम् तयोर्व्याप्तिपक्षमाश्रित्यात्यन्ताभावगर्भे तल्लक्षणेऽन्योन्याश्रयमुद्धरति । प्रतियोगित्वमिति । एवं चान्योन्याभावप्रतियोगित्वे नाव्याप्तिः । अत्यन्ताभावगर्भलक्षणेऽनुपयोगितया तत्प्रतियोगित्वस्यात्रालक्ष्यत्वात् इति ध्येयम् । नन्वभावत्वं प्रतियोगिज्ञानविषयत्वं जन्यत्वं च नियमगर्भमित्यन्योन्याश्रयः । अथ भावविरोधित्वं तथापि विरोधस्य नियमगर्भतया स एवान्योन्याश्रयः इत्यत आह अभावत्वं चेति । परमात्रजातिप्रकारकप्रत्ययाविशेष्यत्वमित्यर्थः । तेन सामान्यादौ नातिव्याप्तिः सत्सामान्यमित्याद्यारोपविशेष्यत्वात् अभावत्वस्य तु सत्ताविरोधितया तेन रूपेणोपस्थिते न तथारोपेपीति भावः । ननु सामान्यत्वाभावत्वयोः सत्तावैयधिकरण्यनियमादविशिष्टं विरोधित्वं प्रती-

(१) अभावरहितत्वमेव—वा० ५ पु० ।

व । यद्वा विरोधित्वमेव प्रतियोगित्वम् । विरोधित्वं तु यद्येन सह न प्रमीयते तत्तेन सह विरुद्धं(१)

तिश्च सन्नभाव इत्यप्यनुभवसिद्धा स्वरूपसत्तयोपपादनं च सामान्येपीत्यव्याप्तिरतिव्याप्तिर्वेति चेत् । न । अभावप्रकरणे समाधास्यमानत्वात् । नन्वभावस्य विरह इत्यत्र षष्ठ्याः सम्बन्धमात्रं नार्थः । दण्डाभावसामानाधिकरण्यसम्बन्धेन पटस्यापि दण्डाभावप्रतियोगित्वापत्तेः न प्रतियोगित्वमात्माश्रयादित्यस्वरसादाह यद्वेति । ननूक्तमेवात्रान्योन्याश्रयत्वमत आह यद्येनेति । विरोधित्वं चेत्यादिविरुद्धमित्यन्तस्तु प्रमादपाठः । ननु क्वचित्कदाचिद्रूपमात्रप्रत्ययाज्ज । नियमेनाप्रमीयमाणत्वं तु पुनरात्माश्रयकारि गोत्वश्वत्वयोरप्येवंभूतयोर्विरोधितया मिथः प्रतियोगित्वापत्तिश्च । अथ यत्सहप्रमाविषयभिन्नम् यत्तदित्यर्थः । न च प्राचीनातिव्याप्तिः । जलपृथिव्योः सहप्रमाविषयस्य रूपस्य तद्भिन्नत्वाभावादन्योन्याभावस्य व्याप्यवृत्तित्वात् तेऽपि च रूपविशेषस्य रसविरोधित्वस्येष्टत्वात् । नाप्युदीचीना प्रकृतलक्षणान्तर्गतप्रतियोगित्वपदार्थस्यैवानेन निर्वचनात् । तस्य च गोत्वाश्वत्वादौ सत्त्वेऽप्यदोषादिति मतम् । तन्न । रूपं गुणो मेयत्वादित्यत्र पृथिव्यादौ मेयत्वसमानाधिकरणयोः साध्यगुणत्वतदन्योन्याभा-

(१) विरोधि—पा० ३ पु० ।

न चाभावे साध्येऽतिव्याप्तिः । तत्रापि विरोधित्वस्य विद्यमानत्वात् । न चाऽननुगमः । लाघवेनान्योन्याभावान्तर्भावेन व्याप्तेरिष्यमाणत्वात् तृणारणिमणिन्यायेनात्र समाधानमित्यप्याहुः । न चा-

---

वयोः सत्त्वेन साध्यवतो गुणस्य ज्ञानसमानाधिकरणान्योन्याभावाविरोधित्वात् ज्ञानाभावसाध्यकस्य प्रमेयत्वेऽव्याप्तिप्रसङ्गात् । अथापि स्यात् अत्यन्ताभावगर्भलक्षणोपयोगितया संसर्गाभावप्रतियोगित्वस्येदं निर्वचनमिति । तथापि वृक्षः संयोगी द्रव्यत्वादित्यादौ संयोगादेः साध्यस्य द्रव्यत्वसामानाधिकरण्यात्यन्ताभावेन सह प्रमीयमाणतया तद्भिन्नस्वरूपप्रतियोगित्वाभावसम्भवे तदुपसङ्ग्रहाय व्याप्यवृत्तिविशेषणोपादानस्य वैयर्थ्यप्रसङ्गात् । अन्योन्याभावगर्भलक्षणस्यैव स्वयं सिद्धान्तयिष्यमाणत्वेन तत्साधारणप्रतियोगितानिर्वचनस्यावश्यकत्वाच्च । यद्येन सह नेत्येतावतापि विवक्षितार्थलाभे प्रमीयमाणत्ववैयर्थ्याच्चेति चेत् न स्वरूपसम्बन्धविशेषस्यैवानुभवविशेषसाक्षिकस्य लक्षणद्वयेनोपलक्षणादिति वदन्ति । ननु घटो ज्ञानरहितः प्रमेयत्वादित्यत्राभावसाध्यकव्यभिचारिसामानाधिकरण्येऽतिव्याप्तिः । अभावरूपसाध्यस्य प्रमेयत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वात् अभावप्र-

तियोगिकाभावान्तरानभ्युपगमादित्यत आह न चा-
भावे साध्येऽतिव्याप्तिरिति । अतिरिक्ताभावाप्रति-
योगित्वेपि प्रमेयत्वसमानाधिकरणा घटतन्निष्ठात्य-
न्ताभावास्तेषामप्रतियोगित्वेपि प्रतियोगिपदार्थत्वा-
भिमतस्य विरोधित्वस्य सत्त्वेनाविरोधित्वाभावात् ।
स्वरूपेणैव घटराहित्यस्य घटवत्त्वाविरोधित्वाभ्युपग-
मादिति भावः । अव्याप्तिरित्यपि पाठः हेतु-
विरोधात् । ननु गुणाद्यवच्छेदेन व्याप्यवृत्तेर्द्रव्यत्वसमा-
नाधिकरणात्यन्ताभावस्य प्रतियोग्येव संयोग इति
तत्सामानाधिकरण्ये द्रव्यत्ववृत्तावव्याप्तिरिति चेन्न
साधनसामानाधिकरण्यावच्छेदेन व्याप्यवृत्तेरत्यन्ताभा-
वस्याप्रतियोगीत्यर्थात् । ननु साधनसमानाधिकरण-
व्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्य-
मिति विशेषव्याप्तिलक्षणे प्रत्यधिकरणम् व्यधिकरण-
गन्धात्यन्ताभावसमानाधिकरणे पृथिवीत्वादौ गन्धा-
द्यव्याप्यतापत्तिरिति चेन्न साधनाधिकरणीभूतयद्वृत्ति-
निष्ठात्यन्ताभावाप्रतियोगिनी या साध्यव्यक्तिस्तदधि-
करणत्वम् तस्य साधनस्य तया साध्यव्यक्त्या सह
तदधिकरणे व्याप्तिरिति विवक्षितत्वात् । न चैवं
द्रव्यत्वमपि गन्धवति गन्धव्याप्यं स्यादिति दोषः
इष्टत्वात् । इयांस्तु विशेषः । पृथिवीत्वावच्छेदेन
विशेषव्याप्तिगृह्यते । पृथिवीत्वतया व्याप्यवृत्ति-

साध्यसामानाधिकरण्याभाववद्धर्मावृत्तित्वात् । ननु द्रव्यत्वत्वावच्छेदेन तस्य जलादिवृत्तित्वावच्छेदेन व्याप्यवृत्तिसाध्यसामानाधिकरण्याभाववति धर्मे द्रव्यत्वे वृत्तेरिति । नन्वत्यन्ताभावे साधनसामानाधिकरण्यं साधनाधिकरणाधिकरणत्वम् । तथाच धूमाधिकरणतदवयवतदूर्ध्वदेशाधिकरणात्यन्ताभावप्रतियोगिमूलावच्छिन्नधूमवत्यपि समवायावच्छिन्नात्यन्ताभावप्रतियोगी च वन्हिरिति न तद्व्याप्यत्वं धूमस्य स्यादिति चेत् । न ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धेन साधनाधिकरणे वर्तमानस्य तत्सम्बन्धावच्छिन्नप्रतियोगिकात्यन्ताभावस्य विवक्षितत्वात् । नन्विदानीं मौगेर्त्वादिति कालसम्बन्धगर्भसामानाधिकरण्यस्य जिघृक्षायां गोत्वाधिकरणे प्रलयकाले गोध्वंसस्य विरोधित्वेन तदत्यन्ताभावासम्भवात्तद्प्रतियोगिसामानाधिकरण्यम् गोत्वे व्याप्तिः स्यादिति चेन्न । प्रतियोगिसमवायिदेश एव ध्वंसस्य तदत्यन्ताभावविरोधित्वेन तदाप्यत्यन्ताभावसत्त्वात् । अन्यथा तन्नित्यताभङ्गप्रसङ्गात् । नचैवं नित्ययोः कालिकव्याप्तावव्याप्तिः साधनीभूतनित्याधिकरणसमानाधिकरणात्यन्ताभावप्रतियोगित्वादपरनित्यस्यैति वाच्यम् । संयोगात्यन्ताभाववत्तस्य व्याप्यवृत्तित्वाभावात्प्रतियोग्यसमानाधिकरणत्यस्यैव तदर्थत्वात् । वस्तुतस्तु अत्यन्ताभावगर्भलक्षणोपयोगि-

तयैव विरोधत्वरूपप्रतियोगित्वनिर्वचनमित्यवोचामैव । एवञ्च व्याप्यवृत्तित्वविशेषणमप्यनावश्यकम् । साध्यस्य नित्यसाधनसमानाधिकरणस्यात्यन्ताभावाविरोधित्वानपायात् उभयोर्नित्यत्वेन कालिकविरोधासम्भवात् । एवं च समवायितया वन्ह्यत्यन्ताभावसामानाधिकरण्येन धूमादावव्याप्यत्वशङ्कापि नास्ति । समवायितया तदत्यन्ताभावेऽपि वन्ह्यविरोधात् । एतेन व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिकाभावपक्षेऽप्यदोषः । ननु सामानाधिकरण्यमेकाधिकरणसम्बन्धः । सम्बन्धत्वं च विशिष्टधीनियामकत्वं जनकत्वगर्भम् तच्च व्याप्तिगर्भमित्यात्माश्रयादिति चेन्न । नियामकसम्बन्धस्य व्याप्तिधीविषयत्वेऽपि नियामकत्वरूपसम्बन्धत्वस्याविषयत्वात् संसर्गविधयैव तत्र तद्भानाभ्युपगमात् । प्रकारत्वे वा तस्य संयोगत्वादिनैव तथात्वम् न तु सम्बन्धत्वेन । तज्ज्ञानानां तु सम्बन्धज्ञानत्वेनानुगतीकरणमित्येतावत् । नन्वत्यन्ताभावान्योन्याभावगर्भव्याप्तिवैलक्षण्ये तज्ज्ञानानामनुगमकाभावे कथमनुमितित्वावच्छिन्नकार्यकारणताग्रह इत्याशङ्क्य निराकरोति । नवेति । लाघवेनेति । व्याप्यवृत्तित्वविशेषणाप्रक्षेपलाघवेनेत्यर्थः । ननु संयोगात्यन्ताभावव्याप्यवृत्तित्वभ्रमस्थलीयानुमितौ व्यभिचारादेव सानवृत्यनुमितिजनकतायां विषयतयाऽनवच्छेदकत्वान्न व्याप्यवृत्तित्वविशेषितात्यन्ताभावगर्भाऽव्याप्तिरिति किं ततो-

स्या लाघवोक्त्या । अथ न व्याप्यवृत्तित्वावगाह्यत्यन्ताभावगर्भव्याप्तिज्ञानं हेतुरिति तत्र तदुपादानम् किन्तु वस्तुस्वरूपमिति । ज्ञानन्तु साधनसमानाधिकरणो योऽत्यन्ताभावः प्रतियोगिसमानाधिकरणत्वेन न ज्ञायते तदप्रतियोगित्वेन ज्ञायमानं यत्साध्यं साधननिष्ठतत्सामानाधिकरण्यज्ञानत्वेनैवानुमितिहेतुरिति मतम् तर्हि संयोगान्योन्याभावाव्याप्यवृत्तित्वभ्रमस्थलीयानुभवसिद्धानुमितिहेतौ ज्ञाने उक्ताऽन्योन्याभावगर्भव्याप्तेरपि विषयतया जनकतानवच्छेदकत्वान्नेयमपीति कृतमनुमित्यप्रयोजके व्याप्तिस्वरूपे लाघवेन । ज्ञानेत्वस्याः साधनसमानाधिकरणो योऽन्योन्याभावः प्रतियोगितावच्छेदकसमानाधिकरणत्वेन न ज्ञायते तत्प्रतियोगितानवच्छेदकत्वेन ज्ञायमानं यत्साध्यं साधननिष्ठतत्सामानाधिकरण्यविषयत्वेनानुमितिजनके स्थलद्वयेऽवच्छेदकपदार्थप्रवेशादत्यन्ताभावगर्भव्याप्तिज्ञानापेक्षया गौरवमेवेति वैपरीत्यमापतितमिति चेत् । अत्र वदन्ति । सप्रतियोगिवृत्तित्वेनाज्ञायमानत्वस्यैवान्योन्याभावे विशेषणस्य विवक्षायां प्रथमावच्छेदकपदार्थस्याप्रवेशात् । विशेषव्याप्तिकारणताश्रयणे द्वितीयस्याप्यनुपयोगात् । नचैवमपि तुल्यता न तु लाघवम् । प्रतियोग्यधिकरणाधिकरणत्वरूपप्रतियोगिसामानाधिकरण्यापेक्षया प्रतियोग्यधिकरणकत्वस्य लघुत्वादिति । तच्चिन्त्यम् । प्रतियोगित्वस्य विरोधित्वरूपतायां प्रति-

योगिसामानाधिकरण्येनाज्ञायमानत्वस्यात्यन्ताभावेऽप्य-
नर्थकत्वात् । सामान्यव्याप्तिज्ञानकारणतापक्षे उक्तर-
श्नावच्छेदकपदार्थस्यानतिरिक्तवृत्तित्वादिरूपस्य प्रवेशे
गौरवाप्रतीकारात् । किञ्च विशेषव्याप्तिज्ञानकारण-
त्वेऽपि नायं धूम एतद्वन्हिव्याप्य इति ज्ञानमिष्यते
सिद्धसाधनापत्तेः । अपितु तत्तद्धूमव्याप्तीनां धूम-
वृत्तिवन्हिव्याप्तित्वेनानुगतीकृतानामवच्छेदकाभ्यां धू-
मत्ववन्हित्वाभ्यां निरूपणाद्धूमो वन्हिव्याप्य इत्येवं ।
न च व्याप्यवृत्तिसाध्यसामानाधिकरण्याभाववद्धर्मा-
वृत्तित्वाज्ञाने निरूपकत्वज्ञानं धूमत्वस्य सम्भवति ।
किञ्च स्वाभावसमानाधिकरणत्वेनाज्ञायमानत्वमेवोभय-
श्नाभावविशेषणमास्ताम् स चात्यन्ताभावोऽत्यन्ताभावस्य
प्रतियोग्येव अन्योन्यभावस्य तु प्रतियोगितावच्छेदको
धर्म एवेत्यन्यदेतत् । तथाचाविनिगमादुभयकारणतां
कोऽवधारयितेति । नव्यास्तु अत्यन्ताभावान्योन्याभाव-
गर्भव्यभिचारज्ञाने तावदनुमितिर्नेति सर्वानुभवसिद्धम् ।
तथाच यज्ज्ञानमुभयव्यभिचारविरोधि सैव व्याप्ति-
रुन्नेया । तादृशी चाशेषसाधनाश्रयाश्रितधर्मावच्छि-
न्नसामानाधिकरण्यरूपैव । अशेषसाधनाधिकरणे सा-
ध्यवत्त्वग्रहस्य तदत्यन्ताभावतद्वदन्योन्याभावग्रहवि-
रोधित्वात् । न चाशेषसाधनाश्रये साध्यतावच्छेद-
कावृत्त्यऽसम्भवः स्वाश्रयघटितपरम्परासम्बन्धेन सा-
ध्यतावच्छेदकस्यापि साधनवति वृत्तेः अत एव

भिमतपदार्थान्तर्भावेन व्याप्तिप्रसङ्गः। यद्यत्स-मानाधिकरणात्यन्ताभाव(१)प्रतियोगि न(२) भवति तत्तद्व्यापकम् । यत्समानाधिकरणान्योन्याभावप्रतियोगिता येन नावच्छिद्यते तत्तस्य व्याप्यम् । न चात्र सर्वनामखण्डनावतारः तस्य सक-

श्रीप्साबलेन सकलसाधनवत्साध्यवत्तिप्रतिपादने साध्यतावच्छेदकस्यापि तद्वृत्तिप्रतीतेरवर्जनीयत्वादुदाहरणस्य व्याप्त्युपदर्शकत्वमपि सङ्गच्छते । एतदज्ञानेऽत्यन्ताभावादिघटितव्याप्तिज्ञानान्नानुमितिः लाघवोक्तयुक्तिभ्यामेतज्ज्ञानस्यैव हेतुत्वादिति । द्रव्यमद्धिकरणं सत्त्वादित्यत्र साधनीभूतसत्ताश्रये सर्वत्र साध्यतावच्छेदकसत्ताया वृत्तेस्तदवच्छिन्नगुणकर्मसामानाधिकरण्यं सत्तायां व्याप्तिः स्यात् अतः स्वाश्रयघटितपरम्परासम्बन्धेनेति विवक्षणीयमेव । अनुमित्यवान्तरजातिविशेषावच्छिन्ने कार्यविशेषे तद्व्याप्तिज्ञानकारणमिति नाननुगम इत्येकदेशिमतमाह । तृणारणीति । अनभिमतदशायामव्याप्यत्वप्रसङ्गं निरस्यति । नचेति । ननु यत्तत्पदाभ्यामर्थाविशेषविवक्षायां तदितरविशेषव्याप्तावव्याप्तिः सामान्यविवक्षायामतिप्रसङ्ग इत्यत आह । नचात्रेति । तत्तदनु-

(१) न्योन्याभाव—पा० २ पु० ।

(२) यत्र—पा० १ पु० ।

ललोकव्यवहारोच्छेदकत्वेनोपेक्षणीयत्वात्। न च व्यर्थविशेषणेऽतिप्रसङ्गः अत्र व्याप्तेरिष्यमाणत्वात् न हि तत्र व्याप्तिरेव न वर्तत इति व्यर्थविशेषणार्थः अपि तु तेन विशेषणेन व्याप्तिर्नावच्छिद्यत इति।

केचित्तु साध्यात्यन्ताभावासामानाधिकरण्यं

मितिहेतुतत्तद्व्याप्तिज्ञानविषयव्याप्तेरेव लक्षणान्नोक्तदोष इति भावः। व्यर्थविशेषणेति। व्याप्तिं निरस्यति। नचेत्यादिना। नीलधूमेऽपि धूमत्वावच्छिन्ना व्याप्तिरिष्यत एवेति लक्ष्यत्वान्न तत्रातिव्याप्तिरित्यर्थः। नन्वेवं पक्षधर्मे नीलविशिष्टधूमे व्याप्तिसत्त्वे व्यर्थविशेषणतानुपपत्तिरत आह। नहीति। कस्तर्हि तदर्थ इत्यत आह। तेन विशेषणेनेति। अधिकमीश्वरवादे वक्ष्यते।

जरन्नैयायिकमतमाह। केचित्त्विति। साध्यविरोध्यसामानाधिकरण्यमित्यर्थः। तेनाभावसाध्यव्याप्तौ नाप्रसिद्ध्याऽव्याप्तिः। नवा नित्ययोः कालिकव्याप्तावव्याप्तिः। नवा संयोगविशेषसाध्यके द्रव्यत्वादिना व्याप्तौ अव्याप्तिनिवृत्त्यै व्याप्यवृत्तिविशेषणप्रक्षेप इति ध्येयम्। नन्वत्रासामानाधिकरण्यं न तदनधिकरणाधिकरणत्वं व्यभिचारिसाधारण्यात्

व्याप्तिः। न चाकाशादीनामपि व्याप्त्य।व्यत्वप्रसङ्ग इति वाच्यम् तेषां व्याप्यऽत्वेपि दोषाभावात । ततोऽपि वह्न्यनुमितिः स्यादिति चेत न तेषामपक्षधर्मत्वात् । न च केवलान्वयिन्यव्याप्तिः । तत्र केवलान्वयित्वस्यैव व्याप्तित्वात् । तृणारणिमणिन्यायेन कार्यविशेषस्य कल्पनादित्याहुः ।

अपरे साधनव्यापकधर्मावच्छिन्नसाध्यस-

---

किन्तु तदधिकरणानधिकरणत्वं तथाचाकाशादौ व्याप्तिप्रसङ्ग इत्याशङ्क्य दूषयति । नचाकाशादीनामिति । लक्ष्यत्वादेव नातिव्याप्तिरित्याह । तेषामिति । केवलान्वयिनि साध्यात्यन्ताभावाप्रसिद्धेरव्याप्तिमाशङ्क्याह । नचेति । केवलान्वयित्वस्यैवेति । वृत्तिमदत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यस्यैवेत्यर्थः । नन्वेवं व्याप्त्यननुगमे तज्ज्ञानानामनुगमकान्तराभावात्कथमनुमितित्वावच्छिन्नकार्यहेतुत्वमित्यत आह । तृणारणीति । केवलान्वयिसाध्यकानुमितित्वव्यतिरेकिसाध्यकानुमितित्ववैलक्षण्यस्य कार्येऽपि कल्पनान्न व्याप्त्यननुगमो दोष इति भावः ।

अनौपाधिकत्वव्याप्तिवादिनामभिमतमनौपाधिकत्वं निर्वक्ति । अपरे तु साधनव्यापकेति । अवच्छिन्नः अनतिरिक्तवृत्तिः । सम्बन्धः सामानाधिकरण्यम् । व्यभिचारिणि साधनहेतुविशेषणतापन्नोपाधित्वाभि-

म्बन्धो व्याप्तिः । एतद्भङ्गश्चावच्छेदकाभावा-
त् । अवच्छेदकस्य साधनव्यापकताविरोधात् ।
सम्बन्धस्वरूपविरहात् सम्बन्धिविरहात् । अ-
वच्छेदकः समनियत एव एतदभिप्रायेणोच्यते

मतसाधनाव्यापकधर्मावच्छिन्नसाध्यसम्बन्ध इति न तत्रातिव्याप्तिः । सद्धेतौ हेतुतावच्छेदकस्य धूमत्वादेरेव साध्यसम्बन्धितावच्छेदकत्वात्तस्य च साधनव्यापकत्वान्नातिव्याप्तिरपि । न च व्यापकत्वप्रवेशेनात्माश्रयस्तद्वन्निष्ठव्याप्यवृत्त्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वादिति भावः । प्रसङ्गादाह । एतद्भङ्गश्चेति । अवच्छेदकाभावादिति । साधनव्यापकस्यावच्छेदकत्वाभावादित्यर्थः । यद्यपि सति सम्बन्धेऽवच्छेदकमवच्छेदकत्वं वाऽऽवश्यकम् असति तु सम्बन्धस्वरूपविरहादेव तद्भङ्ग इति तात्पर्यम् । अवच्छेदकस्येति । यथा निषिद्धत्वस्य वैधहिंसायां हिंसात्वाव्यापकस्य । सम्बन्धस्वरूपेत्यथोदयास्ताचलवर्त्तिकपिकदम्बशाखयोर्नित्यत्वकृतकत्वयोर्वा ? ननु कथं तर्हि पर्वतत्वादेर्धूमवह्निसम्बन्धावच्छेदकस्य साधनव्यापकताविरहेऽपि धूमे न व्याप्तिभङ्ग इत्यत आहावच्छेदकश्चेति । समनियतो न्यूनानतिरिक्तवृत्तिः । यद्यप्यन्यूनवृत्तेरेव साधनव्यापकताविरहो व्याप्तिभञ्जको नानतिरिक्तवृत्तेः तथापि साधनत्वाभिमते व्याप्तिप्रतियोग्युपयोगित-

समनियत एवोपाधिरिति । एवम्भूतोपाधिना सोपाधिर्व्याप्यत्वासिद्ध एवान्तर्भवति । व्यभिचारोन्नायकतोक्तिस्तु तद्योग्यतामात्रेण । विषमव्याप्तोपाधिश्च न दूषणम् व्यभिचारनियमाप्रतिसन्धाने उपाधिज्ञानेऽप्यनुमितिदर्शनात् । अन्यथा

---

याऽनतिरिक्तवृत्तित्वोपादानम् । स्वोक्ते आचार्यसम्मतिमाह । एतदेवेति । व्यभिचारिसाधने साध्यसम्बन्धितावच्छेदकस्यैवोपाधित्वादिति भावः । नन्वेवमुपाधेः व्याप्त्यभावरूपताप्रसङ्गे व्यभिचारव्याप्यत्वासिद्धिसत्प्रतिपक्षान्यतमोन्नायकत्वप्रसिद्धिविरोध इत्याशङ्क्याह । एवंभूतोपाधिरिति । साध्यव्याप्यव्यापकभूतेनाव्याप्य इत्यर्थः । तथा चेष्टापत्तिरिति भावः । प्रसिद्धिविरोधं परिहरति । व्यभिचारेति । उपलक्षणमेतद्व्याप्यत्वासिद्धिसत्प्रतिपक्षयोरपि व्याप्यत्वासिद्धिरूपेण स्वेनैवानुमानस्य दूषितत्वेन तदर्थं व्यभिचारानपेक्षणादिति भावः । ननु विषमव्याप्ते समनियतत्वमव्यापकमत आह । विषमेति । ननु व्यभिचारोन्नायकतया सोऽपि दूषणक्षम एवेत्यत आह । व्यभिचारेति । अन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानस्यान्यदीयसाध्यव्याप्यत्वज्ञानाप्रतिबन्धकत्वादिति भावः । असिद्धं दर्शनमित्याशङ्क्याहान्यथेति । व्यभिचार-

भूयोदर्शनेनाभूयोदर्शनस्य शतशो व्यभिचारित्वात् । तत्र सहकारिविशेषस्वीकारे प्रथमदर्शनेऽपि तुल्यत्वात् । अत एव य एव सम्बन्धो मया गृहीतः पुरा स एव पश्चादपि गृह्यत इति व्यवहार इति। मैवम् । सकृत्स-

भिचारदर्शनम्। नचान्यस्य तदस्तित्वे मानमिति तत्राप्यसम्भवः। तुल्यन्यायतया व्याप्यत्वासिद्ध्यदर्शनमपि वाच्यं कुतो नोक्तम् । किञ्च अत्यन्ताभावगर्भव्यभिचारज्ञानेप्यन्योन्याभावगर्भव्याप्तिप्रत्ययोदयाद्व्यभिचारः। न चासिद्धिः विषयकृतविरोधाभावात् । अन्योन्याभावगर्भव्याप्त्यभावव्याप्यत्वप्रतिसन्धानस्यानवश्यकत्वादिति चेत् । न ग्राह्यव्याप्तिज्ञानविरोधिज्ञानविषयतावच्छेदकदर्शनाभावस्य विवक्षितत्वात् । केवलान्वयिन्यपि साध्यगोचरस्य साधनसमानाधिकरणात्यन्ताभावे प्रतियोगित्वज्ञानस्य विरोधिनः सम्भवात्। न च देशगर्भव्यभिचारज्ञानेऽपि कालिकव्याप्तिग्रहाद्व्यभिचारः। ग्राह्यकालिकव्याप्तिज्ञाने दैशिकव्यभिचारज्ञानस्याविरोधित्वात्। अत एवात्यन्ताभावगर्भव्यभिचारादिज्ञानेऽप्यन्योन्याभावगर्भव्याप्तिज्ञानाद्व्यभिचार इत्यपि निरस्तम्। व्याप्यत्वासिद्धेरपि व्याप्तिज्ञानविरोधिज्ञानविषयत्वान्न तदर्थं पृथक् प्रयासोऽस्ति । नच

व्यतिरेकिविशेषे प्रतियोग्यप्रसिद्ध्याऽभावानिरूपणप्रस-ङ्गः । फलबलेन कस्यचिद्व्यभिचारदर्शनकल्पनादिति प्राञ्चः । वस्तुतस्तु व्याप्तिप्रमातुर्व्यभिचारज्ञानाभावे व्यभिचाराभावविशिष्टसहचाररूपव्याप्तिग्रहानुपपत्तिः प्रतियोग्यप्रसिद्धेः । नच तेनैव प्रतिबन्धापत्तिः घटा-भावग्रहे तुल्यत्वात् । तदधिकारणनिष्ठतया घटज्ञा-नान्न प्रतिबन्ध इति चेत् । तुल्यम् । नहि तत्तद्व्यभि-चारत्वं तज्ज्ञानवृत्तिविरोधितावच्छेदकं येनान्यत्र तद्दर्शनं न स्यात् तस्य तत्तद्व्याप्तिज्ञान एव विरो-धितावच्छेदकत्वात् व्याप्तिप्रत्यक्षमात्रहेतुत्वस्य च तत्सामान्यज्ञानविरोधितावच्छेदकप्रकारकदर्शनस्य यत्र हेतौ विषयत्वे तु यस्मिन्प्रमातरि समवायित्वेन यदा भावस्तदा तस्मिन्प्रमातरि समवायितया तत्र हेतौ विषयतया व्याप्तिग्रह इति नान्यत्र तत्कल्पनादीति तत्त्वम् । भूयोदर्शनविपक्षबाधकतर्कयोस्तु व्याप्तिग्रह-विरोधिविलक्षणव्यभिचारशङ्कानिवृत्तिद्वारैव कारणता । तथाहि । द्विविधा तावन्नियमग्रहविरोधिनी शङ्का । अयमेव धूमो वन्हिसमानाधिकरणो दैवात् अन्यस्तु सर्वस्तद्व्यधिकरण एवेत्येका । क्वचिद्वन्हिव्यधिकरणः स्यादित्यपरा । तत्र यदाद्यैव जायते नान्त्या तदा तदन्यधूमेपि वन्हिसामानाधिकरण्यग्राहिभिर्द्वितीयादि-दर्शनैस्तन्निवृत्तौ विनापि तर्कं व्याप्तिर्गृह्यते । यदा तु

द्वितीया तदा तर्कादेव तन्निवृत्तौ तद्ग्रहः । तथा चानयो-र्विकल्पेपि संशयविरोधिदर्शनत्वेनानुगमो द्रष्टव्यः । अत एवानौपाधिकत्वस्य व्याप्तिव्याप्यत्वग्रहे तद्दर्शनमपि हे-तुः । एतेनोपाधिज्ञानस्य स्वतोप्रतिबन्धकत्वे तदनुपप-त्त्याऽनौपाधिकत्वज्ञानस्य कारणताकल्पनं दूरापास्तमि-त्येतदेव दूरापास्तम् मन्तव्यम् । व्याप्तिप्रत्यक्षमात्रे द्वन्द्वोपस्थितेनेतरेतरयोगेनैव भूयोदर्शनादीनामनेन का-रणत्वमुक्तमिति मन्यमानः प्रतिज्ञामात्रमप्यसहमानः पूर्वपक्षी प्रत्यवतिष्ठते । नन्वित्यादिना । सकृद्दर्शनेन सहचारदर्शनेन। गृह्यते विषयीक्रियते । तथा च व्यतिरेक-व्यभिचार इति भावः। उक्तं भूयोदर्शनत्वमेव पुरस्कृत्याह नत्विति । भूयोदर्शनेन सहचारदर्शनजन्यसंस्कारजनि-तदर्शनेन। व्यभिचारित्वात् पार्थिवत्वलोहलेख्यत्वादावि-ति शेषः । तथाच व्याप्तिप्रत्यक्षे सहचारदर्शनस्यान्व-यव्यभिचारोपीति भावः । ननु सहकारितर्कापराधा-त्तत्र व्याप्त्यग्रहो न सहचारदर्शनस्याकारणत्वादित्यत आह । तत्रेति । हन्तैवमवश्यकल्प्यमानपूर्ववर्तिनस्त-र्कादेव कार्यसम्भवे सहचारदर्शनमन्यथासिद्धत्वादका-रणमेवेत्याह । प्रथमदर्शनेपीति । प्रामाणिकानुभवबा-धितं च तज्जन्यत्वम् व्याप्तिप्रत्यक्षस्येत्याह । अत-एवेति । गृहीतः पुरेति । सहचारदर्शनाजन्यदर्शनवि-षयीकृत इत्यर्थः । पश्चात्सहचारदर्शनजन्यसंस्कार-

हकारदर्शनेन उभयकोट्युपस्थितौ व्यभिचारसंशयो भवत्येव। भूयोदर्शने तूभयकोट्युपस्थितौ कदाचिदपि व्यभिचारसंशयो न भवत्यपि। अतो भूयोदर्शनस्य व्याप्तिग्रहकारणत्वस्वीकारात्। किञ्च सकृद्दर्शनेन व्याप्तिर्गृह्यत इत्यस्य कोऽर्थः। किं प्रथमदर्शनस्यैव व्याप्तिविषयत्वं व्याप्तिविषयकज्ञानजनकत्वं वा? नाद्यः। प्रथमदर्शनस्य व्याप्तिविषयत्वेऽनन्तरम् संशयो न स्यात्। निश्चि-

---

तसविवदर्शनेन। न व्याप्तिप्रत्यक्षमात्रे भूयो हेतुरिति ब्रूमः किन्तु संशयस्थलीये। नवा तत्रापि भूयस्त्वेन किन्तु संशयविरोधित्वेन। न च तत्सकृद्दर्शने तस्मिन्सत्यपि संशयदर्शनादिति सिद्धान्तयति। नैवमिति। व्यभिचारसंशय इति। अयमेवैको धूमो दैवाद्वन्हिसमानाधिकरणः अन्यस्तु तद्व्यधिकरणोऽपीत्येवंरूप इत्यर्थः। ननु भूयोदर्शनेऽप्येतदन्यो धूमो वन्हिव्यधिकरणो नवेति वा कश्चिद्धूमो वन्हिव्यभिचारी नवेति वा संशयसम्भवात्तदपि न संशयविरोधीत्यत आह भूयोदर्शने त्विति। न भवत्यपीति। तस्य व्याप्तिकोटावौत्कट्याधायकत्वेन तुल्यवत्कोट्यन्तरोपस्थितिप्रतिबन्धकत्वात्पूर्वोक्तसंशयद्वयानवश्यम्भावात् कदाचिद्भावे तु यावत्संशयं भूयोदर्शनतर्कानुसरणे दोषाभावादि-

ते संशयायोगात् । न च भूयोदर्शनेऽपि समानमेतदिति वाच्यम् । नहि भूयोदर्शनेन व्याप्तिर्गृह्यत एवेत्युच्यते किन्तु यदा गृह्यते तदा तर्कादिसहका-

---

र्यर्थः । अत इति । व्यभिचारसंशयविरोधित्वादित्यर्थः । नन्वेवं स्वाधिकरणावच्छेदेन व्यभिचारसंशयविरोधित्वं सकृत्सहचारदर्शनस्यापीत्यविशेषात्तेनापि व्याप्तिर्गृह्यतामत आह । किञ्चेति । नाद्य इत्यनन्तरं यतइति शेषमाश्रित्य दूषयति प्रथमेत्यादिना । समानमिति । क्वचिद्वह्निं विनापि धूमः स्यान्न वेतिसंशयादिति भावः । कारणान्तरव्यतिरेकात्कार्यानुत्पत्तिर्न कारणतां विहन्ति किन्तु तद्व्यतिरेके न चेह सा भूयोदर्शनं विना तदभावादित्याह । नहीति । अयमेव धूमो वन्हिसमानाधिकरण एतदन्यस्तु सर्वो वह्निव्यभिचारी नवेतिव्यभिचारसंशयविशेषस्यलोप एव व्याप्तिग्रहस्ते द्वितीयस्य तादृशि तदुभयान्यविषयके संशय तृतीयस्येत्यादिक्रमेण दर्शनानां हेतुत्वाभ्युपगमादस्य च तथात्वादिति भावः । तत्किमीदृशि संशये न गृह्यत एव नेत्याह । किन्त्विति । विलक्षणव्यभिचारशङ्काद्वयनिवृत्तिद्वारा द्वाभ्यामेव व्याप्तिग्रहो जन्यतस्त्वर्थ इत्यर्थः । ननु भूयस्त्वस्य त्रिचतुरादिभावेनाननुगमान्न तद्धेतुरिति शङ्कामुपजीव्य संमत्या परिहरति । अतएवेति । उत्तरोत्तरव्यभिचारसंशयपर्यन्तदर्शनानुसरणा-

रिणा भूयोदर्शनेनैव । अत एवोच्यते न दर्श- नानां बहुत्वसङ्ख्यानियम इति । ननु ममापि समानमेतत् नहि सकृद्दर्शनेन व्याप्तिर्गृह्यते एव किन्तु यदा व्याप्तिर्गृह्यते तदा तर्कादिसहका- रिणा सकृद्दर्शनेनैवेति मत्पक्ष इति । न प्रथम-

---

दित्यर्थः । ननु तर्कनिवर्त्यसंशयाभावदशायां स्वनि- वर्त्यसंशयविशेषनिवर्त्तनद्वारा तर्कमात्रस्यापि व्याप्ति- प्रत्यक्षजनकत्वसम्भवात्तर्कजन्यं प्रथमदर्शनं कुतो न व्याप्तिविषयं स्यादिति शङ्कते । ननु ममापीति । गृह्यत एव विषयीक्रियत एव, येन व्यभिचारसंशयो न स्यादिति शेषः । तर्कादिसहकारिणेति कर्मधारयः, व्यधिकरणे तृतीये । यो भूयोदर्शनसहकारित्वाभिमत- स्तर्कः तेनैव जनितेन सकृद्दर्शनेन व्याप्तिर्विषयीक्रि- यत इत्यर्थः । तर्को न प्रथमदर्शने हेतुः तदुत्तरकाली- नत्वादित्याह । न प्रथमदर्शन इत्यादिना । कर्मयोग- ग्रहणस्य प्रायिकत्वान्निमित्तसप्तम्येषा । तेन प्रथमद- र्शननिमित्तमित्यर्थः । प्रथमदर्शनात्पूर्वमिति यावत् । यद्वक्ष्यति "प्रथमदर्शनपूर्वसमयेऽसम्भवादिति" । तर्का- दीनामित्यादिपदेनानौपाधिकत्वग्रहः । कुत इत्यत आह सर्वत्रेति । तदनन्तरमिति । तथाच प्राथमिक- दर्शनस्य तर्कजन्यत्वासम्भवान्न व्याप्तिविषयकत्वमिति

दर्शने तर्कादीनामनवतारात्। सर्वत्र संशयोपस्थापितकोटिविषयकस्तर्को भवति। अत्र च सहचारदर्शनस्य संशायकत्वे तदनन्तरं संशयेन भवितव्यमिति सहचारदर्शनमुपजीव्यैव परं तर्कावतारात्। निर्विषयकस्य तर्कस्याभावात्। यद्ययं धूमो वह्निव्यतिरेकेण स्यादकारणकः स्यादित्येवमाकारस्य तर्कस्य प्रथमदर्शनपूर्वसमयेऽसम्भवात्। एतेन य एव सम्बन्धो मया गृहीतः स एवेदानीं गृह्यत इति निरस्तम् सम्बन्धमात्रस्य

---

भावः। व्याप्तिग्रहे सहचारदर्शनोत्थाप्यतर्कमाह। यद्ययमिति। वह्न्यसमवहितसामग्र्यजन्य इतीदमोर्थः। वह्निव्यतिरेकेणेति। वह्निसमवहितसामग्र्यजन्य इत्यर्थः। वन्ह्यसमवहितसामग्र्यजन्यत्वे सतीत्यपि विशेषणीयम् घटादौ व्यभिचारवारणाय। वह्निस्पर्शादौ व्यभिचारवारणाय विशेष्यम्। धूमस्य वह्न्यसमवहितसामग्र्यजन्यत्वनिश्चयदशायामेवायं तर्कोऽभिमतः। तेन व्यतिरेकमादाय विपर्ययपर्यवसानम्। प्रत्यभिज्ञाविरोधं निरस्यति। एतेनेति। एतदर्थमाह सम्बन्धेति। साध्यसाधनतावच्छेदकधर्मपुरस्कारेण व्याप्तेर्ज्ञानमनुमित्युपयोगि न तद्वह्नित्वादिपुरस्कारेण सिद्धसाधनप्रसङ्गात्। तत्र च तत्पुरस्कारेणैवानौपाधिकत्वज्ञानं हेतुः

व्याप्तिग्रहस्य च निरूप्यमाणत्वात् । किञ्च स-
कृद्दर्शनेन वह्निधूमयोः कस्य स्वाभाविकः कस्य
सोपाधिकः सम्बन्ध इति न निश्चेतुं शक्यते
व्यभिचारिसाधारण्यात् । योग्यायोग्योपाधिनि-
रासस्याशक्यत्वात् । यद्वा सर्वोपसंहारेण सामा-
न्यलक्षणया प्रत्यासत्त्या व्याप्तिग्राह्या । सामा-
न्यत्वञ्च सकृद्दर्शनगम्यमतो भूयोदर्शनोपयोगः ।

तच्च तत्सहचारदर्शनेन तत्तत्सम्बन्धानौपाधिकत्वग्रहेपि
न वृत्तमतोऽपि न सकृद्दर्शनगम्या व्याप्तिरित्याह ।
किञ्चेति । व्यभिचारिसाधारण्याद्व्यभिचारितावच्छेद-
कधर्मावच्छिन्नसाधारण्यादित्यर्थः । अशक्यत्वादिति ।
सकृद्दर्शनेनेत्यनुषज्यते । साध्यसाधनसहचरितानामने-
कधर्माणां साध्याव्यापकत्वसाधनव्यापकत्वग्रहस्य भूयो-
दर्शनाधीनत्वादिति भावः । नन्वयोग्योपाधिविधूननं
न भूयोदर्शनेनापि शक्यं तदर्थमनुमानोपासने चानव-
स्थेत्यरुचेराह यद्वेति । सर्वोपसंहारेणेति । साध्यसाधन-
तावच्छेदकावच्छिन्नसकलव्यक्त्यन्तर्भावेनेत्यर्थः । यद्यप्ये-
वं सत्ताद्रव्यत्वादिव्याप्तेर्न भूयोदर्शनगम्यतासिद्धिः ।
तथापि क्वचिदपि व्याप्तौ तत्सिद्ध्या स्वमतं सिद्ध-
मेवेति भावः । तत्किमत आह सामान्यत्वञ्चेति ।
सामान्यत्वेन भानं न समानव्यक्तिभानं विनेति तावद्-
व्यक्तिभानार्थं भूयोदर्शनापेक्षेति भावः । यद्यपि भूयो-

ननु सर्वोपसंहारेण व्याप्तिर्गृह्यत इत्यसिद्धम् । गृहीततावद्व्यतिरिक्तातीतानागतव्यक्तिभाने प्रमाणाभावात् । भावे वा षोढा प्रत्यासत्तिग्रहिर्भावप्रसङ्गाच्च । न च पक्षनिष्ठधूमगतव्याप्तिग्रहस्यानुमितिकारणत्वे तस्य वाऽनुमानस्य पक्षनिष्ठधूमव्याप्यत्वग्रहजन्यत्वे तद्व्याप्यत्वस्य च तद्व्यापकग्रहाधीनत्वेन सामान्यलक्षणाप्रत्यासत्तिः कल्पनीयेति वाच्यम् । तत्र मया व्याप्तिग्रहस्यानङ्गीकारात् । व्याप्यजातीयग्रहस्य पक्षेऽनुमिति-

---

दर्शनैरपि विशिष्य समानतावद्व्यक्तिभानमशक्यम् सामान्येनैव भानं पुनः सामान्यज्ञानत्वापेक्षया समानव्यक्तेर्भानाभिधानेन व्यवस्थापादकम् । अत एव सामान्यं स्वरूपेण ज्ञातं प्रत्यासत्तिर्न तु सामान्यत्वेनेति गङ्गेशचरणाः । तथापि प्रथमे परिहार एव तात्पर्यम् । प्राभाकरः शङ्कते नन्विति । चक्षुःसन्निकर्षाद्यभावादित्यर्थः । ननु सामान्य एव सनिकर्ष इत्यत आह । भावे वेति । तथाचापसिद्धान्तस्तवेति भावः । अपसिद्धान्तमीषत्करपरिहारं मन्यमानस्यानुमानानुपपत्तिबलेन सामान्यलक्षणासाधनमाशङ्क्यनिराचष्टे नचेति । नन्वनुमित्या कार्येण त्वमपि गले पादिकयाऽङ्गीकारयिष्यते तत्राह । व्याप्येति । लाघवाद्व्याप्तिस्मरणपक्षधर्मता-

कारणत्वादिति । मैवम् । वह्निप्रतियोगिकव्याप्ति-
विशिष्टयावद्धूमग्रहस्य मानसप्रत्यक्षसिद्धत्वात् ।
तदनुरोधेन सामान्यलक्षणायाः प्रत्यासत्तेः कथ्य-
मानत्वात् । न चातिरिक्तप्रत्यासत्तिकल्पनाप-
त्तिः । विशेषणतायामेवान्तर्भावात् । यद्वा कति-

ज्ञानानां समानप्रकारकत्वेनानुमितिकार्यकारणभावो न
तु समानविषयत्वेनापि गौरवात् । तथाहीन्द्रियसंनिकृष्ट
धूमविशेषे धूमवत्त्वेनैव प्रकारेण प्रथमं व्याप्तिग्रहः
तदनन्तरं तेनैव प्रकारेण व्याप्तिस्मृतौ सत्यां व्याप्ति-
स्मृतिप्रकारधूमत्वप्रकारकपक्षधर्मधूमज्ञानादनुमितिरि-
त्येतावतोपपत्तौ किं सामान्यलक्षणयेति भावः ।
तत्तत्पक्षभेदभिन्नयावत्तद्धूमग्रहस्य व्याप्यतावच्छेदक-
जातिविशिष्टवैशिष्ट्यग्रहत्वापेक्षया लाघवेन व्याप्यत्व-
विशिष्टवैशिष्ट्यग्रहत्वेनैवानुमितिकारणतयाऽन्वयव्य-
तिरेकसहचारधीसचिवमानसप्रत्यक्षसिद्धत्वात्तदनुरोधेन
सामान्यलक्षणासिद्धिः । न च प्रत्यासत्त्यन्तरकल्प-
नागौरवं फलमुखत्वादित्याह मैवमिति । वस्तुतस्तदपि
नास्तीत्याह । नचातिरिक्तेति । यद्वा सर्वो धूमो वह्नि-
व्याप्य इत्यनुभवानुरोधेन तां समर्थयते । मैवमिति । नहि
सर्वत्वमपि धूमवत्प्रत्येकपर्यवसायि येन धूमत्वेनेव सर्व-

त्वेनापि गृहीते धूमविशेष एव व्याप्तिग्रहः सर्वत्वप्रकारक उपपद्यतेति भावः। अनुभवासिद्धिं निरस्यति। मानसप्रत्यक्षेति। अपसिद्धान्तं परिहरति। नचातिरिक्तेति। विशेषणतायामिति। इन्द्रियसम्बद्धसामान्यविशेषणतायामित्यर्थः। नन्विन्द्रियसम्बद्धस्य धूमादेर्विशेषणं सामान्यमिति विवक्षितम् उतेन्द्रियसम्बद्धस्य सामान्यस्यातीतादिव्यक्तये विशेषणमिति? नाद्यः। अतीतादिव्यक्तीनां संनिकर्षानुपपादनप्रसङ्गात्। न द्वितीयः जातिव्यक्त्योः समवायस्वीकारेण स्वरूपसम्बन्धरूपविशेषणताऽसम्भवात् समवायादिस्थलेपि तत्कल्पने संयुक्तसमवायाद्युच्छेदप्रसङ्गाच्च। न चेदानीं तद्व्यक्तीनामसत्त्वान्न तत्र समवायः विशेषणताया अपि निराश्रयताप्रसङ्गात्। अथोच्यते प्रागभावध्वंसतत्प्रतियोगिस्वरूपसम्बन्धस्यान्यतरमात्ररूपता वाच्यैव अन्यथा प्रागभावतत्प्रतियोगिनोर्ध्वंसतत्प्रतियोगिनोश्चैकदाऽसत्त्वेन तदुभयस्वरूपसम्बन्धालीकत्वप्रसङ्गात् तथेहाप्यतीताभिः सामान्यमेव विशेषणज्ञानन्तु तदुभयाश्रितान्या काचित् या निराश्रया प्रसज्येत। अत एव विशेषणतास्वरूपस्य सामान्यस्वरूपतां दर्शयति विशेषणतायामेवेति। एवमपि देशविप्रकृष्टवर्तमानव्यक्तिभानाय प्रत्यासत्त्यन्तरकल्पनाप्रसङ्गात्। नहि दशान्तरवर्त्तमानधूमेपि सामान्यं विशेषणता तत्र तस्य समवायादेव, तत्स्थाने च तदभ्युपगमे संयुक्तसमवाद्युच्छे-

पयव्यक्तिसन्निकर्षमासाद्यासन्निहितातीतानागत-व्यक्तिविषयकं ज्ञानं चक्षुरादिनैव जन्यते । न च चक्षुरादिनाऽसन्निकृष्टज्ञानजननेऽतिप्रसङ्गः । यो-

द्प्रसङ्गात् । किञ्चैवमभावप्रत्यक्षवत्सामान्यलक्षणवि-शेषणतारूपलौकिकप्रत्यासत्तिजन्यत्वादतीतादिज्ञानस्य लौकिकत्वापत्तिः । इन्द्रियसम्बद्धातीन्द्रियमहावायु-विशेषणतया स्वरूपसत्या तत्र रूपाभावग्रहवत्परमा-णुवच्छेदेनेन्द्रियसम्बद्धस्वरूपसद्द्रव्यत्वसामान्यविशेष-णतया द्रव्यत्वस्मृतिमतो द्रव्यमात्रचाक्षुषप्रत्यक्ष-प्रसङ्गः । विशेषणताप्रत्यासत्तेः प्रत्यक्षतानपेक्षणात् सामान्यलक्षणातिरेकितापक्षे तु धर्मिग्राहकप्रमाणेन स्वप्रकारकलौकिकप्रत्यक्षसामग्रीसमवहितस्य सामान्य-स्यैव स्वप्रकारकज्ञाने प्रत्यासत्तित्वकल्पनान्नातिप्रसङ्ग इत्यतिरेकावश्यकत्वे स एवापसिद्धान्तोऽयं पूर्वमदोषा-मेत्यरुचेराह । यद्वेति । लौकिकप्रत्यक्षसामग्रीसम-वहितेऽपि कतिपयव्यक्तिविशेषणम् द्रष्टव्यम् । अतो न वाय्वादिसंनिकर्षादतिप्रसङ्गः । नन्वेवमतीन्द्रियं किमपि न स्यादत आह । नचेत्यादिना । योग-जादृष्टवदिति योगजधर्मस्य स्वरूपेणैव नियामकता न प्रत्यासत्तितयेत्याशयेन दृष्टान्तत्वम् । नन्वेवमदृष्टवत्स्वरू-पसतः सामान्यस्य नियामकत्वेनेदन्त्वप्रकारकलौकिक-प्रत्यक्षसामग्रीसमवहितधूमसंनिकर्षमासाद्य चक्षुतातद्र

गजादृष्टवत्सामान्यस्य नियामकत्वात् । धूमत्वसामान्यग्रहे सर्वा एवातीतानागतव्यक्तयोऽवभासन्ते । यावद्विशेष्यसन्निकर्षस्य गौरवकरत्वात्साक्षात्काराकारणत्वात् । यद्वा सामान्यलक्षणया प्रत्यासत्त्याऽसंनिकृष्टातीतानागतव्यक्तिभाने कथं प्रागप्रतीतवह्निविशेषणकपर्वतविशेष्यकमनुमितिज्ञानम् विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वात् । न च तदनुरोधेन व्यापक एव तदास्तामिति वाच्यम् । व्याप्येपि प्रत्यासत्तेरविशेषात् धूमस्यापि क्वचिद्व्यापकत्वात । नापि द्वितीयः । इष्टत्वात् नह्यस्माकं दर्शनानां भूयस्त्वं तन्त्रम् किन्तु सकृद्दर्श-

त्तिधूमत्वनियामकसहकृतेनातीतानागतविप्रकृष्टधूमभानप्रसङ्ग इत्यत आह । धूमत्वसामान्यग्रह इति । सर्वा धूमत्वाश्रयाः । अवभासन्ते विषयीभवन्ति । प्रकारकेऽतीतादिभाने विशेषणज्ञानविषयः सामान्यं नियामकमिति नोक्तदोष इति भावः । नन्वतीतादिविशेष्यासंनिकर्षे कथं तद्विशेष्यकप्रत्ययोदय इत्यत आह । यावद्विशेष्येति । तथाच सामान्यं प्रत्यासत्तिरेव नेति क्वातिरिक्तप्रयुक्तोऽपसिद्धान्त इति भावः । तदेवमनुभवसिद्धसर्वधूमव्याप्तिग्रहानुपपत्त्या सामान्यस्य नियामकत्वं सा-

धितम् तत्प्रत्यासत्तितयाऽन्यथा वेति तु गृहविवादो न सकृद्दर्शनविवादः उभयथापि भूयोदर्शनसिद्ध्यविरोधात् । सम्प्रत्यनुभवे विप्रतिपद्यमानं प्रति प्रकारान्तरेण सकलवन्हिग्रहस्यावश्यकत्वं प्रसाध्य तदर्थं सामान्यस्य नियामकत्वं साधयति । यद्वेति । प्रत्यासत्त्येति । प्रत्यासत्तित्वं तस्य साधनीयमित्याशयः । नच विशेषणतावच्छेदकवन्हित्वप्रकारकव्यक्त्यन्तरज्ञानादेव तदुपपत्तौ विशेषणज्ञानकारणत्वे मानाभाव इति वाच्यम् । जन्यविशिष्टज्ञानरूपानुगतकार्यस्याकस्मिकतानिरासार्थमनुगतकारणस्यापेक्ष्यमाणस्य विशेषणज्ञानादन्यस्यासम्भवात् निर्विकल्पकसिद्धान्तसंरक्षणाय तस्यावश्योपपाद्यत्वाच्चेति भावः । यद्यप्येकव्यक्तिकसाध्यादिविशेषणिकानुमितिरन्तरेणापि सामान्यलक्षणां निर्वहत्येव तथाप्यनेकव्यक्तिकसाध्यविशेष्यकानुमित्यैव तत्सिद्धिरिति द्रष्टव्यम् । अस्तु तर्हि साध्य एव सामान्यलक्षणाकल्पनम् तावताप्यनुपपत्तिशान्तेर्न तु साधन इत्यत आह । नचेति । अविशेषादिति । स्वप्रकारकलौकिकप्रत्यक्षसामग्रीसमवहितसामान्यत्वेनैव प्रत्यासत्तित्वं कल्पितमनुपपत्त्या न तु व्यापकवृत्तित्वविशेषितेनापीत्यर्थः । नन्वविशेषेण तत्कल्पनेपि व्यापक एवोपयोगादिष्यतां सा अन्यथा संनिहितघटाद्यंशे सामान्यलक्षणा सम्भवन्त्यपि नेष्यते । तत्कस्य हेतोः? अनुपयोगादिति चेत्

नेन चक्षुरादिना व्याप्तिर्गृह्यते । शब्दादिना च सकृद्दर्शनेनापि गृह्यत इति, तन्न निषिध्यते ।

व्याप्येपि तुल्यमत आह । धूमस्यापीति । व्यापकतादशायामेव प्रत्यासत्तित्वमिति तु परेणाप्यविवक्षितम् नहि वन्हेर्व्यापकताकाले सामान्यलक्षणया ज्ञानमिष्यते तदातनतज्ज्ञानस्य स्मृतित्वात् किन्तु तज्जनकानुभवकाले एवेति नाशङ्कितम् । वस्तुतः संनिहितांशे नानुपायोगात्सामान्यप्रत्यासत्तित्वत्यागः अपि तु लौकिकत्वप्रत्या योढाप्रत्यासत्त्यसमवहितांशज्ञान एव तत्कल्पनात्प्रकृतव्याप्तिग्रहकालीनधूमग्रहस्य च व्याप्यधूमांशे प्रत्यासत्त्यन्तराभावेनालौकिकत्वस्येष्टत्वादेव नानुपपत्तिरिति भावः । प्रथमदर्शनस्य व्याप्तिज्ञानजनकत्वमेव व्याप्तिग्राहकत्वमिति द्वितीयपक्षं दूषयति नापीति । इष्टतामेव विवृणोति । नह्यस्माकमिति । व्याप्तिज्ञानमात्रजनन इति शेषः । किन्तु संशयस्थलीयव्याप्तिप्रत्यक्ष एवेति भावः । असकृदित्यादिव्युत्क्रमे व्याजकरणे तृतीये । गृह्यते विषयीक्रियते । उपलक्षणं चैतत्प्राथमिकप्रत्यक्षस्यापीति द्रष्टव्यम् । तत्स्थलीयेऽपि व्याप्तिज्ञानमात्रेऽतत्स्थलीये च व्याप्तिप्रत्यक्षे व्यभिचारमाह । शब्दादिना चेति । व्यभिचारसंशयस्थल इतिशेषः । व्यभिचारसंशयनिवर्त्तकतर्कोत्थापनस्य तत्साध्यस्य प्रथमदर्शनानन्तरमेव सम्भवादिति भावः । शब्दादिना

ननु दर्शनानां भूयस्त्वं वा विवक्षितम्, भूयसां दर्शनम् वा । न तावद्द्वितीयः । एकमात्रदृष्टान्तिके तदभावात् । नाद्यः । तावतां दर्शनानामेकदाऽसम्भवेन चक्षुरादिसहकारित्वायोगात् । न च संस्कारद्वारा तेषां चक्षुरादिसहकारित्वम् संस्कारस्य स्मृतिमात्रकारणतया कल्पनादिति । मैवम् । संस्कारस्यानुभवेऽपि कारणत्वदर्शनादिति । प्रत्यभिज्ञानस्मरणयोस्तुल्यवत्संस्कार-

व्याप्तिज्ञानं सहचारदर्शनमेव नापेक्षते दूरं तद्भूयस्त्वमित्यर्थः । परोक्षत्वेन संशयस्थलीयत्वाभावेन च तर्क्वानुपयोगात् । न च प्रथमदर्शनस्य व्याप्तिविषयत्वे पूर्वोक्त[illegible]नुपपत्तिः । ज्ञानाप्रामाण्यसन्देहादेव तदुपपत्तेरिति भावः । ननु भूयोदर्शनाद्यत्र तर्कावतारस्तत्र तावद्दर्शनकारणतेति न युक्तमित्याह । नन्विति एकेति । अयं घटः पूर्वदिनैतद्देशवर्त्तिघटाभिन्नः तदसाधारणधर्मत्वादित्यादावित्यर्थः । एकदेति । क्रमिकत्वे सत्याशुविनाशित्वहुत्वादिति भावः । मात्रविशेषणासिद्ध्यै दूषयति । मैवमित्यादिना । प्रत्यभिज्ञास्मरणयोरिति अन्वयव्यतिरेकावधृतव्यवहितपूर्वानुभवरूपविशेष[illegible]ज्ञान[illegible]न्यतानिर्वाहकत्वेन स्मृताविव प्रत्यभिज्ञानेपि संस्कारकल्पनस्य तुल्यत्वादित्यर्थः । न च

प्रत्यभिज्ञायाः संस्कारजन्यत्वे स्मृतित्वापत्तिः । स्मृतौ प्रत्यभिज्ञात्वापादनेन तुल्योत्तरत्वात् । इन्द्रियत्वाव-च्छिन्नकारणत्वासमवहितसंस्कारजन्यत्वस्य स्मृतित्वप्र-योजकत्वाच्च । न च गौरवम् अन्वयव्यतिरेकतौल्येनोभयत्र संस्कारकारणतावधारणेन प्रामाणिकत्वादिति भावः । व्याप्त्यनुभवे प्रत्यभिज्ञायां वा न तावत्पूर्वानुभवस्य विशेषणज्ञानत्वेन कारणता संस्कारेण व्यवधानात् । तद्द्वारमेवेति चेत् न । यदवच्छिन्नं कारणं तज्जनयि-त्वैव यज्जनयति तस्य तद्द्वारम् । नच विशेषणत्वावच्छि-न्नं कारणं संस्कारं जनयित्वैव स्वकार्यं विशिष्टानुभवं जनयति । अयं घट इत्याद्यनुभवे व्यभिचारात् । न-न्वेवं स्मृतावपि स न द्वारं स्यादिति चेत् । न स्याद्यदि विशेषणज्ञानत्वेन पूर्वानुभवः स्मृतौ कारणं स्यात् । नत्वेवम् । तस्य विशिष्टानुभव एव कारणत्वात् । हन्तैवं न स्मृतौ तदपेक्षेति कुतस्तद्द्वारसंस्कारापेक्षेति चेत् । उपेक्षासंशयभिन्नसमानविषयविशिष्टज्ञानत्वे स्मृति-त्वावच्छिन्ने पृथक्कारणत्वस्वीकारात् । तदवच्छिन्नेन च तदवच्छिन्नजनने संस्कारस्याव्यभिचारेण द्वारत्वसम्भ-वात् । नन्वेवं व्याप्त्यादिज्ञानप्रत्यभिज्ञयोरपि पूर्वानु-भवस्यासाधारणकारणत्वात्तेन च रूपेण संस्काराव्यभि-चारात्तद्द्वारकत्वं स्यादिति चेत् । न विशिष्टानुभवत्वा-नुरोधेन तत्तास्मृतिरूपविशेषणज्ञानजन्यतावश्यम्भावे

स्य कल्पकत्वात् । भूयोदर्शनजनिततावत्संस्कारप्रभवैकस्मरणस्य चक्षुरादिसहकारित्वमित्यपि कश्चित् । नन्वनौपाधिकत्वग्रहस्य व्याप्तिग्रहकारणत्वं न प्रमाणम् किन्तूपाधिग्रहाभावस्य कारणत्वं प्रामाणिकम् । न चानौपाधिकत्वग्रहोपि शक्यः

पूर्वानुभवसंस्कारस्य तत्रैवोपक्षयकल्पनात् । एतदेवाभिसन्धायाव्यहितविशेषणज्ञानमनुभवकारणमिति तत्र वदन्ति । तथा चानन्यगत्या गौरवमपि प्रामाणिकत्वादनादृत्यान्तरा स्मृतिः कल्प्यत इति टीकाकारमतमाह । भूयोदर्शनजनितेति । क्रमिकस्मरणकल्पने दोषतादवस्थ्यादाह । एकेति । समूहालम्बनेत्यर्थः । जन्यविशिष्टज्ञानत्वावच्छिन्ने जन्यविशेषणज्ञानत्वेन कारणत्वमिति सिद्धान्तप्रसिद्धिविरोधमात्रभयादाह । कश्चिदिति । भूयोदर्शनस्य तर्कोत्थापनेनानौपाधिकत्वग्रहद्वारा वा व्याप्तिग्रहत्वमिति सिद्धान्ते द्वारबाधमाशङ्कते । नन्वनौपाधिकत्वेति । तथाच तद्द्वारकं भूयोदर्शनकारणत्वमपि बाधितमिति भावः । नन्वनन्यथासिद्धो व्याप्तिग्रह एव मानमत आह । किन्त्विति । प्रतिबन्धकाभावत्वेनावश्यकत्वादिति भावः । ननूपाधिग्रहस्य प्रतिबन्धकत्वमनौपाधिकत्वग्रहविघटनद्वारैवेति उपाधिग्रहाभावका-

योग्यायोग्योपाधिसाधारणोपाधिव्यतिरेकस्य दुर्ग्रहत्वात् । किञ्चानौपाधिकत्वं विकल्प्य यत् दूषणं कृतम् तत्किं ग्राहकतापक्षे नास्ति ? नास्ति चेत् । अनौपाधिकत्वस्य व्याप्तित्वपक्षेऽपि न भविष्यतीति । मैवम् । अनौपाधिकत्वग्रहोपाधिग्रहाभावयोः तुल्ययोगक्षेमत्वेनोभयोरपि कारणत्वात् । किञ्च यावता

रणतैवानुपाधित्वग्रहकारणतायां मानमित्यत आह । नचानौपाधिकत्वग्रहोपीति । अपिः शक्य इत्यनन्तरं द्रष्टव्यः । उपाधित्वस्य योग्यवृत्तितया तदवच्छिन्नप्रतियोगिकाभावो नाध्यक्ष इत्याह । योग्येति । प्रकृतोपाधिरहितत्वं यत्किञ्चिदुपाधिरहितत्वं वाऽनौपाधिकत्वमिति विकल्प्य दोषदुरुद्धरत्वात्तस्य व्याप्तित्ववत्तद्ग्राहकत्वमप्ययुक्तमित्याह । किञ्चेत्यादिना । न भविष्यतीति । तथा च दोषासत्त्वं व्याप्तिरेव तत्र तु तद्ग्राहकं तत्सत्त्वे तु न तरामित्युभयतःपाशेयं रज्जुरिति भावः । उपाधिज्ञानस्य प्रतिबन्धकत्वमाश्रित्याप्रामाणिकत्वं तावन्निरस्यति । मैवमिति । प्रतिबन्धकाभावत्वेनोपाधिग्रहाभावस्यैव जनकीभूतज्ञानाविघटकत्वे उपाधिज्ञानस्य प्रतिबन्धकत्वानुपपत्त्या वा यत्संशयव्यतिरेकनिश्चयावित्यादिव्याप्तिबलेन नानौपाधिकत्वनिश्चयस्यापि कारणत्व-

शयो जायते न तावत्तैव निर्णय इत्यविवादम् । न च सहचारदर्शनव्यभिचारादर्शनोपाध्यनुपलम्भैर्व्याप्तिनिर्णयो जायत इति युक्तम् । तेषु सत्सु संशयस्यैव दर्शनात्तस्मादतिरिक्तं किञ्चिदपेक्षणीयम् । तच्च विचार्यमाणमनौपाधिकत्वप्रतिसन्धानं तर्को वेति । न च कोट्यनुपस्थिता-

---

मवर्जनीयमित्याह । अनौपाधिकत्वेति । तदितरहेतुताकल्पे तद्व्यतिरेकव्याप्तिग्रहविलम्बानामप्यनौपाधिकत्वग्रहः कारणमित्याह । किञ्चेति । किञ्चोपाध्यनुपलम्भाद्व्याप्तिविशिष्टाव्यभिचारग्रहवदौपाधिकत्वानुपलम्भाद्व्यभिचारग्रहप्रसङ्गे किं नियामकम् यदि नानौपाधिकत्वग्रहः कारणं स्यात् ? न चानौपाधिकत्वज्ञानस्याप्यसाधारणत्वान्निश्चायकत्वानुपपत्तिः । विशेषदर्शनान्तरतुल्ययोगक्षेमत्वात् इत्याशयेनोपसंहरति । तस्मादिति । न च तर्कं नैवान्यथासिद्धिः । एकैकस्यासार्वत्रिकत्वादविनिगमाच्च । न चाऽननुगमः । संशयविरोधिदर्शनत्वेनैवानुगमादिति भावः । यत्तु तर्कस्याप्यनौपाधिकग्रहद्वारैव व्याप्तिग्राहकत्वस्याभिमतत्वादिति । तन्न । वाशब्दविरोधात्तमद्वारीकृत्यापि तर्कस्य व्याप्तिग्राहकत्वसम्भवाच्च । ननु पूर्वोक्तसामग्र्याः कोटिद्वयोपस्थितावेव संशायकत्वादन्यदा निश्चायकत्वे

वेष्वेव सत्सु व्याप्तिनिर्णयो भवतीति वाच्यम् । कोट्यनुपस्थितावपि दूरादूर्ध्वतामात्रदर्शने स्थाणुपुरुषान्यतरानिर्णयादर्शनात् । यदुक्तमनौपाधिकत्वग्रहो शक्य इति । तदपि न साधीयः । योग्यानां योग्यानुपलम्भादेवायोग्यानां तु साध्यव्याप्तिसाधनाव्याप्त्यन्यतरसाधनादेवाभा-

को विरोध इत्यत आह । नचेति । अन्यतरकोटिव्याप्यादर्शने समानधर्मदर्शनस्यैव कोटिद्वयोपस्थापकत्वादनौपाधिकत्वाद्यग्रहे कोट्यनुपस्थितेरपि कोट्युपस्थितिहेतुत्वसम्भवान्न निर्णायकत्वमित्याह । कोटीत्यादि । आवश्यकत्वं निरस्यति । यदुक्तमित्यादि । साध्यव्याप्तीति । साधनाव्याप्तीति । साधनाव्यापकत्वेन प्रसिद्धेषु साध्याव्यापकत्वस्य साध्यव्यापकत्वेन च प्रसिद्धेषु साधनव्यापकत्वस्य साधनादित्यर्थः । ननु साधनमनुमानम् तथाच तन्मूलव्याप्तौ पुनरनौपाधिकत्वग्रहोपासनेऽनवस्था । एतेन तर्को व्याख्यात इति चेत् । न संशयविपर्ययोत्तरव्याप्तिप्रत्यक्ष एव तत्संशयविरोधिदर्शनत्वेन तर्कानौपाधिकत्वग्रहयोः कारणत्वाभिधानात् । तर्कानौपाधिकत्वसाधनमूलव्याप्तौ च शङ्कानवश्यम्भावात् । क्वचिद्व्याघातादिना तदनवतारात् । तदवतारे त्वपेक्षायामनवस्थाभावादिति

वग्रहस्य सुग्रहत्वात् । न च कश्चि-दुपाधिरत्र भविष्यतीति शङ्का व्याप्तिविरोधिनी तस्यां जातायामपि व्याप्तिग्रहस्य जायमान-त्वात् । नचैवमुपाधिशङ्कादूषणमेव न स्या-दिति वाच्यम् । विशिष्टस्योपस्थितस्यैवोपाधेः शङ्कायां दूषणत्वावधारणात् । यत्तु विकल्प्य दूषणं कृतं तददूषणमेव । यावत्साध्यव्याप-कव्याप्यत्वस्यैवानौपाधिकतार्थत्वात् । नचैव-मनौपाधिकत्वमेव व्याप्तिरस्त्विति वाच्यम्

भावः । भवतु विशेष्येऽपि स्थितेष्वन्यतरसाधनादनु-पाधिकत्वग्रहः तदन्येषु तु पक्षतावच्छेदकरूपेणानु-पस्थितेषु कथं तत्साधनम् येनानुपाधित्वग्रह इत्यत आह । न च कश्चिदिति । तच्छङ्काभावो न कारणं व्यभिचारादित्याह तस्यां जाताया-मिति । अन्यथाऽनुमानोच्छेदापत्तौ निरीहं जग-ज्जायेतेति भावः । नन्वेवं शङ्कितोपाध्युच्छेदप्रसङ्ग इत्यत आह नचेति । न धर्मिशङ्कया शङ्कितोपा-धित्वम् अपितु विशिष्योपस्थितस्य साध्यव्यापकत्वा-दिशङ्कयेत्याह । विशिष्येति । विकल्प्येति । प्रकृ-तोपाधिरहितत्वञ्चेत्यादिना । यावदिति । सोपा-धित्वव्यवच्छेदाय यावदिति । न चानवस्था उक्तोत्तर-

तत्र गौरवपराहतेरुक्तत्वात् । नन्वव्यभिचारस्यैवानौपाधिकत्वोपग्राहकत्वमस्तु लाघवात् । नहि व्याप्तेरेव लाघवमनुकूलं नतु ग्राहक इति । मैवम् । नियतस्य हि ग्राहकत्वम् । यथा वा व्यभिचारनियतमनौपाधिकत्वम् एवमनौपाधिकत्वनियतो व्यभिचारोऽपि । अनयोः समनियतत्वेन प्रामाणिकत्वात् । एवमनयोर्ग्राह्यग्राहकभावे समानेऽपि तृतीयलिङ्गपरामर्शस्यानयोर्मध्ये किं विषयतयाऽनुमितिकारणत्वमस्त्विति विचारे लाघवादव्यभिचारविषयतयैव तत्कारणत्वं कल्प्यते ।

त्वात् । एवमिति । अव्यत्व इत्यर्थः । यावत्साध्यसमानाधिकरणव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिप्रतियोगिकव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिसामानाधिकरण्यापेक्षया स्वसमानाधिकरणव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगिसामानाधिकरण्यस्यैव लघुत्वेन विषयीभूय लिङ्गपरामर्शवृत्त्यनुमितिकारणत्वावच्छेदकत्वात्सैव व्याप्तिर्नेतरा गौरवादित्याह । तत्रेति । ग्राह्यग्राहकस्वरूपयोर्लाघवस्यानुकूलतायामविशेषाद्वैपरीत्यमेव किं न स्यादिति शङ्कते नन्वौपाधिकेति । संशयोत्तरव्याप्तिप्रत्यक्षे विशेषदर्शनतया ह्यनौपाधिकत्वग्रहः कारणमिष्यते व्याप्यदर्शनमेव च विशेषदर्शनमिति भावः ।

नन्वनौपाधिकत्वविषयतया यत्प्रकारकतया परामर्शस्यानुमितिकारणत्वम् स एव व्याप्तिपदार्थ इति । अनौपाधिकत्वादौ यदि कोऽप्यपरामर्शे न व्याप्तिपदं प्रयुङ्क्ते तन्न वारयाम इति सर्वं चतुरस्रम् ।

इति व्याप्तिग्राहकवादः ।

किं तर्हि विनिगमकमत आह । एवमित्यादिना । माभूदनौपाधिकत्वं विषयीभूय परामर्शवृत्त्यनुमितिकारणतावच्छेदकं व्याप्तिस्तु न कुत इत्यत आह । यत्प्रकारतयेति । नन्वनौपाधिकत्वं व्याप्तिरिति वदतस्तत्परामर्शादप्यनुमितिदर्शनादनौपाधिकत्वमपि व्याप्तिरत आह । अनौपाधिकत्वादाविति । तत्परामर्शादनुमितिरसिद्धैव प्रवृत्तिः सम्भावनामात्रात् । तदुत्तरभाविज्ञाने चानुमिनोमीत्यनुव्यवसायस्तु भ्रम एवेति भावः ।

इति श्रीसकलनामन्त० व्याप्तिग्राहकप्रकरणम् ।

प्रवृत्तिपरवाक्यश्रवणानन्तरं प्रयोज्यस्य तत्तदर्थसम्बन्धव्यापारानुकूलां स्वचेष्टां पश्यन् स्वचेष्टायां कृतेः कृतौ चिकीर्षायाश्चिकीर्षायां स्वसमानाधिकरणसमानविषयकज्ञानस्यैवावधृतका-रणभावः इति प्रयोज्यस्यापि तत्कारणीभूतं

---

विधिवाक्यजा ज्ञानवृत्तिचिकीर्षाकारणता इष्टसाधनताप्रकारावच्छेद्या नवेति विप्रतिपत्तेः संशये विचारमारभमाणो रङ्गरचनाव्याजेन धर्म्यसिद्धिं तावन्निरस्यति । प्रवृत्तिपरेत्यादिना । प्रवृत्तिपरं प्रयोज्यप्रवृत्त्युद्देश्यकं प्रयोज्ये पक्षे ज्ञानं चिकीर्षया तां कृत्यंतामपि चेष्टयाऽनुमिमानस्तटस्थस्य पक्षधर्मतया लिङ्गज्ञानमाह प्रयोज्यस्येत्यादिना । ते तेऽर्थाः गोदण्डादयस्तैर्यथायथं क्रियाकर्मभावादिसम्बन्धैः सम्बद्धो व्यापारो धात्वर्थ आनयनादिस्तज्जनिकामित्यर्थः हेत्वभिमतानां चेष्टादीनां व्याप्तिग्रहणाय कार्यकारणभावमूलकं विपक्षबाधकतर्कमभिप्रेत्य कार्यकारणभावमाह । स्वचेष्टायामित्यादिना । स्वपदं कृत्यादावप्यनुषञ्जनीयम् । परकृत्यादौ तच्चिकीर्षादेरयोग्यस्य तेन कारणतानवधारणात् । समानाधिकरणेत्यत्र समानप्रकारकेत्यपि द्रष्टव्यम् । प्रमेयत्वादिप्रकारकघटज्ञानात् घटचिकीर्षादर्शनात् । प्रयोज्यस्यापीति ।

ज्ञानमनुमाय तस्य च ज्ञानस्य वाक्यजन्यता-
प्रवृत्तौ जनयितव्यायां शब्दव्यापारत्वं चावधा-
रयति । तस्य च ज्ञानस्य प्रवृत्तिं प्रति जनकत्वं
च ज्ञानत्वानवच्छेद्यं यद्विषयप्रकारावच्छेद्यतामा-
दाय विश्राम्यति स प्रकारोऽभिधीयते ज्ञाप्य-

---

यद्यपि ज्ञानस्य प्रत्यक्षतया नानुमितिक्रियायां स-
स्तथापि अविवक्षितविशेषे ज्ञानसामान्ये तमभिप्रे-
त्यापि प्रयोगः । तत्कारणीभूतं तेषां चेष्टादीनां प्रा-
गभावव्याप्यप्रागभावप्रतियोगिभूतम् । वाक्यजन्यता-
प्रवृत्ताविति । तद्भावभावित्वादिति शेषः । यद्यपि
शब्दजन्यतागर्भव्यापारपदेनेदं पुनरुक्तम् तथापि शब्द-
जन्यकत्वमेव तदर्थ इति विवक्षितम् । सिद्धे धर्मिणि
परिशिनष्टि तस्य च ज्ञानस्येति । आदिपदेन सुखसाध-
नत्वग्रहः । अनवच्छेद्यमिति । यथायथान्यूनाधिकवृत्ति-
त्वमिति शेषः । विषयेति । विषये ज्योतिष्टोमादौ
यः प्रकार इष्टसाधनत्वादिस्तदवच्छेद्यतामित्यर्थः ।
ननु विध्यनुशिष्टलिङादिजन्यं विधिज्ञानं प्रवर्तकं
न तु ज्योतिष्टोमादिवृत्तीष्टसाधनतादिज्ञानमत आह
सप्रकार इति । विधिरित्युच्यत इत्यनेन सम्बन्धः ।
कुत इत्यत आह । विधीयत इति । मुख्ये बाधादाह
ज्ञाप्यत इति । व्युत्पत्तिलभ्यमर्थं प्रकृते योजयति
ज्ञानकर्मेति । साधारणविषय इत्यर्थः शाब्दज्ञाने

तेऽनेनेत्यनया व्युत्पत्त्या ज्ञानं कर्मविधिरुच्यते ।
तदुक्तं कुसुमाञ्जलौ

प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा ।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ।

सप्रकारः किं प्रवृत्तिपरशब्दत्वं वा तद्व्या-

---

तस्याकर्मत्वात् । स्वोक्ते आचार्यसंमतिमाह । तदुक्त-मिति । अत्र विधिजन्य ज्ञानं सकर्मकमित्यत्र । कृतिरेवानुगमात् न चेष्टा आत्मानं ध्यायेदित्या-द्यावसम्भवात् । सा पुनः कृतिश्चिकीर्षातः । सापि यतस्तज्ज्ञानम् । तस्य ज्ञानस्य यो विषयः यजेते-त्यादिजन्यज्ञानकर्मीभूतो यो विषयः प्रकारः स विधि-रित्यर्थः । कृतिकारणचिकीर्षाजनकज्ञानप्रकारीभूतो धर्मो विधिरिति परमतमुक्त्वा स्वमतमाह । तज्ज्ञा-पकोऽथवेति । तज्ज्ञानप्रकारीभूतेष्टसाधनतानुमापक आप्ताभिप्राय इत्यर्थः । विधीयते ज्ञानप्रवृत्तिजन-कतावच्छेदकप्रकारविषयकं ज्ञानं जन्यतेनेऽनेतिव्युत्प त्त्येति भावः । अत्र चतुर्थपादः प्रासङ्गिको न संमतिः । सिद्धे धर्मिणि विशेषतो विचाराय वादिविप्रतिपत्ता-रुपन्यस्यति । सप्रकार इति । ज्ञाने प्रवृत्तिजनक-तावच्छेदकः प्रकार इत्यर्थः । प्रवृत्तीति । प्रवृत्त्युद्दे-श्यकशब्दत्वमित्यर्थः । तद्व्यापारोऽभिधावेति । श-ब्दशक्तिरूपाया अभिधाया अप्रवर्तकत्वात्तां व्यव-

पारोऽभिधा भावना वा सैव नियोऽयप्रयोजनिका वा इष्टत्वं वा सङ्कल्पो वा वक्तुरभिप्रायो वा कार्यता वा इष्टहेतुत्वं वा? एवं विप्रतिपत्तौ चरमः पक्षो गौतमानां स एव युक्तः इतरेषामप्रवर्त्तकत्वात्। तथाहि न तावदाद्यः अश्रुतवाक्यस्य बधिर-

---

च्छिन्दन्नेव प्रमाणमाह। तद्व्यापार इति। लिङादिजन्यत्वे सति तज्जन्यकृतिजनिकेत्यर्थः। व्यापारभिन्नस्य परनिष्ठव्यापारपूर्वकत्वनियमादतिरिक्ताभिधाशब्दभावनाप्रवर्त्तनादिपर्यायवाच्यधर्मान्तरसिद्धेरिति भावः। भावना कृतिः। सैवेति। भावनैव प्रवर्त्यपुरुषोद्देश्यस्वर्गादिफलिकेत्यर्थः। इष्टत्वमिच्छामात्रविषयत्वम् सङ्कल्पस्तु इदमहं कुर्यामितीच्छाविशेष इति भेदः। इदमनेन कर्त्तव्यमितीच्छा वक्तुरभिप्रायः। कार्यता कृतिसाध्यताविधिजन्यज्ञानवृत्तिः। कृतिकारणता किञ्चिदवच्छेद्या कारणतात्वादिति सम्भावितबाधसहकृतं सामान्यतो दृष्टमिष्टसाधनतावच्छेदकत्वे प्रमाणयिष्यन्प्रतिजानीते। स एव युक्त इति। नचार्थान्तरं बाधादित्याह। इतरेषामिति। ज्ञानवृत्तिप्रवर्त्तकतानवच्छेदकत्वादित्यर्थः। अश्रुतवाक्यस्येति। स्वेष्टसाधनताप्रत्यक्षमूलकप्रवृत्तौ व्यभिचारान्न प्रवृत्तिमात्रे तज्ज्ञानं हेतुरित्यर्थः। ननु तदानीमश्रवणेपि

स्याव्युत्पन्नस्य च प्रवृत्तिदर्शनात् अग्निष्टोमादिवाक्यजानां प्रवर्तकज्ञानानां प्रवृत्तिपरशब्दत्वाप्रकारकत्वाच्च । नापि द्वितीयः अभिधायाः पदार्थस्मृतिहेतुभूतपदतदर्थसम्बन्धात्सङ्केतरूपाद्भि-

पूर्वश्रुते सम्प्रति स्मृते तज्ज्ञानसम्भवान्न व्यभिचार इत्यत आह । विधिरस्येति । तस्य च शब्दत्वानुभवासम्भवेन स्मरणमपि, अस्ति च हस्तचेष्टादिसङ्केतग्रहात्प्रवृत्तिरिति भावः । ननु शब्दत्वं शाब्दस्थलाभिप्रायं प्रवृत्तिमात्रे तु प्रवृत्तिपरत्वज्ञानमेव हेतुः अस्ति च चेष्टायामप्यन्वयव्यतिरेकाभ्यां शब्द इव प्रवृत्तिपरत्वावधारणम् अत आह । अव्युत्पन्नस्येति । लिङादावगृहीतप्रवृत्तिपरत्वसङ्केतस्य ततस्तज्ज्ञानासम्भवे व्यभिचारादिति भावः । नन्वसिद्धमेतत् अन्यथेष्टसाधनतापक्षेऽपि तत्रागृहीतसङ्केतिकानां मीमांसकादीनामपि प्रवृत्त्या व्यभिचारो दुर्वार एवेत्याशङ्क्य साधारणं दोषमाह । अग्नीति । आकाङ्क्षादिबललभ्यपदोपस्थापितपदार्थसंसर्गज्ञाने तत्प्रतियोगिनामेव प्रकारत्वाच्छब्दादेश्चापदार्थत्वेन तत्र प्रवृत्तिपरत्वान्वयाननुभवात्पदार्थत्वे वाऽप्रवृत्तिपदशब्द इति बुद्ध्यापत्तेरिति भावः । भिन्नाया असिद्धेरिति । भेदासिद्धेरित्यर्थः । सङ्केतात्मिकायाश्च प्रवर्तकत्वस्याप्यननुभवमिति भावः । न च प्रागुक्तव्याप्तिब-

त्वाया असिद्धेः । नापि तृतीयः भावनाज्ञानास्याप्रवर्तकत्वात् तस्याश्च सर्वलकारवाच्यत्वादसाधारण्येन लिङाद्यर्थत्वानुपपत्तेश्च । नच करोतीत्यादौ कृतेः स्वगोचरताविरोधेन सजाती-

लात्स्वनिष्ठव्यापारसिद्धिः । स्वनिष्ठत्वविशेषणस्य गौरवेणाप्रयोजकत्वात् लिङादिश्रवणस्यापि प्रवर्तकपुरुषव्यापारत्वेन व्यापारभिन्नत्वाभावाच्च लिङादेरुपाध्यायस्थानीयतायाश्च पौरुषेयतानङ्गीकारगलितत्वात् । भावनेति । तृप्तस्य भुङ्क्त इत्यतो भोजनकृतिज्ञानेऽप्यप्रवृत्तेरिति भावः । न चाप्रवर्त्तकलिङादिसाधारणी भावना लिङाद्यर्थोऽपि लिङादीनामप्यप्रवर्त्तकतापातादित्याह तस्याश्चेति । व्याघातं निरस्यति असाधारण्येनेति । लिङ्लडादिजन्यज्ञानयोः प्रवर्तकत्वाप्रवर्तकत्ववैलक्षण्यस्य विषयावैलक्षण्येऽनुपपत्तेरिति भावः । भावनाया लडादिवाच्यत्वमसिद्धमित्याशङ्क्य दूषयति । नचेति । आदिपदेन यतत इति सङ्गृह्यते । करोतीत्यादौ कर्त्रादिगतसङ्ख्यैवाख्यातार्थः न तु कृतिः तथासति प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेराख्यातस्य कृञर्थकृत्यन्वितकृतिवाचकत्वं वाच्यम् । अन्वयश्च द्वेधा सम्भवति कृतिविषया कृतिरिति कृतिजनिका कृतिरिति वा नोभयथापीत्याह कृतेः स्वगोचरतेति । सजातीयेति । सुखादयोऽसमानजातीयारम्भका

यारम्भत्वाविरोधेन च सङ्ख्यैवाख्यातार्थ इति वाच्यम्। आख्यातोपस्थाप्यकृतेरनन्वयेऽपि तदुपस्थाप्यानुकूलत्वांशमादाय धात्वर्थकृतेरनन्वयप्रसङ्गाभावात् । न च सर्वलकारेण कृतिरभिधीयत इत्यसिद्धमिति वाच्यम् । भिन्नसम-

---

इति प्रशस्तपादवचनादिति भावः । क्वचिदन्वयमात्रेण नान्वयव्यतिरेकावधृता धात्वर्थानुकूलकृतिशक्तिराख्यातस्य त्यक्तुं युक्ताऽपि त्वनुकूलत्वविशेष्यकृत्यन्वयबाधे शक्यैकदेशस्य कृत्युपसर्जनस्यापि अनुकूलत्वमात्रस्य लक्षणया स्वतन्त्रोपस्थित्याऽऽकाङ्क्षादिसम्भवादन्वय उपपाद्यः अन्यथाऽतिप्रसङ्गादित्याह आख्यातेति । अन्यथा कुर्यादित्यनन्वयाल्लिङाख्यातमपि न कृतिशक्तं स्यादिति भावः । भावनाज्ञानस्य प्रवर्तकत्वे तदनुपपत्त्या लिङः कृतिशक्त्यवधारणेऽपि लडादौ कृतिशक्तिग्राहकमेव नास्तीति क्व साधारण्यमित्याशङ्क्याह सर्वेति । भिन्नसमयेति। भूतानद्यतनवर्तमानादिसमयेत्यर्थः । तथा चैतदतिरिक्तानुगतार्थानभ्युपगमे एतदननुवृत्तिवत्करोत्यननुवृत्तिरपि स्यादिति भावः । व्याकारो विवरणम् । व्यवहारवत्तस्यापि शक्तिग्राहकत्वादिति भावः । ननु चेतनाचेतनयोः साधारण्येनाख्यातप्रयोगागतः फलानुकूलव्यापारविशेष एव तदर्थः । न च कृत्या व्याकारानुपपत्तिः । रथो ग-

यानुशिष्टानां लङादीनामर्थस्य कृत्यैव व्याकारात् । न च फलानुकूलव्यापार एवायमर्थो न कृतिः कृतिरपि अनेनैवोपाधिनेति वाच्यम् । नियमतः कृत्यैव तेषामर्थस्य व्याकारात् गृहकन्दरादौ कृताकृतबुद्धिविषयानैयत्याच्च । न च कथं चेतनाचेतनसाधारणकर्तृव्यवहारो रथो गच्छति इत्यादौ समर्थनाय

---

च्छतीत्यादौ गमनं करोतीत्यर्थ इति कृत्या व्याकारेण तुल्यत्वादित्याशङ्क्याह न च फलेति । लिङादीनां तु कृतित्वेनैव तत्र शक्तिः प्रवर्तकत्वादिति भावः । ननु तथापि न कृतिरित्ययुक्तम् चेतनाख्याते फलानुकूलव्यापारशक्तेः कृतावेव विश्रामादित्यत आह कृतिरपीति । कृतित्वस्य प्रवृत्तिनिमित्ततैव निषेध्या न कृतेः शक्यतेति भावः । नियमत इति । पदार्थतावच्छेदकरूपेणैव सर्वत्र विवरणम् नहि घटादिपदार्थं प्रमेयत्वादिना कश्चिद्विवृणोतीति भावः । ननु कृञ एव यत्नार्थकत्वे न मानम् कुतस्तद्व्याक्रियमाणस्याख्यातस्येत्यत आह । गृहकन्दरादाविति । अतदर्थत्वे यत्नजन्याजन्ययोः कृताकृतबुद्धिविरोध इति भावः । नन्वसम्भवद्यत्ने सम्भवद्व्यापारेऽचेतने प्रयोगाद्व्यापारार्थतैवाख्यातस्य युक्तेत्याह नच कथमिति । लक्षणयापि तत्र प्रयोगोपपत्तेर्न शक्तिसिद्धिरित्याह

इति वाच्यम् । काकेभ्यो दधि रक्ष्यतामिति दध्युपघातकतात्पर्यकत्वात् । न चानुकूलत्वं लडादिवाच्यमनुकूलत्वेनाक्षेपात् कृतेरिति वाच्यम् । अनुकूलत्वं व्यापारान्तरस्यापि सम्भवतीति तदनाक्षेपकत्वात् । न च लडादीनां फलवाचकता धातोस्तु तदनुकूलव्यापारवाचकतास्त्विति वाच्यम् । विकल्पासहत्वात् । तथाहि लडादीनां फलसामान्याभिधायित्वं वा फलविशेषाभिधायित्वम् वा ? नाद्यः फलसामान्यस्याप्रवर्तकत्वात् पचतीत्यादौ फलविशेषान्व-

---

काकेभ्य इत्यादिना । लाक्षणिकत्वमात्रे दृष्टान्तो नाजहत्स्वार्थलक्षणायां रथे यत्नानन्वयात् । यदा तु रथपदेऽपि रथसारथिधुर्याणामेकसार्थवाहित्वेन लक्षणा तदा लट्पदेऽप्यजहत्स्वार्थलक्षणैव धुर्यसारथिनोर्यत्नस्याप्यन्वयसम्भवादिति ध्येयम् । ननु गृहकन्दरादौ व्यापारजन्यत्वाजन्यत्वकृतव्यवहारोपपत्तौ कृञोऽपि व्यापारार्थतैवास्तु अत एव रथो गच्छतीत्यादावपि गमनं करोतीत्यर्थ इति विवरणमुपपद्यते तत्कुतस्तेन विवरणादाख्यातस्य यत्नार्थता कुतस्तरां चानुकूलव्यापारे लक्षणेति चेत् न । लाघवेन कृतौ कृञाख्यातयोः शक्तिकल्पनेऽप्यत्र लक्षणाया युक्तत्वादिति भावः । ननु नानुकूल-

यबोधानापत्तेः । न द्वितीयः पाकादिफलविशेषाभिधायित्वे यागादिविशेषालाभात् । धातोस्तु फलमात्रानुकूलव्यापाराभिधायित्वं वा फलविशेषानुकूलव्यापाराभिधायित्वं वा नोभौ । अवश्योपजीव्यत्वेन विशेषणांशे एव फलकल्पनस्योचितत्वात् । यथा काष्ठेन पचति तथा पाकेन पचतीत्यपि प्रयोगप्रसङ्गाच्च ।

---

कृताव्याख्यानस्य शक्तिः गौरवादन्यलभ्यत्वाच्चेत्याशङ्क्याह । न चानुकूलत्वमिति । लिङस्तु प्रवर्त्तकतानुरोधादेव तत्र शक्तिकल्पनेति भावः । अनुकूलत्वस्य सामान्यस्य विशेषं विनाऽपर्यवसानाद्विशेषाक्षेपेऽपि चेतनाचेतनाख्यातयोः कृतित्वव्यापारत्वाभ्यां प्रतीत्यनुपपत्तिरित्याशयेनाह । अनुकूलत्वमिति । तदनाक्षेपकत्वात्तत्प्रकारावच्छिन्नतदनाक्षेपकत्वात् । ननु तर्हि लडादेः फलवाचकत्वं धातोश्च तदनुकूलव्यापारवाचकत्वम् । नच पथि श्रमशयाने पचतीति प्रयोगप्रसङ्गः शयनस्यापि श्रमशान्तिद्वारा विक्लित्त्यनुकूलत्वादिति वाच्यम् । यत्नपक्ष इव व्यापारपक्षेऽपि विशेषस्यैव वाच्यत्वाभ्युपगमादित्याशङ्क्याह । न चेति । अप्रवर्त्तकमितीष्टापत्तेः । लिङादेस्तु भावनावाचकतैव प्रवर्तकत्वादित्यस्वरसाद्दोषान्तरमाह पच-

अस्तु तर्हि नियोज्यप्रयोजनफलिका भावनेति पक्षः। तथाहि नियोज्यप्रयोजनं निसर्गसुन्दरतया स्वर्ग एव स्वर्गकामो यजेतेत्यादिवाक्यादवगम्यते। लिङ्विहित·

तीत्यादाविति। नानार्थतापातादिति भावः। प्रकृतावपि विकल्पासहत्वमाह धातोस्त्विति। उचितत्वादिति। लाघवादिति भावः। ननु न फलानुकूलत्वेन शक्तिः किन्त्वनुकूलत्वेन लाघवादन्यलभ्यत्वाच्च। फलानुकूलत्वं तु समभिव्याहारलभ्यमिति क्वोपजीव्योपजीवकभाव इत्यस्वरसादाह। यथेति। अनुकूलत्वाविशेषादिति भावः। अथ पचेर्विक्लित्त्यनुकूलव्यापारवचनत्वे काष्ठगततदनुकूलत्वाभिधानाय काष्ठेनेति तृतीया युज्यते न पाकेनेत्यत्र इयं हि फलप्रतियोगिकं पचत्यर्थभूतानुकूलव्यापारगतमानुकूल्यं ब्रूयादनुकूलव्यापारप्रतियोगिकं वा? आद्ये पचतीत्यत्र प्रकृत्यैव तत्प्रतिपादने निराकाङ्क्षतया क्व पाकपदस्य प्रयोगप्रसङ्गः क्वतरां तृतीयायाः। द्वितीये त्वयोग्यतापराघात एवेति चिन्त्यम्।

भावनामात्रस्य सर्वाख्यातसाधारण्येऽपि नियोज्यप्रयोजनफलकत्वस्य तिङ्मात्रगम्यत्वात्तद्विशेषितासा विधिरस्त्विति शङ्कते अस्तु तर्हीति। विशेषणासिद्धिं निरस्यति तथाहीति। निसर्गेति। निरुपाधीच्छावि-

भावनायाः फलापेक्षणात् । समभिव्याहारदर्शनात् स्वर्गस्यैव भावनान्वयः । न चान्तरङ्गतया यज्यर्थेनैव लिङर्थस्य साध्यसाधनभावेनैवान्वये याग एव भाव्यतया प्रतीयते बहिरङ्गतया न स्वर्ग इति वाच्यम् । ग्रामं गच्छतीत्यादौ भाव्यमाने गमने ग्रामसंयोगस्येव भाव्यमाने यागे स्वर्गफलकत्वेनाविरोधात् । तथा

षयतयेत्यर्थः कामपदोपस्थापितेच्छाविशेषविषयतयेति यावत् । स्वर्गेति । नियोज्यप्रयोजकतालाभेऽपि भावनायां कुतस्तत्फलकतालाभ इत्यत आह लिङिति । फलापेक्षणादिति । अन्यथा तज्ज्ञानस्य प्रवर्तकताऽनिर्वाहादिति भावः । अन्वय इति । फलत्वेनेति शेषः । ननु समानपदोपात्तत्वेन याग एव भावनया साध्यत्वेनान्वेति न स्वर्गोऽसमानपदोपात्तत्वात्तस्य च नियोज्यप्रयोजनफलकत्वलाभस्तस्या इत्यत आह । न चान्तरङ्गतयेति । ननु भावनायाः करणफलोभयाकाङ्क्षायामन्तरङ्गतया यागस्य करणान्वये सा प्रयोजिका स्यात् फलत्वेनान्वय एव तस्या नियामकत्वे मानाभावादिति चेत् । न । करणाकाङ्क्षायाः फलसाधनतावगमोत्तरभावित्वेन प्रथमप्रवृत्तफलाकाङ्क्षाया एवान्तरङ्गत्वेन यागनिर्वर्त्यत्वौचित्याश्रयात् । भावनायं-

च स्वर्गफला यागजनिका भावनेति वाक्यार्थनिष्पत्तौ भवति तज्ज्ञानात्स्वर्गकामस्य प्रवृत्तिरिति मतम् ।

एतदपि न मन्यामहे भावनाज्ञानस्य भावनायामजनकत्वात् इत्युक्ताभिप्रायत्वात् स्वर्गफलो याग इति प्रवृत्त्युपपत्तेरधिकस्यानिवेशाच्च । एवमङ्गीकारे प्रतिज्ञान्तरापातात् हितोपायताविधिप्रवेशाच्च । नापि पञ्चमः । इष्टत्वम् हि इच्छाविषयत्वम् तदिच्छाज्ञानस्याप्रवर्त्तकत्वात् । किञ्चेच्छा किं विषये विशेषणमुपलक्षणं वा ? नाद्यः । इच्छाया-

यागस्य भाव्यतयाऽन्वयेपि नियोज्यप्रयोजनफलकत्वमप्रत्यूहमित्याह ग्रामं गच्छतीति । स्वर्गफलकत्वेनेति । साक्षाद्भावनाया नियोज्यप्रयोजनफलकत्वाभावेऽपि परम्परया तद्भानसम्भवादिति भावः । वस्तुतो यागः स्वर्गजनकताबोधात्पूर्वं न स्वतः पुरुषार्थो न चेष्टसाधनः सवगत इति भाव्यतावगम एव न तत्र स्वर्गस्तु स्वत सुन्दरतयेष्टः काम्यतया चोपस्थित इति स एव भाव्यतयाऽन्वेति पश्चात्तु कारणतया याग इति ध्येयम् । उपसंहरति । तथाचेति । वाक्यं स्वर्गकामो यजेतेति । इति मतमिति । अस्तिवति मतमित्यर्थः ।

मपि प्रसङ्गाच्च । न द्वितीयः विकल्पासहत्वात् । तथाहि उपलक्ष्यं सुखादिकं चिकीर्षाजनक-

भावनाज्ञानस्येति । केवलभावनाविधित्वनिराकरणा-स्थल इत्यर्थः । ननु नियोज्यप्रयोजनफलकत्वविशेषितत-ज्ज्ञाने प्रवृत्त्यवश्यम्भाव एवेष्टसाधनताज्ञानपर्यवसाना-दित्यत आह । स्वर्गफलो याग इति । अनिवेशादिति । गौरवादिति भावः । अस्तु तद्भूत एव प्रवृत्तिरित्यत आह एवामति । ननु वक्तुरयं दोषो नार्थस्येत्यत आह हितेति । स्वर्गफला इत्यस्य स्वर्गसाधनमित्यत्रैव पर्यव-सानादिति भावः । इष्टत्वज्ञानं प्रवर्त्तकमित्यत्रेच्छा वि-षयत्वेन ज्ञानव्यावर्त्तकतयोपयुज्यते विषयव्यावर्तकतया वेति विकल्प्याद्यं दूषयति । इच्छाज्ञानस्येति । स्वरूपा सत्यामिच्छायामज्ञातायामपि प्रवृत्तेरसत्यां तु ज्ञाता-यामप्यप्रवृत्तेरिति भावः । द्वितीयं विकल्पयति । इच्छाविषयेति । व्यावर्त्तकस्योभयथापि सम्भवादिति भावः । इच्छायामपीति । यद्यपीच्छाविशेषितस्य ज्ञानं प्रवर्तकमित्युक्ते इच्छाया अपि प्रवर्तकत्व प्रसञ्जयितुमुचितम् तथापीष्टत्वज्ञानमिष्टं प्रवर्तक तत्र चेच्छा विशेषणमिति तत्रापि प्रवृत्तिः स्यादित्या-शयः । उपलक्ष्यतावच्छेदकानिरुक्त्या द्वितीयं दूषयति । उपलक्ष्यमिति । सुखत्वादीत्यादिपदेन दुःखाभाव-सङ्ग्रहः । चिकीर्षेति । कृतिसाध्यत्वप्रकारकेच्छाजनक-

ज्ञानविषयत्वं वा अन्यद्वा ? नाद्यः । स्वर्गादिज्ञानेऽपि यागादिनियतविषयनिवृत्त्युपपत्तेः । फलस्य चाप्रसिद्धस्य प्रवृत्त्यगोचरतया व्युत्पाद्यत्वात् अननुगमाच्च । न द्वितीयः । चिकीर्षाजनकज्ञाने विषयावच्छेदकप्रकारस्य निरूप्यमाणत्वात् । न तृतीयः तदनिर्वचनात् इष्टत्वज्ञाने प्रवृत्तौ सागरमणावपि प्रवृत्तिप्रसङ्गात् । सा-

ज्ञानविषयत्वमित्यर्थः । यागादीति । साधनताया नियामिकाया अनङ्गीकारादिति भावः । नन्विष्टत्वज्ञानं स्वविषयस्वर्गादावेव प्रवर्तयतु समानविषयताया एव नियामकत्वादित्यत आह । फलस्य चेति । तस्यासिद्धतया कृत्यव्याप्यत्वाद्विधिनापि तज्जनकज्ञानविषयतया बोधयितुमशक्यत्वादित्यर्थः । अननुगमादिति । सुखादिसकलानुगतोपलक्षणतावच्छेदकस्य दुर्वचनत्वादिति भावः । चिकीर्षेति । चिकीर्षाजनकज्ञानविषयत्वं विधिरिति वदता चिकीर्षाजनकज्ञान विषयत्वं चिकीर्षाजनकज्ञानविषयतावच्छेदकः प्रकार इत्युक्तं भवति तस्यैव विधिपदार्थत्वात् । न च तदवच्छेदकं युक्तमात्माश्रयात् । तदनिर्वचनादिति ।विशिष्येति शेषः । बाधकान्तरमाह । इष्टत्वेति । तत्रापीच्छाया दुर्वारत्वादिति भावः । स्वकृतिसाध्यत्वविशेषणान्नोक्तदोषः सागरमणेः साध्यत्वेऽपि स्वकृत्यसाध्यत्वादिति शङ्कते

ध्यत्वेन विशेषणीयमिति चेत् । साध्यताज्ञाने साधनविषयतानियमात् हितसाधनताविधिप्रवेशात् । किञ्च किमिष्टत्वमिच्छामात्रविषयत्वं वा तद्विशेषचिकीर्षाविषयत्वं वा ? सापीच्छा फलस्य धात्वर्थस्य वा ? सापि किं वक्तुर्वा प्रतिपाद्यस्य वा यस्य कस्यापि वा ? नाद्यः । वक्तुः फलेच्छाज्ञानस्य प्रतिपाद्यप्रवृत्तौ स्वाज्ञाध्येषणातिरिक्तायां जनकत्वात् । न

साध्यत्वेनेति । नियमादिति । उभयोरुभयनिरूप्यत्वादिति भावः । हितेति । यद्यपि साधनताज्ञाने साध्यविषयानियमादिति परेणापि सुवचम् तथाप्यभाने निरस्ते प्रवृत्तिविशेषविशेष्यकत्वलाघवादेव विनिगमः स्यादिति भावः । न केवलं विषयविशेषणत्वोपलक्षणत्वविकल्पासहत्वबाधितमिष्टत्वस्य विधित्वं किन्तु स्वरूपस्वाश्रयविकल्पासहत्वबाधितमपीत्याह । किञ्चेति । ज्ञानस्य वेति वक्तुः फलेच्छाया इत्यनुषज्यते । ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्येन कार्यकारणभावनियमादिति भावः । स्वाज्ञाध्येषणातिरिक्तस्येति । स्वातन्त्र्येण तज्ज्ञानस्य जनकत्वमभ्युपगम्योक्तम् । द्वितीयं दूषयति । प्रतिपाद्येति । किं प्रतिपाद्यविद्यमानेच्छाविषयत्वं शिक्षाद्यर्थं कता-

द्वितीयः। प्रतिपाद्यगतफलेच्छायाः सत्याः प्रत्यक्षत्वेन तद्बोधकशब्दस्य निःप्रयोजकत्वात्। असत्याश्च प्रतिपाद्येच्छायाः स्वज्ञाने प्रवृत्त्यजनकत्वात्। नापि धात्वर्थगोचरत्वं द्वितीयः पक्षः। धात्वर्थस्य साधनत्वापरिचये विद्यमानेप्रयोज्येच्छाविषयत्वज्ञानेऽप्यवृत्तेः प्रतिपादकेच्छाया धात्वर्थगोचरायाः प्रतिपाद्यं प्रति प्रवर्तकत्वमित्याद्ययुक्तप्रायत्वात्। न तृतीयः अतिप्रसङ्गात्। द्वितीयोऽपि न तद्विशेषचिकीर्षेति पक्षः उक्तोत्तरत्वात्। तथाप्ययस्तु षष्ठः पक्षः।

विद्यमानतदिच्छाविषयत्वं तदिति विकल्प्याद्ये दोषमाह। सत्याः प्रत्यक्षत्वेनेति। नहि शब्दमेव तज्ज्ञानं प्रवृत्तिहेतुः स्वर्गकामपदादेरेव तत्सिद्धेश्चेति भावः। असत्याः प्रत्यक्षत्वानुपपत्त्या शब्दस्य सप्रयोजनता स्यादित्याशयेन द्वितीयमुद्भाव्य दूषयति। असत्या इति। प्राचीनेच्छाविषयत्वज्ञानेपि सिद्धौदनस्य पाके प्रवृत्त्यदर्शनादिति भावः। धात्वर्थस्येति। यागादेरिष्टसाधनत्वाज्ञान इत्यर्थः। विद्यमानेपीति। वस्तुतस्तस्यां दशायां यागादेः प्रयोज्येच्छातुल्ययोगक्षेमत्वादित्यर्थः। अतिप्रसङ्गादिति। परेष्टे स्वानिष्टेपि प्रवृत्तिप्रसङ्गादित्यर्थः। उक्तोत्तरत्वादिति। आश्रयविषयविकल्पा-

तथाहि स्वप्रवृत्तौ यद्धेतुत्वेनावगतं तदेव परप्रवृत्तावप्यनुमिनुयादिति। स्वप्रवृत्तौ च कार्यमिष्टोपायः। अतः कुर्यामिति सङ्कल्पस्य हेतुत्वमवधारयति। सङ्कल्पं विना हितोपायतानुधावनेऽपि प्रवृत्तेरलाभादावश्यकत्वात्। शब्दजायामपि प्रवृत्तौ सङ्कल्पज्ञानस्य हेतुत्वमनुमिनोति। तथाच स एव लिङाद्यर्थः। तन्न।

नुपपत्तेश्चिकीर्षायामप्यविशेषादित्यर्थः। षष्ठं दूषयितुं सम्भवदुक्तिकतरं तावदाह। तथापीति। उक्तरीत्येच्छाज्ञानस्याप्रवर्त्तकत्वेपीत्यर्थः। ननु तत एव सङ्कल्पविकल्पोऽपि निरस्तकल्प इत्यत आह। तथाहीत्यादि। तदेवेति। उपस्थितिलाघवादिति भावः। अनुमिनुयादिति। विवादपदं प्रवृत्तिः सङ्कल्पजन्या स्वतन्त्रप्रवृत्तित्वात् मत्प्रवृत्तिवदितीत्यर्थः। दृष्टान्ते साध्ये वैकल्यं निरस्यति। स्वेति। अत इति। तथाचेष्टसाधनताज्ञानं सङ्कल्पहेतुतयान्यथासिद्धत्वान्न प्रवृत्तिहेतुरिति भावः। ननूपजीव्यत्वादिष्टसाधनताज्ञानमेव प्रवर्तकं युक्तमत आह। सङ्कल्पं विनेति। नन्वन्यत्रास्तु यथा तथा शाब्दप्रवृत्तौ तु लिङादेरिष्टसाधनतार्थत्वात्तज्ज्ञानमेव प्रवर्तकमित्याशंक्याह। शब्दजायामिति। लाघवादिति भावः। इष्टोपायताशक्ताया लिङस्तर्हि

सङ्कल्पस्य चिकीर्षारूपत्वेनोक्तदोषानुकूलत्वा-त्। अतिरिक्तत्वे मानाभावात्। किञ्चेदमत्रालोचनीयम्। किमस्मिन् जाते प्रवृत्तिरथ यस्मिन् ज्ञाने स लिङ्र्थः? आद्ये प्रवर्तकज्ञानस्यापि प्रवृत्तज्ञानविषयभावकल्पनाप्रसङ्गात्। द्वितीये तु सङ्कल्पस्य स्वरूपसत एव प्रवर्तकत्वात् कथमसौ ज्ञाप्यः। सप्तमस्तु वस्तुसभिप्रायो ज्ञानं वा इच्छा वा? आद्ये ग्निकामस्य दारुम-

---

का गतिरत आह। तथाच स एवेति। प्रवर्तकज्ञा-नविषय एव लिङः शक्त्यभ्युपगमादिति भावः। इच्छाविशेष एव सङ्कल्पस्तदतिरिक्तो वा नाद्य इत्याह। सङ्कल्पस्येति। इष्टत्वपक्षोक्तदोषानुकूलत्वादित्यर्थः। नद्वितीय इत्याह अतिरिक्तत्व इति। स्वरूपतो दूषयित्वा लिङादिशक्यत्वमपि दूषयति। किञ्चेति। कथमसाविति। तथाच विधिवैयर्थ्यमिति भावः। सप्तमं दूषयितुं विकल्पयति। ज्ञानमिच्छा-वेति। भावनेत्याख्यातत्वाकारोपस्थापितांशानुवादः। उत्पाद्यमिति। अग्निकामो दारुणी मथ्नीयादिति विधिवाक्येनेति शेषः। ननु लिङ्वगतवक्त्रभिप्राये-णेष्टसाधनतानुमानात्प्रवृत्तिरिति न विधिवैफल्यमि-त्याशङ्क्याह। नचेति। अनिष्टहेतोरपीति। तथाच

यनभावनावक्तृज्ञानेति ज्ञानमुत्पाद्यम् । नवैता वता प्रयोज्यस्य प्रवृत्तिः । न चेष्टोपायता नेनानुमाय प्रवर्ततामिति वाच्यम् । अनिष्ट हेतोरव्याप्तेन वक्त्रा ज्ञायमानत्वात् । द्वितीये तु सा वक्त्रा विशेषिताऽविशेषिता वा । उभयथा न ज्ञानादप्रवृत्तिः । अपिच सहप्रयोगः प्रश्नोत्त

नवैवानैकान्त इति भावः । अप्रवृत्तिरिति । इष्टत्व विधित्वनिरासोक्तयुक्तेरिति भावः । ननु क एवमाह तज्ज्ञानाप्रवृत्तिरिति किन्त्वाप्तेच्छा लिङर्थो लाघवा- त्तल्लिङ्गकादिष्टसाधनताज्ञानात्तत्र प्रवृत्तिरिति न काप्य- नुपपत्तिरिति अत आह । अपिचेत्यादि । सहप्रयोगेति । वाजपेयेन यजेतेति लिङ्तृतीययोः पर्याय वादिति भावः । प्रश्नोत्तरेति । लिङादीनामिष्टसाधनतार्थत्वे किमिति दारुणी मथ्नीयादिति वाक्येनेष्टसाधनताया एव प्रश्ने इष्टसाधनं यत इति उत्तरानुपपत्तिरभेदात् अत एव हेतुहेतुमद्भावोऽपि न युज्यत इति भावः । सा- ध्यत्वसाधनत्वयोर्विरोधेनेष्टसाधनतापक्षे कृतिसाध्यत्व- विशेषणज्ञानानुपपत्तितदनभ्युपगमे च तक्षकचूडा- मणावपि प्रवृत्तिप्रसङ्ग इत्यादिपदार्थः । स्वर्गकामो यजेतेत्यतो यागः स्वर्गकामकृतिसाध्यतयाऽऽप्तेष्ट इत्य- वगते यागो मत्कृतिसाध्यत्वे सति मम बलवदनिष्टा- ननुबन्धीष्टसाधनं मत्कृतिसाध्यतयाऽऽप्तेनेष्यमाणत्वा-

रहेतुहेतुमद्भावानुपपत्तिभीतैरत्रभवद्भिर्नैष्टीयता-दि लिङोर्थोऽभ्युपेयते । ननु वक्त्रभिप्रायार्थ-

न्मद्भोजनवदित्यनुमाय प्रवर्तते पुरुष इति न युक्तम् प्रमादकृतमधुविषसम्पृक्तान्नभोजने भगवता तथेष्यमाणे व्यभिचार त् । नच तथातदिच्छायां मानाभावः । कृत्या तत्सिद्धेरेव मानत्वात् । न च हेतावपि बलवद-निष्टाननुबन्धित्वं विशेषणम् । तथापि जलताडनादौ व्यभिचारात् विधेस्तदनुपस्थितेश्च । प्रकारान्तरोपस्थि-तस्य तस्य लिङ्गविशेषणत्वे कृतिसाध्यत्वेऽपि अशा-क्यतापत्तेरित्याशयेनाह । इत्यादेरिति । ननु मध्यमोत्तमलिङोः सम्बोध्यवत्कृतिसाध्यत्वप्रकारके-च्छाव्युत्पत्तेर्लाघवाद्वक्तुरिच्छामात्रे लिङः शक्तिः कल्प्यत इति अत आह । नचेति । कृतिसाध्यत्वमिति । अविशेषितकृतिविशेषितं साध्यत्वमित्यर्थः । स्वकृति-साध्यतामात्रमिति । उद्देश्यविशेषितं स्वकृतिसा-ध्यत्वमित्यर्थः । उद्देश्यत्वमात्रमिति । स्वाविशेषित-मुद्देश्यत्वमित्यर्थः । अन्येति । पश्यादिकृतिसाध्यता-मादाय नभःसञ्चारादौ मनुष्यप्रवृत्तिप्रसङ्गादित्यर्थः । इच्छामात्रेति । स्वपरधारणेत्यर्थः । चिकीर्षेति । यद्यपि चिकीर्षागर्भेषूद्देश्यत्वनिर्वचनेषु पूर्वोक्तकृति-साध्यत्वविशेषणवैयर्थ्यम् कृत्यसाध्ये चिकीर्षाऽसम्भवा.

त्वेऽपि ममेदं त्वया क्रियमाणमिष्टमतः कुरु किमित्येव कर्तव्यम् यतस्त्वत्कृतिरत्र ममेप्सिता इति इत्यादेर्भयहेतोरत्रापि सत्त्वात् । इदमपि नाङ्गीकारमर्हति । न चेच्छात्वमाज्ञादौ क्लृप्तमिति तदनुरोधेनात्रापि सत्त्वात् । इदमपि नाङ्ग तथा कल्पनम् सहप्रयोगानुपपत्तेरेव । नाप्यष्टमः । तथाहि किं तत्कार्यत्वं कृतिसाध्यमात्रं वा स्वकृतिसाध्यतामात्रं वा स्वकृतिसाध्यत्वे सत्युद्देश्यत्वमात्रं वा । नाद्यः । कृतिसाध्ये विषभक्षणादौ प्रवृत्तिप्रसङ्गात् । स्वकृत्यसाध्ये परकृतिसाध्यतामादाय प्रवृत्तिप्रसङ्गाच्च । न द्वितीयः । अनिष्टेऽपि स्वकृतिसाध्ये प्रवृत्तिप्रसङ्गात् । न तृतीयः । उद्देश्यत्वस्यैव निर्वक्तुमशक्यत्वात् । किमुद्देश्यत्वम् इच्छामात्रविषयत्वं वा इच्छामात्रविषयत्वावच्छेदकरूपवत्त्वं वा चिकीर्षाविषयत्वं वा चिकीर्षाविषयत्वावच्छेदकरूपवत्त्वं वा । कृतिसाध्यत्वे सति इच्छामात्रकारणीभूतज्ञानविषयत्वावच्छेदकरूपवत्त्वं वा कृतिसाध्यत्वे सति स्वरूपमेव वा चिकीर्षाजन्यकृतिसाध्यत्वं वा अन्यद्वा ? नाद्यः । स्वानिष्टे परेच्छागोचरे प्रवृत्तिप्रसङ्गात् ।

नद्वितीयः। सुखे दुःखाभावे भोगे च प्रवृत्ति-प्रसङ्गात्। यागादौ उपायत्वातिरिक्तस्यावच्छेदकस्य निर्वक्तुमशक्यत्वात्। नचेष्टत्वमेव तदवच्छेदकमात्माश्रयप्रसङ्गात्। न तृतीयः। चिकीर्षाज्ञानस्यापि प्रवर्तकत्वप्रसङ्गात्। अन्योन्याश्रयप्रसङ्गाच्च। सच्चिकीर्षायां सत्यां तद्बोधो

---

त्तथापि कृतिसाध्यत्वविशिष्टोद्देश्यत्वनिर्वचनान्येव तानीति द्रष्टव्यम्। एवं कृतिसाध्यत्वे सति स्वरूपमेवेत्यपि। सुख इति। तेषु सुखत्वादेरेवेच्छाविषयतावच्छेदकत्वादिति भावः। उपायत्वातिरिक्तस्येति। तज्ज्ञानाज्ञाप्रवृत्ताविष्टसाधनताविधिपक्षप्रवेश इति भावः। ननु विधेः सुखादिसाधारणेच्छाविषयतावच्छेदकरूपवत्त्वज्ञानं सुखत्वादिबाधाद्रूपान्तरमिष्टोपायत्वं यागादेः कल्पयति न तु स एव लिङर्थ इति क्वेष्टसाधनतापक्षप्रवेश इति चेत्। न। पूर्वदोष एव तात्पर्यात्। ननु त्वत्पक्षेपीच्छाज्ञानस्य प्रवर्तकतापत्तिस्तुल्येत्यत आह। अन्योन्याश्रयादिति। तमेव विवृणोति चिकीर्षायामिति। अतीतादिसाधारणचिकीर्षाविषयत्वज्ञानस्य प्रवर्तकत्वे तृप्तोऽप्यतीतचिकीर्षाविषयत्वज्ञाने भोजने प्रवर्त्तेतेति विद्यमानचिकीर्षाविषयत्वज्ञानमेव तया वाच्यम् चिकीर्षायाश्च विद्यमानता प्रव-

यागादौ चिकीर्षा च तस्मिन्सन्तीति । नापि च-तुर्थः । अननुगमात् । अननुगतस्य निर्वक्तु-मशक्यत्वात् शक्यत्वे वोपजीव्यत्वेन तद्गुमा नस्य प्रवर्तकस्यौचित्यात् । न पञ्चमः । परे च्छाकारणीभूतज्ञानविषयेऽपि प्रवृत्तिप्रसङ्गात् । स्वीयविशेषणे ज्ञानाज्ञानस्य प्रवर्त्तकतापत्तेः। अत एव न षष्ठः नापि सप्तमः । तस्यैव ज्ञानस्य निरूपयितुमशक्यत्वात् । नाप्यष्टमः । स्वरूप-मात्रज्ञानस्याप्रवर्त्तकत्वात् । तथाहि स्वरूप-पविशेषाभिधानेपि तस्यैव निर्वक्तव्यत्वापातात् । नोपान्त्यः । भ्रमस्यापि चिकीर्षाजन्यकृतिसाध्य-

---

र्त्तकज्ञानाधीना तच्च तद्विद्यमानताधीनमित्यन्यो-न्याश्रयादिति भावः । अननुगमादिति । या-गदानत्वादेरिति शेषः । अस्तु तर्ह्यनुगतमन्यत् नेत्याह अनुगतस्येति । अशक्यत्वादिति । शक्यत्वे वा पूर्वोक्तप्रसङ्गानतिवृत्तेरिति भावः । नन्विष्टसाधन-त्वमेव सुशकमत आह शक्यत्वे वेति । उपजीव्यत्वे-नेति । उद्देश्यत्वेन स्वज्ञाने तज्ज्ञानस्य स्वरूपे तद्रू-पस्य चोपजीव्यत्वादित्यर्थः । औचित्यादिति । लाघवादिति भावः । स्वरूपमात्रेति । प्रमेयत्वादि-ना स्वरूपज्ञानेपि प्रवृत्त्यापत्तेः स्वरूपोपादानवैयर्थ्या-

त्वेन तत्रापि प्रवृत्तिप्रसङ्गाच्च । नान्त्योऽनिर्वचनात् । नन्वस्तु चरमः पक्षः । तथाहि मत्कृतिसाध्ययागसाध्याः स्वर्गजा इत्येतदेवाभिसन्धाय याने प्रवर्त्तते । इदमेव परेषां कार्यतापदेन विवक्षितम् । स्वप्रवृत्तावियदमेव च ज्ञातं सत्कारणं बालस्यापि स्तनपानादिप्रवृत्तौ संस्कारवशादु-

च्चेति भावः । चरम इति । अन्यद्वेति पक्ष इत्यर्थः । नन्वेवं कार्यताविधिरिति भज्येतेत्यत आह इदमेव चेति । कृतिसाध्यसाध्यत्वमेवेत्यर्थः । ननु बालस्य स्तनपानसाध्यतृप्तिकत्वाज्ञानेऽपि प्रकृते व्यभिचारान्नैतत्प्रवर्तकमित्यत आह स्वप्रवृत्ताविति । तज्जन्मन्यननुभवेपि जीवनादृष्टोद्बोधितप्राग्भवीयसंस्कारात्स्मृतिसम्भवादिष्टसाधनतापक्षेपीदृशकल्पनाया आवश्यकत्वात् । वस्तुतः शुष्ककण्ठतया दुःखमनुभवतो बालस्य विरोधोद्बोधितसंस्कारस्मारितसुखवृत्तितया तदङ्गत्वात् कार्यत्वस्मृतेरेवोन्नेतुमुचितत्वाच्चेति भावः। स्वप्रवृत्तावश्यकारणताप्रदर्शनं तु तन्मूलकविपक्षबाधकतर्कोपव्याप्तिग्रहणाय । ननु साध्यत्वसाधनत्वयोः समानसंवित्संवेद्यतया साध्येष्टकत्वोपस्थिताविष्टसाधनोपस्थितेरविशेषे कुतो विशेषात्साध्येष्टकत्वज्ञानमेव प्रवर्त्तकं नान्यदित्यत आह नच समानेति । असिद्धत्वमेवोपपादयति यागेति । पूर्वोत्तरताभेदाद्विशेषणविशेष्यभेदाच्चे-

द्येयम् । न च समानसंवित्संवेद्यतया विनिगमाविरह इति वाच्यम् । समानसंवित्संवेद्यताया एवासिद्धत्वात् । तथाहि यागसाध्यः स्वर्ग इत्यत्र यागनिरूपितनियतोत्तरभावः स्वर्गे प्रतीयते न स्वर्गनिरूपितनियतपूर्वसत्त्वं यागे । ननु यत्र घटसाधनं दण्ड इति वाक्याश्रयमत एव साधनता प्रतीयते तत्र किं तज्ज्ञानान्न प्रवर्त्तते आपाततस्तावदेवं किन्तु साधनताज्ञानानन्तरं दण्डस्य कृतिसाध्यत्वमवश्यमुपजीव्य-

---

ति भावः । ननु समानसंवित्संवेद्यतानङ्गीकारे व्यभिचारः तदङ्गीकारे तूक्त एवाविनिगम इत्युभयतः पाशारज्जुरित्याशयेनाह ननु यत्रेति । आपातत इति । साध्यघटकत्वानुपस्थिताविव्यर्थः । नन्वेवं प्रवृत्त्यनुभवविरोध इत्यत आह किन्त्वति । अनन्तरमिति । अतो न समानसंवित्संवेद्यतयाऽविनिगमप्रसङ्ग इति भावः । अनुमायेति । अतो न व्यभिचारोपीति भावः । अनुमितिकल्पनागौरवपराघातं मनसि कृत्वा पृच्छति अथ किमिति । प्रवृत्तिकालीनलाघवसहकृतप्रमाणेन कृतिसाध्यसाध्येष्टकत्वज्ञानकारणतासिद्धौ फलमुखत्वान्नैतद्गौरवं दोषावहमित्याशयेनाह मृणिवत्यादि । अवश्यमिति । कृत्यसाध्ये प्रवृत्तिवारणायेत्यर्थः । अवश्यं

म्?। तत्र च विशेषणान्तरमवश्यं कल्पनीयम्। त-च्च क्लृप्तं साध्यत्वमेव कल्पतामुत तद्विजातीय-साधनत्वम्। तत्र द्वितीयपक्षे गौरवात् प्रथम एव ज्यायान्। इदमेवोच्यते परेषां मनुरपि विशेषो-ध्यवसायकर इति। नन्व फलविशेष्यकेन प्रत्ययेन कथं साधने प्रवृत्तिरिति वाच्यम्। साधनस्यापि प्रकारतया तद्विषयत्वात् विशेष्यस्य प्रवृत्तावत-न्त्रत्वात्। कृतिसाध्यो यागः स्वर्गसाधक इति

---

कल्पनीयमिति। निष्फले प्रवृत्तिवारणायेत्यर्थः। गौरवा-दनुपस्थितकल्पनारूपात्। ज्यायानिति। सजातीयो-पस्थितेराशुभावित्वलाघवादिति भावः। नन्वल्पोयं विशेष इत्यत आह इदमेवेति। परेषामिति। इष्ट-साधनतावादिनामुपस्थितसाध्यत्वापेक्षयाल्पोपि विशे-षो विजातीयसाधनतोपस्थितिकल्पनारूपो गुरूणाम-ध्यवसायकर उत्साहकर इत्यर्थः। तद्विशेषोपस्थिति-कल्पनागौरवाभावेन स्वमतनिर्वाहादिति भावः। ननु समानविशेष्यकज्ञानकारणताग्राहकप्रमाणमूलत्वान्न तद्गौ-रवं दोष इत्याशङ्क्याह न चेति। साधनस्यापीति। व-स्तुन इति शेषः। अतन्त्रत्वादिति। इह रजतत्वं रजत-त्ववदिदं गृहमित्यतोपि रजतार्थिप्रवृत्तिसम्भवाद्गौर-वाच्चेति भावः। ननु प्रामाणिकत्वान्न गौरवं दोष इत्यत

यागविशेष्यकस्याज्ञानस्य सम्भवादिति । मैवम्
यथा साजात्यं विनिगमकं तथा ममापि साध्य-
ताप्रकारकस्य सामानाधिकरण्यं विनिगमकम्
तथाच साध्यसाधकभावस्य प्रवर्त्तकत्वम् नतु
साध्यप्रयोजनतेति । किञ्च कृतिसाध्यत्व उप-
जीव्यमेव नेष्यते अपितु कृतिसाधनको यागः

आह । कृतिसाध्य इति । गौरवलाघवयोरविशेषेण परिहरति मैवमिति । क्लृप्तेति । तच्चेष्टसाधनत्वस्यैव कृतिसाध्ययागवृत्तित्वान्न तु तत्साध्यत्वस्य कृत्यसाध्य-फलवृत्तित्वादिति भावः । साध्यसाधनभावस्येति । साध्यं फलं प्रति यः साधनभावो यागादेस्तस्येत्यर्थः । साध्यस्य कृतिसाध्यस्य यागादेर्यः साधनभावः फलं प्रति तस्येति वा । नतु साध्यप्रयोजनतेति । साध्यस्य यागस्य यत्प्रयोजनं तस्य ज्ञानमित्यर्थः । यद्वा साध्यस्य फलस्य यत्प्रयोजनताज्ञानं यागप्रयोजनताज्ञानमित्यर्थः । ननु साध्यत्वे साजात्यं साधनत्वे सामानाधिकरण्यमिति विनिगमकतौल्येऽप्युपजीव्यत्वात्साध्यत्वमेव कल्पयितुं युक्तम् । किञ्च साध्यत्वपक्षे साजात्यवत्सामानाधिकरण्य-मपि सुलभमेव कृतिसाध्यो यागः स्वर्गसाधन इति प्रव-र्त्तकज्ञानसम्भवादित्यत आह किञ्चेति । तथा चोप-जीव्यत्वसाजात्यसामानाधिकरण्यानां साधनतापक्षेऽपि तुल्यत्वान्न कृतिसाध्यताज्ञानस्य प्रवर्त्तकतासिद्धिरित्या-

स्वर्गसाधनमिति ज्ञात्वा प्रवर्तते तथा चा-णुरपि विशेषोऽध्यवसायकर इत्युभयत्र दत्तपदं नैकत्र पक्षायतमालम्बतेऽत्रतु विनिगमनाविरहेऽपि न काचित् क्षतिरिति ध्येयम् । नन्वेवमिष्टसाध-नताज्ञानस्यापि प्रवर्तकत्वमसाध्येपीष्टसाधने प्र-वृत्तिप्रसङ्गात् । कृतिसाध्यत्वविशेषणान्नैवमिति चेत् न अन्यक्रियमाणकारीर्यादावपि प्रवृत्तिप्रस-ङ्गात्। स्वकृतिसाध्यविशेषणान्नैवमिति चेत । न स्वकृतिसाध्येऽन्येष्टसाधने प्रवृत्तिप्रसङ्गात् । इष्ट-

---

ह तथाचेति । नन्वेवमिष्टसाधनताविधिपक्षोपि न सिद्ध्येद्विनिगमादत आह अत्रत्विति । उद्देश्यकृति-साध्यताविधिविघटनस्य तावतैव सिद्धेरिष्टसाधनतावि-धित्वस्य च युक्त्यन्तरेणैव साधयिष्यमाणत्वादिति भावः॥ परिशेषेण कार्यताया विधित्वं व्यवस्थापयितुं सम्भा-वितस्येष्टसाधनत्वस्य विधित्वं निराचष्टे नन्वेवमि-ति । असाध्येपीति । चन्द्रमण्डलादावित्यर्थः । विशेषणा-दिति । इष्टसाधनत्वस्येति शेषः । अन्येति । कृतिसा-ध्यत्वसामान्यस्यान्यस्यान्यकृतिसाध्येऽप्यविशेषादिति भावः । कृतेः स्वीयत्वेन विशेषणान्न दोष इति शङ्कते स्वकृतीति । स्वकृतिसाध्यत्वे सति स्वेष्टसाधनताज्ञानं प्रवर्तकमतो नोक्तदोष इति शङ्कते इष्टत्वमपीति ।

त्वमपि स्वीयत्वेन विशेषणीयमिति चेन्न तथाभूतेऽतीतभोजनेऽतिप्रसङ्गात् साध्यसाधनत्वयोर्विरोधाच्च । न ह्येतदेवोत्तरभावि तदेव पूर्वभावि संभवति । रूपभेदेनाविरोधे पूर्वदोषापरिहारात् । स्वकृतिव्यतिरेकेण यन्न सिद्ध्यति स्वेष्टसाधनं चेति ज्ञानान्नैवमिति चेत् । न अल्पेष्टसाधने प्रवृत्तिप्रसङ्गात् । यत्प्रतिसाधनत्वं तदिष्टत्वं किं विवक्षितम् । वर्तमानेच्छा-

---

तथाभूते इति । स्वकृतिसाध्ये स्वेष्टसाधने च पूर्वभूत इत्यर्थः । ननु तदा स्वकृतिसाध्यत्वे सति तदा स्वेष्टसाधनत्वं विवक्षितम् न चातीतावस्थायां भोजने तदस्ति सिद्धत्वात्तृप्तेरिष्टत्वाभावेनेष्टासाधनत्वाच्चेत्यत आह साध्यत्वे चेति । असिद्धसिद्धधर्मत्वात्तयोरिति भावः । ननु कृत्यपेक्षया साध्यत्वमिष्टापेक्षया साधनत्वमिति को विरोध इत्यत आह निरूपकेति । पूर्वेति । अतीतभोजने प्रवृत्तिप्रसङ्गादित्यर्थः । स्वकृतिव्यतिरेकेणासम्भावितोत्पत्तिकस्वेष्टसाधनताज्ञानं प्रवर्तकम् न चातीतभोजने प्रवृत्तिप्रसङ्गः तस्य तद्व्यतिरेकेणैवोत्पत्तेरिति शङ्कते स्वकृतीति । तृप्तिरूपेष्टसाधने बलवदनिष्टाननुबन्धिनि विषसम्पृक्तान्नभोजने व्यभिचारान्नैतदपीत्याह नाल्पेति । विकल्पासहत्वान्ने-

विषयत्वमिति चेत् । न इच्छाज्ञानस्यापि प्रवर्तकत्वप्रसङ्गात् । इच्छाविषयत्वावच्छेदकरूपवत्त्वमिति प्रतिसन्धानमिति चेन्न । तत्त्वादेव । इच्छोपलक्षणमिति चेत् । न स्वर्गापवर्गमतस्यैकस्योपलक्ष्यत्वस्याभावेनाननुगमात् । किञ्चेष्टोपायताज्ञानमिच्छाद्वारा कारणम् तच्चेच्छाजनकत्वे सति सिद्ध्यति । इच्छाजनकत्वम् स्वेष्टे

---

ष्टसाधनताज्ञानं प्रवर्तकमित्याह यत्प्रतीति । वर्तमानेति । अतीतेच्छाविषयत्वमादायातीतभोजने प्रवृत्तिवारणाय वर्तमानेति । इच्छा विशेषणमुपलक्षणम् वा ? नाद्य इत्याह इच्छाज्ञानस्यापीति । नन्विच्छापदेनेच्छाविषयतावच्छेदकरूपस्य विवक्षितत्वात्तस्य विशेषणत्वेन दोष इत्याशङ्कते इच्छाविषयत्वावच्छेदकेति । अवच्छेदकरूपाणामपीच्छाविषयतावच्छेदकत्वेन ज्ञानं हेतुः प्रत्येकरूपेण वा ? नाद्य इत्याह तत्त्वादेवेति । इच्छाज्ञानस्य प्रवर्तकत्वापातादेवेत्यर्थः । द्वितीय शङ्कते इच्छोपलक्षणमिति । तटस्थैवेच्छाजनकज्ञानविषयीभूतानां स्वर्गत्वादिरूपाणां परिचायिकेत्यर्थः । अनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकाभावेन दूषयति न स्वर्गापवर्गेति । प्रकारान्तरेणापि नेष्टसाधनताज्ञानं प्रवर्तकमित्याह किञ्चेत्यादिना । इच्छाद्वारेति । स-

साधनताज्ञानस्य न सम्भवति । व्यभिचारात् । तथाहि किन्नु तस्येच्छामात्रम् जन्यम् इच्छाविशेषश्चिकीर्षा वा ? नाद्यः । उपायताज्ञानम् विनापि स्वर्गे भोगे चेच्छादर्शनात् । न द्वितीयः स्वर्गादावपि चिकीर्षादर्शनात् । कृत्या साधयितुमिच्छा हि चिकीर्षा सा स्वर्गादौ न दण्डवारिता । किन्त्विष्टसाधनत्वस्य न विधित्वम् । अहरहः सन्ध्यामुपासीतेत्यादाविष्टाभावेन तदुपायत्वासद्भावात् । न कलञ्जं भक्षयेदित्यादचोपायताविधिपक्षे किं निषेध्यम् । इष्टोपाय-

त्यपि ज्ञाने तद्व्यतिरेके प्रवृत्त्यनुत्पत्तेरिति भावः । अस्तु तर्हि तथैवेत्यत आह इच्छाजनकत्वं चेति । व्यभिचारमेवोपपादयति तथाहीत्यादिना । व्यतिरेकव्यभिचारेण दूषयति उपायताज्ञानं विनेति । स्वर्गेति । तत्साध्येष्टान्तराभावादिति भावः । ननु स्वसाक्षात्कार एव तत्साध्य इत्यत आह भोगे चेति । द्वितीयेपि व्यभिचारमाह स्वर्गादाविति । ननु चिकीर्षा साधनम् एव न स्वर्ग फलेत्यत आह कृत्येत्यादिना । नित्यकर्मप्रवृत्त्यनुपपत्तिबाधितमपीष्टसाधनताया विधित्वमित्याह किन्त्विष्टेत्यादिना ॥ । इष्टाभावेनेति । भावे वा काम्यत्वापत्तेरिति भावः । तदुपायत्वासम्भवा-

त्वमिति चेत् न बाधात्। नहि कलञ्जभक्षणम् न किञ्चिदनिष्टसाधनम्। पर्युदासवृत्त्याऽनिष्टसाधनताऽभिधीयते इति चेत् नञोऽसम्भवात्। क्रियानुविधायित्वाच्च। न च बलवदनिष्टाननुबन्धि निषिध्यत इति भवेदेवं यदि बलवदनिष्टाननुबन्धीष्टसाधनत्वम् विधिः स्यात्। नत्वे

---

दिति। तत्र प्रवृत्त्यनुपपत्तिरिति शेषः। निषेधविध्यनुपपत्तिरपि तद्बाधिकेत्याशयेनाक्षिपति न कलञ्जमिति। प्रश्नं मत्वोत्तरमाह इष्टोपायत्वमिति। आक्षेप्ता स्वाशयमुद्घाटयति बाधादिति। बाधासिद्धिं निरस्यति नहीति। तृप्तीष्टसाधनत्वादिति भावः। ननु मास्त्विष्टसाधनत्वं निषिध्यतेऽपि त्वनिष्टसाधनत्वं विधीयते अप्राशस्त्यमानयेति—तत्पर्युदासाश्रयणादित्याशङ्कते पर्युदासेति। व्युत्पत्तिविरोधेन दूषयति असमस्तत्वादिति। "पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञिति"—वचनात्समास एव तद्व्युत्पत्तेरिति भावः। क्रियासङ्गतत्वेन प्रसज्यप्रतिषेधत्वावगमादपि निषेधतात्पर्यत्वं वाच्यम् नानिष्टसाधनताविधायकत्वमित्याह क्रियेति। "प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञिति" लक्षणवशेन प्रसज्यप्रतिषेधस्यैवोचितत्वादिति भावः। ननु पुरुषत्वे दण्डी पुरुषो नास्तीत्यत्र दण्ड इव न

वम् । किन्तु बलवदनिष्टानुबन्धित्वं प्रति साधनस्य प्रतिबन्धकत्वमिति । न त्वेतावतापि कार्यत्वम् विधिरिति न निर्व्यूढम् । एतावदेव प्रकृते साध्यमिति चेत् । न कार्यताविधिवादिनोऽभिप्रायानभिज्ञानात् । तथाहि चिकीर्षाजन्यकृतिसाध्यत्वमेतावत्कार्यत्वम् । न च चिकीर्षाज्ञानस्यापि प्रवर्तकत्वप्रसङ्गः । तस्याः कृतिविशेषोपलक्षकत्वात् । तस्य च कृतिसाध्यवि-

---

कलञ्जं भक्षयेदित्यत्र बलवदनिष्टाननुबन्धित्वम् विशेषणमेव निषिध्यते न विशेष्यमिष्टसाधनत्वम् बाधादित्याह नचेति । नत्वेवमिति । गौरवादिति भावः । नन्वेवं विषसम्पृक्तान्नभोजनेपि प्रवृत्तिप्रसङ्ग इत्यत आह किन्त्विति । बलवद्बाधकेन कार्यत्वस्य विधित्वे निरस्तेऽनन्यगत्या गौरवमपि परिभूय बलदनिष्टाननुबन्धीष्टसाधनत्वस्य विधित्वम् कल्पयिष्यत इत्यभिसन्धाय शङ्कते नन्विति । नन्विष्टसाधनत्वमपि न निर्व्यूढमत आह एतावदेवेति । नेदानीं मम स्वपक्षसाधनायोद्योगः किन्तु भवत्पक्षप्रतिक्षेपाय प्रतिक्षिप्ते च तस्मिन्पारिशेष्यादेवास्मत्पक्षः सेत्स्यतीत्यर्थः । बलवद्बाधकस्यैव प्रकृताबङ्गत्या दूषयति नेति । ननु चिकीर्षाजन्यकृतिसाध्यत्वमेव कार्यत्वं त्वदभिमतम् तदेव च चिकीर्षाज्ञा-

शेषस्य गुणजात्यनङ्गीकारवादिनामपि चिकीर्षा-कारणत्वे निर्वाहार्थं स्वीकर्तव्यत्वात् । अन्यथा कीदृशं प्रयत्नं प्रति चीकीर्षा कारणं स्यात् ? प्रयत्नमात्रं प्रति व्यभिचारात् । गुणगतजाति-वादिनान्तु कस्याः अप्यनुपपत्तेरसम्भवात् । तथाच कृतिसाध्यत्वमेव विधिः । कृतिसाध्येष्टा साधनत्वापेक्षया लघुत्वात् । स्वर्गापवर्गादीन्प्र-

नस्य प्रवर्त्तकत्वापत्त्यादिनास्माभिर्दूषितमिति कथमभि-प्रायज्ञानमित्यत आह तथाहीत्यादि । ननूक्त एवात्र दोष इत्यत आह नचेति । ननु कृतौ विशेषो जाति-रुपाधिर्वा ? नाद्यः त्वया गुणजातेरनङ्गीकारात् । न द्वितीयः तदनिर्वचनादित्यत आह तस्य चेति । रूप-त्वादिवदुपाधिरूपस्येति शेषः । तत्स्वीकारे बीजमाह चिकीर्षेति । काऽनुपपत्तिः कारणताया इत्यत आहान्य-थेति । ननु कृतिसामान्यं प्रत्येव कारणं स्यादित्यत आह कृतिमात्रे व्यभिचारादिति । द्वेषहेतुककृतौ जीवनयोनि-कृतौ चेत्यर्थः । भवत्पक्षे तु जातिविशेषाभ्युपगम एव नानुपपत्तिरित्याह गुणगतेति । दोषनिरासेन सिद्धं का-र्यत्वस्य विधित्वमुपसंहरति तथ चेति । ननु विनिगम-नाविरहादिष्टसाधनत्वकृतिसाध्यत्वयोर्द्वयोरपि विधित्व-स्यौचित्यादस्मत्पक्ष एव पर्यवसानमित्यत आह कृतिसा-

ति साधारणत्वाच्च । न च श्रमेपि प्रवृत्तिप्रसङ्गः । श्रमस्यापि चीकीर्षाजन्यकृतित्वेन कृत्या साध्यत्वात् । द्वेषयोनिप्रयत्नादावपि श्रमदर्शनाच्च । न च चिकीर्षाजन्यकृतिसाध्यत्वेनातीतभोजनादौ

---

ध्येति । इष्टसाधनतापक्षे फले प्रवृत्त्यनुपपत्तेरपि कार्यत्वं विधिरित्याह स्वर्गापवर्गादीनिति । नन्वेवं श्रमेपि प्रवृत्तिप्रसङ्गः तस्यापि कृतिसाध्यत्वात् । न चासौ तदधीनक्रियासाध्यो न कृतिसाध्य इति वाच्यम् । गुरुतरभारोत्तोलनप्रवृत्तस्य क्रियानुदयेपि श्रमदर्शनात्कृतेरेव तद्धेतुत्वादित्यत आह न चेति । चिकीर्षाधीनकृतित्वेन रूपेण तत्साध्यत्वमिह विवक्षितम् । न च तच्छ्रम इत्याह । श्रमस्येति तत्रैव हेतुमाह द्वेषेति । तथा च व्यभिचारान्न चिकीर्षाधीनकृतित्वं तज्जनकतावच्छेदकमिति भावः । नन्वेवं श्रमस्येव गमनादेरपि द्वेषयोनिकनिवृत्तिप्रयत्नादपि दर्शनाच्चिकीर्षाधीनकृतित्वेन तत्साध्यत्वासम्भवात्कथं तत्र प्रवृत्तिः । न च गमनविशेषे तत्संभवः । श्रमेपि तुल्यत्वादिति चेत् । सत्यमयमप्यत्र पक्षे दोष एव द्रष्टव्यः । नन्वेवमतीतभोजने प्रवर्त्तेतेत्यत आह । नचेति । किं यदा कदाचित्प्रवृत्तिरापाद्यते इदानीं वा ? आद्य आह सामान्यत इति । तत्रापि प्राक् प्रवृत्तेरित्यर्थः । द्वितीय आह समयविशेष इति । इदानीमित्यर्थः । अतीतत्वात् सिद्धत्वात् । साध्य-

प्रवृत्तिप्रसङ्गः । सामान्यत इष्टोपादनात्समर्थविशेषप्रवृत्त्यापादनेऽतीतत्वात्साध्यत्वाभावेनापादकत्वाभावात् । नन्वेवं स्वर्गार्थी स्वर्गचिकीर्षाजन्यकृतिसाध्यताज्ञानात्प्रवर्तते स्वर्गार्थिचिकीर्षाजन्यकृतिसाध्यत्वं तु दण्डादिसाधारणमतस्तत्रापि प्रवृत्तिप्रसङ्ग इति । नैवम् । स्वर्गेष्टसाधनतालिङ्गकचिकिर्षाजन्यकृतिसाध्यत्वज्ञानस्य प्रवृत्तिं प्रति जनकत्वात् न च तद्धेतोरेवास्तु । तेन किमिति-

---

त्वाभावेनेति । इदानीमिति शेषः । सिद्धत्वसाध्यत्वयोरेकत्रैकदाऽसम्भवादिति भावः । आपादकाभावादिति । यदा कदाचित्कृतिसाध्यत्वस्याप्रयोजकत्वादिति भावः । नन्वेवं स्वर्गोपायताभ्रमकाले तच्चिकीर्षाधीनया कृत्या दण्डादेरपि साध्यत्वादनुपायताज्ञानकालेपि तज्ज्ञानसम्भवात्प्रवर्ततेत्याशङ्कते नन्वेवमिति । स्वर्गेष्टसाधनतालिङ्गकत्वेन ज्ञानविशेषणाददोष इति परिहरति नैवमिति । नन्वेवं जितमस्माभिर्लाघवादावश्यकत्वाच्चेष्टसाधनत्वस्यैव विधित्वौचित्यादित्यत आह न च तद्धेतोरिति । तथापि नेष्टसाधनतामात्रं विधिः किन्तु कृतिसाध्यत्वविशिष्टम् तथा च प्रथमोपस्थितिलाघवावश्यकत्वाभ्यां तदेव विधिरित्यपि सुवचमित्याह इष्टेति । दोषाभावमुपपादयति न च

न्यायेनेष्टसाधनताज्ञानमेव प्रवर्तकमस्त्वित्यपि वाच्यम् । इष्टसाधनताज्ञानेऽप्यस्य पक्षस्य तुल्यत्वात् । न च दण्डादौ तथाभूतज्ञानम् । यदा तु तथाभूतो भ्रमो भवति तदा प्रवर्तत एव । स्वर्गार्थिचिकीर्षाजन्यकृतित्वेन रूपेण यत् कृतिसाध्यं तज्ज्ञानस्य वा प्रवर्तकत्वमिति ॥

तथाभूतमिति । इष्टसाधनतालिङ्गकमित्यर्थः । दण्डादाविति । अनुपायताज्ञानकाल इति शेषः । उपायताज्ञानकाले ऽविष्टापत्तिरित्याह यदात्विति । तथाभूतः इष्टोपायताविषयः । प्रवर्तत एवेति । तल्लिङ्गककृतिसाध्यताज्ञानसम्भवाद्दिति भावः । नन्विष्टसाधनतालिङ्गकत्वे विशेषणे चिकीर्षाजन्यत्वमनर्थकं तत एव विपक्षादिव्यावृत्तेः । साध्यत्वसाधनत्वयोर्विरोधेन लिङ्गिसामानाधिकरण्यग्रहानुपपत्तिश्च । यच्चस्वर्गापवर्गादिसाधारण्यमुक्तं तदपि भग्नम् । तत्र फले इष्टसाधनतालिङ्गाज्ञानात् । ततो वरं विनिगमकाभावादुभयोरपि विधित्वमित्यस्वरसादाह स्वर्गार्थिचिकीर्षेति । दण्डनिष्ठसाध्यताप्रतियोगिकसाधनता च न स्वर्गार्थिचिकीर्षाजन्यकृतित्वावच्छेद्या घटचिकीर्षाजन्यकृतेरपि दण्डसिद्धेरिति भावः । सोऽयं सस्यापहारिहरिणत्रासाय स्वापकारिवृकसंग्रहः यदतिप्रसङ्गनिरासाय विशेषणोपादाने प्रवृत्तेरेवोन्मूलनमिति ।

अत्रोच्यते तदर्थिचिकीर्षाजन्यकृतित्वेन रूपेण साध्यत्वं तत्साधनेऽपि नास्ति। अन्यथा भ्रमात्प्रवृत्तस्य घटपटादिचिकीर्षाजन्यकृतितो दण्डाद्युत्पत्तिर्न स्यात् । न चात्रेष्टापत्तिः। तथाभूतकृतेरपि दण्डाद्युत्पत्तिदर्शनात् । किञ्चानुपाये उपायार्थी प्रवर्त्तमानो ज्ञप्तिकृतिविशेषसाध्यताज्ञानात्प्रवर्त्तत इति स्वीकर्त्तव्यम्। तदनुपायताप्रतिसन्धानदशायामपि चिकीर्षाजन्यकृतिसाध्यताज्ञानसम्भवात्तत्रापि अतिप्रसङ्गः। न च तत्रानुपायताप्रतिसन्धानमेव निवर्तकम् एवं सत्यनुपायताप्रतिसन्धानाभावः कारणमिति वाच्यम्। तथाचोपायताज्ञानमेव स्वीकर्त्तुं युक्तं

सिद्धान्तयति तदर्थीति। पटार्थिनः पटसाधनताभ्रमजन्यचिकीर्षाधीनकृतेरपि दण्डोत्पत्तेर्न घटार्थिचिकीर्षाजन्यकृतित्वं कृतौ दण्डसाधनतावच्छेदकमिति तेन रूपेण कृतिसाध्यत्वासम्भवाद्दण्डे घटोपायताज्ञानेपि घटार्थी न प्रवर्तेत एवमन्यत्रापीत्यर्थः। एवमुपायताज्ञाने प्रवृत्तिमापाद्यानुपायताज्ञाने प्रवृत्त्यापादनेष्टोपायताज्ञानमानेतुमुपक्रमते किञ्चेति। सम्भवादिति। तादृशकृतित्वेन साध्यतायाः प्रागेव निरा-

लाघवात् । एवं मण्डलीकरणादावपि स्वर्गकाम-श्चिकीर्षाकृतिसाध्यताज्ञानात्प्रवर्तेत इति वाच्यम् । तथाच तत्र तस्य सत्त्वात्तद्बोधकवाक्यस्य प्रमाणतापत्तिः । न च तत्र स्वर्गसाधनताबाधा-च्चिकीर्षाजन्यकृतिविशेषसाध्यताबाध इति युक्तम् । अवसानेपि तथाभूतचिकीर्षासम्भवस्य पूर्व-मुक्तत्वात् । न चेष्टसाधनतालिङ्गककार्यताज्ञान-स्यापि प्रवर्तकत्वमिति वाच्यम् । व्यभिचारेण लिङ्गत्वायोगात् । न चेष्टसाधनतालिङ्गककार्यता-

---

सादिति भावः । लाघवादिति । अनुपायताप्रतिसन्धा-नाभावापेक्षयेति शेषः । न तु कृतिसाध्यत्वापेक्षयेति । इष्टोपायतापक्षेपि तदुपादानस्यावश्यकत्वात् । ननु प्रवृत्तौ फले न विवाद इत्यत आह तथाच तत्र तस्य सत्त्वादिति । कृतित्वेन साध्यताया अविवक्षणादिति भावः । व्यापकानुपलब्ध्या चिकीर्षाजन्यकृतिसाध्यताया मंडलीकरणादौ बाधान्न तद्बोधकप्रामाण्यप्रसङ्ग इत्या-शंक्य व्यापकत्वासिद्ध्यैव परिहरति नचेत्यादिनो-क्तत्वादित्यन्तेन । इष्टसाधनतालिङ्गकं कार्यताज्ञान प्रवर्तकमित्यपि दूषयति नचेष्टेति । व्यभिचारेणे-ति । चन्द्रमण्डलोदयादाविष्टसाधनत्वेपि कार्यत्वाभा-वादिति भावः । न केवलं व्यभिचारः किन्त्वसिद्धिरपी-

ज्ञानं यागादौ सम्भवत्यपि कार्यतापक्षे इष्ट- साधनत्वस्यैवालाभात् । यथाकथञ्चिद्भावे वा तदेव प्रवर्त्तकमस्तु । कार्यताज्ञानेपि तस्योप- जीव्यत्वात् नहि कार्यताज्ञानमात्रं प्रवर्त्तक- मित्युक्तं प्राक् । इष्टसाधनतारूपलिङ्गधीपूर्वकृ- तिविशेषसाध्यताज्ञानापेक्षया कृतिसाध्येष्टसा-

त्याह नचेति । अलाभादज्ञानात् । ननु लिङादेस्तद- लाभेपि तच्छक्यकार्यत्वेनाक्षेपादेव तल्लाभः स्यादित्यत आह भावेवेति । वस्तुतो नाक्षेपोपि असाधनत्वेपि कार्यत्वस्य प्रागुपपादितत्वादित्याशयमाह यथाकथंचि- दिति । इष्टसाधनताज्ञानमेवेत्यर्थः । अस्तु तर्हि तदनु- पजीविशाब्दमेव ज्ञानं प्रवर्तकमित्याशंक्याह नहीति । प्रागिति । दण्डादौ स्वर्गकामप्रवृत्त्यापादनावसर उक्त- प्रायमित्यर्थः । ननु कृतिसाध्यत्वे इष्टसाधनत्वस्यैवेष्ट- साधनत्वेऽपि कृतिसाध्यत्वस्यावश्यकत्वात्कुतो विनि- गम इत्यत आह इष्टसाधनतेति । वस्तुत इष्टसाधन- तालिङ्गकत्वम् न प्रवर्तकज्ञानविषये कृतिसाध्यत्वे विशेषणं बाधात् लिङादिजप्रवर्त्तकज्ञाने इष्टसाधनता- लिङ्गककृतिसाध्यत्वानुल्लेखादप्रवृत्त्यापत्तेश्च । नापि प्रवर्त्तकज्ञानं स्वरूपसत् । लिङादिज्ञानादतज्ज- न्यात्प्रवृत्त्यनुपपत्तेः । नापि तन्निष्ठतया ज्ञातम् । ज्ञान-

घनताज्ञानस्य लघुत्वात् । त वत्रयं मम तु द्वय-
मिति विपरीतमापतितम् । अतएवानाप्तोक्तम-
एडलीकरणादौ साधनताभ्रमात् प्रवृत्तोपि वि-

ज्ञानस्याप्रवर्तकत्वात् लिङ्गादिना तदज्ञापनाच्चेति
द्रष्टव्यम् । त्रयमिति । वस्तुतश्चतुष्टयम् । तथाहि
प्रथमं स्वर्गकामकृतिसाध्यो याग इति स्वर्ग-
कामो यजेतेति विधिवाक्यजन्यमेकं ज्ञानम् । तत औ-
पादानिकमिष्टसाधनताज्ञानम् । ततो यागो मत्कृति-
साध्यः मत्कृतिं विनाऽनुपपद्यमानत्वे सति मदिष्टसा-
धनत्वान्मद्भोजनवदित्यानुमानिकं तृतीयं कृतिसाध्य-
ताज्ञानम् । तदनन्तरं मत्कृतिसाध्ययागसाध्यमिष्टमि-
ति चतुर्थं मानसं विशिष्टवैशिष्ट्यज्ञानं ततो यागे प्रवृ-
त्तिरिति । मम तु द्वयमिति । वस्तुतोऽत्रापि त्रयम् ।
तथाहि स्वर्गकामो यजेतेति अतो यागः स्वर्गका-
मस्येष्टसाधनमिति प्रथममेकं शाब्दं ज्ञानम् । ततो
यागो मत्कृतिसाध्य इति पूर्ववत् द्वितीयमानुमानिकम् ।
ततो मत्कृतिसाध्यो यागो मदिष्टसाधनमिति
तृतीयं मानसमतः प्रवृत्तिरिति । त्रयं द्वयमिति तु
न्यूनाधिकत्वमात्रोपलक्षणमिति वृद्धाः । अव्यभिचारा-
दपीष्टसाधनत्वमेव विधिर्न कार्यत्वमित्याह । अतएवेति ।
इष्टसाधनताज्ञानस्य प्रवर्तकत्वादेवेत्यर्थः । प्रतिसन्धा-

शेषदर्शनानन्तरं कृतिविशेषसाध्यताप्रतिसन्धा-
नेऽपि न प्रवर्तते । तस्मात्स्वतोऽसुन्दरे विषये यावत्कृतिसाध्येष्टसाधनता न प्रतिसन्धीते तावदेवोपायार्थी चिकीर्षतीति मनोरथमात्रमेव परेषाम् । तदुपजीवने तु तदेव युक्तमुत्पश्यामः । न

नेपीति । तथा च तस्य प्रवर्तकत्वेऽन्वयव्यभिचार इति भावः । ततः सिद्धं कार्यताज्ञानमात्रस्याप्रवर्तकत्वमुपसंहरति तस्मादिति । अन्वयव्यभिचारादित्यर्थः । स्वतोऽसुन्दरे जन्येच्छाजन्येच्छाविषये । इदं च विशेषणं सुखदुःखाभावयोरिष्टसाधनत्वाप्रतीतावपि परेण चिकीर्षास्वीकारादुक्तं न तु स्वमते । फले चिकीर्षाया एवाङ्गीकारादुपायचिकीर्षात एव तत्सिद्धेः । अस्तु तर्हीष्टसाधनताविशिष्टमेव कार्यत्वं विधिरव्यभिचारादित्यत आह तदुपजीवनेत्विति । लाघवादिति भावः । यद्यपीष्टसाधनतापक्षेऽपि कृतिसाध्यत्वविशेषणस्यावश्यकतया लाघवेन विषयकृतो विशेषः तथापि परमते फलविशेष्यककृतिसाध्यताज्ञानस्य प्रवर्तकत्वस्वीकारात्तदपेक्षयेष्टसाधनताज्ञानस्य प्रवृत्तिसमानविषयतया लाघवमिति द्रष्टव्यम् । इष्टसाधनताज्ञानस्य प्रवर्तकत्वे तन्मात्रस्य तरति मृत्युमित्याद्यर्थवादादेव सिद्धे विधिकल्पनावैयर्थ्यप्रसङ्गान्नेष्टसाधनताविधिरित्याशंक्याह न-

चेष्टसाधनतालाभात् नानेन साधनताप्रतिपादकविध्यनुमानमिति वाच्यम् । अविनाभावबलेन हि विधिकल्पना व्यापकबाधेन व्याप्यबाधशङ्कावारणार्थं न तु साधनतालाभार्थम् । नन्विच्छात्वावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकं विज्ञानमिष्टमनुगतमिति वक्तव्यम् । अनुगतं न किञ्चिदिति ब्रूमः । तर्हि ज्ञानस्येच्छायां कथं कारण-

चेति । विध्यनुमानमिति । नहि ज्ञानगतं विधिजन्यत्वमपि प्रवृत्त्युपयोगीति भावः । अविनेति । अर्थवादस्य विधिव्याप्यत्वेन तत्र विध्यनुमानं नत्विष्टसाधनतावगमायेति भावः । ननु तथापि प्रवृत्त्यनुपयोगितया तदनुमानवैयर्थ्यं तदवस्थमेवेत्यत आह व्यापकबाधेनेति । तथाचेष्टसाधनताबाधेन प्रवृत्तिरेव जन्येतेति तदनुमानसार्थक्यमिति भावः । वस्तुतो बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वयोरप्रतिपन्नयोर्विध्येकसाध्यप्रवृत्तिकतया तदनुमानमिति युक्तमुत्पश्यामः । स्वर्गापवर्गतदुपायसाधारणे जन्येच्छामात्रे व्यभिचारेणेष्टसाधनताज्ञानस्याहेतुत्वात्कृतिसाध्यत्वज्ञानमेव तथा स्यादित्याशयेनाशङ्कते नन्विति । कार्यवैजात्याभिसंधिं परिहरति अनुगतमिति । अभिसंहितं वैजात्यमजानन्पृच्छति तर्हीति । प्रत्येकं व्यभिचा-

त्वम्? स्वर्गे सुखत्वप्रकारकज्ञानात्। दुःखाभावे च तत्प्रकारकज्ञानात्। तदुपाये तदुपायताज्ञानात्। इति गोमयादिवृश्चिकवदित्यत्रधातव्यम्। अन्यथा कार्यविधिवादिनापि किमत्र वक्तव्यम्। तथाहि चिकीर्षाजन्यकृतिविशेषसाध्यताज्ञानं सर्वत्रेच्छाकारणम्। असाध्येऽपि तक्षकचूडामण्यादौ इच्छादर्शनात् कृतिविशेषसाध्यताप्रतिसन्धानेपि सुखादीच्छादर्शनादित्यलमतिपीडया। ननु हितोपायताविधादिना न कलञ्जं भक्षयेदित्यादौ किं निषेध्यम् न तावत्कलञ्जभक्षणस्य हितोपायताबाधादित्युक्तत्वात। नापि बलवदनिष्टाननुबन्धः। तज्ज्ञानस्याप्रवर्त्तकत्वेन तस्य विधिप्रत्ययोपस्थाप्यत्वाभावात्। तदुपस्थापितेनैव

रादिति भावः। अभिसन्धिमुद्घाटयन्नुत्तरयति स्वर्गे सुखत्वेति। इच्छायामिति। प्रथमया विपरिणतमनुषञ्जनीयम्। तथाच जन्यस्वर्गेच्छात्वादिना कार्यवैजात्यान्नाननुगम इति भावः। गोमयादीति। गोमयादिभ्यो वृश्चिकादय इवेत्यर्थः। अनुगतकार्यताज्ञानसम्भवे नाननुगतकल्पना युक्तेत्याशंक्याह अन्यथेति। तदुपस्थापितेनैवेति। शाब्दी ह्याकांक्षेत्यादिन्यायादिति भावः। यत्पूर्वमुक्तं क्रियान्वयित्वेन

निषेधान्वयः । न च बलवदनिष्टाननुसन्धानेपि प्रवृत्त्यापत्तिः तत्प्रतिबन्धकस्य प्रागेवोदितत्वात् । न च क्रियान्वयेपि निषेधस्य "यजतीषु येयजामहं कुर्वन्ति नानुयाजेष्विति" यथानुयाजे तस्य यजतीष्विति पर्युदासेनार्थो लभ्यते तथात्रापि अनिष्टसाधनमित्यर्थः पर्यवस्यतीति वाच्यम् । वाक्यभयाद्गत्यन्तराभावात्तत्र तथा कल्पनात् अत्र तु तदभावादिति । बलवदनिष्टानुबन्धज्ञानस्य हि प्रवृत्तिप्रतिबन्धकत्वे तदभावस्य कारणता वाच्या तदा विनिगमकाभावात् तदभावबलवदनिष्टा-

---

पर्युदासत्वानुपपत्तेर्नानिष्टसाधनत्वं नञर्थ इति तत्र व्यभिचारमाशंक्य निरस्यति नचेति क्रियान्वयेपीति । गत्यन्तराभावादिति । मुख्यार्थबाध एव लक्षणारूपपर्युदासौचित्यादिति भावः । विनिगमकाभावादिति । वस्तुतो बलवदनिष्टाननुबन्धित्वज्ञानस्याप्रवर्त्तकत्वे बलवदनिष्टानुबन्धित्वज्ञानस्य प्रवृत्तिजनकेष्टसाधनताज्ञानमात्राविघटकतया प्रवृत्तिप्रतिबन्धकत्वमेवानुपपन्नम् । जनकीभूतज्ञानविघटनेनैव विरोध्यविषयकज्ञानस्य प्रतिबन्धकत्वावधारणात् । अन्यथा कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति तदभावः कारणं न तु कृतिसा-

ननुबन्धज्ञानयोरपि कारणत्वात् । एवं बलवद्
निष्टाननुबन्धीष्टसाधनं विधिरिति स एव

न्धित्वज्ञानमित्यपि सुवचमिति भावः । एवं बलवद्-
निष्टाननुबन्धीष्टसाधनं विधिरिति । इष्टोत्पत्तिनान्त-
रीयकदुःखाधिकदुःखाजनकत्वे सतीष्टसाधनताप्रवर्त्तक-
ज्ञाने विषयतया जनकतावच्छेदकप्रकार इत्यर्थः ।
अतो नान्तरीयकदुःखसाधने बहुतरेष्टसाधने यागादौ
प्रवृत्तिः शतयोजनान्तरितभोजनफलकयात्रादौ चाप्रवृ-
त्तिरुपपन्ना भवति । ननु श्येनादिबलवदनिष्टाननुबन्धित्वज्ञान-
वतां कथमगम्यागमनादौ प्रवृत्तिरिति चेत् । न रागा-
दिदोषौत्कट्येन बलवदनिष्टाननुबन्धांशज्ञानप्रतिबन्धा-
त् बलवदनिष्टाननुबन्धित्वभ्रमोदयाच्च तदुपपत्तेः ।
नन्वेवं वीतरागाणामभ्रान्तानां योगिनां निषिद्धकर्मणि
प्रवृत्त्यनुपपत्तिः । बलवदनिष्टानुपहितत्वं तदर्थो
न तु तज्जननायोग्यत्वं येन बलवदनिष्टाननुबन्धित्व-
ज्ञानानुपपत्तिः । अस्ति च योगिकृतस्यागम्यागमना-
देर्दोषासहकृतत्वेन बलवदनिष्टानुपहितत्वमिति न
तज्ज्ञानानुपपत्तिरिति वाच्यम् । दुःखबहुलकर्मण्ययोगि-
नामपि प्रवृत्तिप्रसङ्गात् । प्रवृत्तिजनकज्ञानकाले तस्य
बलवदनिष्टानुपहितत्वस्य ज्ञानसम्भवादिति चेत् ।
न तेषामप्यपवर्गरागदोषौत्कट्येन तद्भ्रमस्वीकारेऽपि
बाधकाभावात् । न च स्वर्गिणामूर्वश्यादिसम्भोगे

प्रवृत्त्यनुपपत्तिः इष्टोत्पत्तिनान्तरीयकदुःखाप्रसिद्धेरिति वाच्यम् इष्टान्यूनजनकत्वस्यैव तदर्थत्वात् तत्संभोगसुखान्यूनदुःखस्य चान्यत्र प्रसिद्धेः । अत एव तुल्यायव्ययत्वज्ञानदशायां न प्रवृत्तिः । अधिकदुःखाजनकत्वेप्यन्यूनदुःखजनकत्वात् । न च समानशीलवस्तुद्वयोपस्थितावुभयत्र प्रवृत्तिरप्रवृत्तिर्वा स्यान्नैकत्र विनिगमकाभावादिति वाच्यम् । फलबलेन प्रवर्त्तकज्ञानस्यैकमात्रविषयस्यैवोत्पत्तेरुन्नयनात् । न चेष्टसाधनमिमाः सुमनस इत्येकप्रकारकेष्टसाधनस्य समूहालम्बनस्थले तथाप्यनुपपत्तिरिति वाच्यम् । तत्रापि क्वचिदव्यवहितोपरितनसुमनःसाध्येष्टापेक्षया व्यवहिताधस्तनसुमनसामधिकारोपसर्पणायाससाधनताप्रतिसन्धानात् । क्वचित्सव्यासव्याङ्गलाघवानुरोधेन तदितराङ्गवलनायाससाधनताप्रतिसन्धानात् एवमन्यत्रापि कल्पनात् । नन्वजनकत्वमत्यन्ताभावान्योन्याभावभेदेन भिन्नं तथाच मिलिताज्ञानस्य हेतुत्वे गौरवमननुभवश्च प्रत्येकज्ञानेपि फलसिद्धेर्व्यभिचारश्च । प्रत्येकहेतुतायां चाननुगम इति चेत् । न प्रत्येकहेतुत्वेपि तादृशदुःखजनकत्वज्ञानविरोधिज्ञानत्वेनानुगमात् । नन्वेवमपि शक्याननुगमाच्छक्तिग्रहानुपपत्तौ न प्रतीकारः उक्तानुगमस्य ज्ञानवृत्तितया विधिजन्यज्ञानेप्रकारत्वात् । किञ्चानियतदुःखजनके कर्मणि फलस्यानन्यगतिक-

ताप्रतिसन्धाने दृश्यते प्रवृत्तिः सान्यदेत्यनुभवसिद्धम् । तच्चैवं सति न स्यात् । तस्यैव तज्जन्यदुःखस्य समयभेदेन पुरुषभेदेन चान्यूनाधिकभावासम्भवात् । अथोत्कटद्वेषविषयदुःखाजनकत्वं विवक्षितम् । न च फलोत्कटेच्छाभावकाले तद्दुःखे उत्कटद्वेषस्य जातत्वादुक्तज्ञानानुपपत्तिः । यथा यदा यत्र यस्येच्छा वस्तुनस्तत्साधनतोत्तरभागार्थस्तथा यत्र यस्य यदोत्कटद्वेषस्तदा तस्य तत्साधनत्वाभावः पूर्वभागार्थः । अत एवोत्कटरागान्धस्य दुःखे न तदा द्वेषोत्कट्यमिति तदातनतदीयोत्कटद्वेषविषयदुःखाजनकत्वज्ञानमप्रत्यूहं यतः प्रवर्तते, तदितरस्य तु नेति न प्रवर्त्तत इत्यनुभवसिद्धम् । उत्कटत्वं च जातिविशेष इति न तदनिरुक्तिरिति । तन्न । तथात्वे न कलञ्जं भक्षयेदिति विशिष्टनिषेधपर्यवसायितया कलञ्जभक्षणमुत्कटेदानीन्तनमद्द्वेषविषयदुःखसाधनमित्यन्वयबोधः स्यात्तथा च यस्य रागान्धस्य तत्साध्यदुःखे नोत्कटद्वेषस्तं प्रति विषयबाधेन तद्वेदाप्रामाण्यप्रसङ्गः । एवञ्च स एव वेदः कञ्चित्प्रति प्रमाणं कञ्चित्प्रत्यप्रमाणमिति महद्वैशसमापतितम् । अथ तत्र मदनन्तर्भावस्तथापि तादृशयत्किञ्चिद्द्वेषविषयत्वं वा विवक्षितम् । आद्ये यजेतेत्यादौ बोधापत्तिः बहुवित्तव्ययायाससाध्ययागजदुःखे पाखण्डादेरुत्कटद्वेषसम्भवात् । अन्त्ये न कलञ्जं भक्षयेदितिनिषेधस्य सक-

लद्द्वेषविषयदुःखजनकत्वपर्यवसायित्वे बाधापत्तिरिति चेत्। अत्र वदन्ति। एकत्रापि विषये पुरुषसमयभेदाभ्यामिच्छाद्वेषयोरौत्कट्यवशात्प्रवृत्त्यप्रवृत्ती इति तावदनुभवसिद्धम्। एवञ्चोत्कटद्वेषविषयसाधनताज्ञानं प्रतिबन्धकमिति तदभावः कारणं न तु द्वेषविषयसाधनत्वाभावः कारणमिति नोक्तोनुगमः। न च रागौत्कट्यदशायामतीतोत्कटद्वेषविषयसाधनज्ञानात्प्रतिबन्धापत्तिः। यदा यस्य यत्रोत्कटद्वेषस्तदा तस्य तत्साधनताज्ञानस्य तदीयतद्विषयप्रवृत्तौ प्रतिबन्धकत्वात्। न च जनकीभूतज्ञानाविघटकत्वे तस्यैवानुपपत्तिः। निवृत्तिसामग्रीत्वेन सत्प्रतिपक्षवत्साक्षादेव विरोधित्वात्। व्याप्तेश्च साक्षाद्विरोधिविषयत्वात्। तथा च तज्ज्ञानस्यानपेक्षितत्वेन विधिजन्यतानङ्गीकारान्न पूर्वोक्तदोषलेशावकाशः। नचैवं न कलञ्जं भक्षयेदित्यत्र निषेधान्वयानुपपत्तिरिति वाच्यम्। तत एवासुराविद्यादिवत्पर्युदासलक्षणाऽनिष्टसाधनत्वस्यैव तदर्थत्वात्। न चासमासे तदनुपपत्तिः। घटः पटो नेत्यत्र भेदवल्लक्षणास्वीकारात्। न च विरोधिलक्षणासमास इति नियम इति वाच्यम्। अनुपपत्तेरेव लक्षणामूलत्वेन तदन्यस्याप्रयोजकत्वादिति। बलवदनिष्टाननुबन्धेनेत्यादि। ननु बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य विशिष्टस्य विधिशक्यत्वात्तदेकदेशे बलदनिष्टाननुबन्धित्वमात्रे कथं नञोऽन्वयः।

लिङ्गादिप्रत्ययवाच्यः । तथा च बलवदनिष्टाननुबन्धेन विधिप्रत्ययोपस्थाप्येन विशेषणेन नञान्वय इत्यनिच्छयापि स्वीकरणीयम् अन्यथा कार्यताविधिवादिना किं वाच्यम्? नहि तस्यापि चिकीर्षाजन्यकृतिसाध्यत्वं कलञ्जभक्षणस्य निषेध्यं बाधात् । नापि कलञ्जभक्षणनिवृत्तिनियोगः

पदार्थो हि पदार्थेनान्वेति न तदेकदेशेन निराकाङ्क्षत्वात् । अत एव गौर्नित्य इत्यत्र गोत्वे विशेषणे नित्यत्वान्वयाय लक्षणास्वीकार इति चेत् । अत्राहुः कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वेष्टसाधनत्वेषु शक्तित्रयमेव स्वीक्रियते तेन प्रत्येकं पदार्थत्वान्नान्वयानुपपत्तिः । न च शक्तित्रयकल्पने गौरवम् । विशिष्टशक्तिपक्षे सामानाधिकरण्यद्वयस्यापि शक्यताङ्गीकारादन्यदा तु संसर्गमर्यादयैव लाघवसम्भवेन गौरववैपरीत्यप्रसङ्गादिति । विशिष्टशक्यत्वेऽप्येकदेशे लक्षणेत्यप्याहुः । निषेधविध्यनुपपत्तिश्चोभयसमाधेयत्वान्न मन्मतएव दोष इत्याह अन्यथेति । बाधादिति । तृप्तीष्टसाधनतया चिकीर्षाधीनकृतिसम्भवादिति भावः । असाध्यत्वादिति । फलाभावाच्चेत्यपि द्रष्टव्यम् । परिपालनस्य कर्तुमशक्यत्वादिति । ननु रागाद्भक्षणोद्यतं प्रति प्रवृत्तेन निषेधविधिना कलंजभक्षणप्रागभावस्य न

वाच्यः फलाभावे च तथाभूतनियोगे प्रमाणाभावात्। नापि कलञ्जभक्षणस्य प्रागभावः साध्यस्तस्याऽनादित्वेनासाध्यत्वात्। न च योगवत्क्षेमस्यापि पुरुषार्थत्वात्प्रागभावपरिपालनमिति वाच्यम् प्रागभावस्योत्तरावधिनियमेन परिपालनस्य कर्तुमशक्यत्वात्। तदन्यस्य तत्र निषेध्यस्यास-

---

तदुत्तरयावत्समयसम्बन्धो बोध्यते येनानुपपत्तिः स्यात्। किन्तु तदा प्रवृत्तिविच्छेदेन तदुत्तरसमये प्रागभावावच्छिन्नमात्रं तच्च कालान्तरे तस्य प्रतियोगिजनकत्वेऽपि नाशक्यम् अन्यथा प्रायश्चित्तादौ दुःखप्रागभावसाध्यतानुपपत्तेरिति चेत्। न फलाभावस्यैव मूलबाधकत्वात्। संक्षिप्य प्रागुक्तं नित्यविध्यनुपपत्तिं विस्तरयन् शंकते नन्वहरहरिति। ननु "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति स्मृत्या विहिताकरणस्य पतनपदवाच्यप्रत्यवायसाधनताप्रतीतेस्तत्परिहार एव प्रागभावात्माऽस्तु फलमित्यत आह न तावदिति। फलाभावेन विधेः प्रथमं मूकत्वेन विहितत्वासिद्धौ विहिताकरणप्रयुक्तप्रत्यवाये मानाभाव इत्याह प्रागिति। विधिप्रवृत्तेरर्वागित्यर्थः। एवं च विधिप्रवृत्तौ विहितात्यकारणे प्रत्यवायप्रसङ्गस्तत्प्रवृत्तौ च तत्परिहाराय

म्भवादिति। ननु अहरहः सन्ध्यामुपासीतेत्यत्र कि-
मिष्टं यत्प्रतिसन्धानेन बोध्यम्। न तावत्प्रत्यवा-
यपरिहारः। प्रागप्रत्यवाये प्रमाणाभावात्। नापि
रात्रिकृतपापाभावः सर्वत्र तदभावात् नित्यत्व-

विधिप्रवृत्तिरित्यन्योन्याश्रय इति भावः। ननु यद्राज्या-
दिकृतपापध्वंस एव फलम्। न च तत्र पापे प्रमा-
णाभावः। रात्रिकृतदुरभिध्यानादेर्निषिद्धत्वादेव तत्प्र-
तीतेरित्याशंक्याह नापि रात्रीति। रात्रीत्युपल-
क्षणं दिनस्यापि। सर्वत्रेति। सर्वत्र कर्तृमात्र-
रात्रिकृतपापाभावात् न संध्यावन्दने तत्फलकत्व-
सम्भव इत्यर्थः। विधेर्विशेषप्रवृत्तत्वादिति भावः।
नित्यतेति। अभावफलकत्वेपि फलकामाधिकारतया
काम्यत्वापत्तेरित्यर्थः। भावफलकत्वस्य परिभाषामात्र-
त्वादिति भावः। संध्यावन्दनस्य मंत्रलिङ्गावगतरात्रि-
कृतपापाभावफलकत्वसम्भवेपि नित्यश्राद्धादौ तादृशलि-
ङ्गाभावेन तत्फलकत्वे मानाभाव इत्याह अहरहरिति
नित्यान्तर इत्यर्थः। अन्यथा विकल्पापत्तावनुष्ठितान्य-
तमेनापराननुष्ठानप्रसङ्गादिति भावः। ननु प्रत्यवायहे-
त्वनुपासनाभावरूपत्वेनोपासनमेव कृतेः फलं। न चा-
नुपासनस्य प्रत्यवायहेतुत्वाभ्युपगमे तदभावसाधनतयो-
पासनमेव विधीयतामिति वाच्यम्। तस्य प्रागभावरूप-
त्वेनासाध्यत्वादित्याशंक्याह नचानुपासनमिति। यत्रेते-

विरोधाच्च । अहरहः स्नायादित्यत्र तदभावात् । न चानुपासनं प्रत्यवायहेतुः तदभावश्चोपासनं साध्यमिति वाच्यम् । उपासनस्य फलत्वे साधनत्वेनान्वयानुपपत्तेः । न चोपासनं प्रयोजनं सम्भवति । तद्धि मुख्यं गौणम् वा ? नाद्यः सुखदुःखाभावयोरेव तथात्वात् । नेतरः प्रयोजनोपायस्यैव तथात्वात् । न चोपासनेन किञ्चित्प्रयोजनं जन्यते । यत्तु कैश्चिदुक्तम् न प्रत्यवायविरोध्येवापूर्वं संध्योपासनेन जन्यते । तच्च प्रत्यवायविरोधित्वेन काम्यं न त्वपूर्वत्वेनेति नापूर्वत्वक्षतिरिति । तत् पूर्वोक्तेनैव विकल्पेन दूषितम् । त

त्यादौ यागादेरिव संध्यामुपासीतेत्यादौ प्रकृत्यर्थस्योपासनस्येष्टसाधनताबोधो न तु कृतेः । न च तस्यैव फलत्वं साधनत्वं चेति युक्तं विरोधादित्याह उपासनस्येति । विकल्पानुपपत्तिबाधितमप्युपासनफलत्वमित्याह न चोपासनमिति । किञ्चित्प्रयोजनमिति । नित्यताभङ्गप्रसङ्गान्नैवेष्टविशेषाकांक्षोपशमे उपासने साधनताविरोधिफलत्वकल्पनावैयर्थ्यप्रसङ्गाच्चेति भावः। एकदेशिमतं दूषयितुमनुवदति यत्तु कैश्चिदिति । नन्वज्ञातेऽपूर्वे कामनानुपपत्तेर्ज्ञाते च प्रमाणान्तरपूर्व-

थाभूतेऽपूर्वे प्रमाणाभावात्। अन्वयानुपपत्त्या कल्पनमिति चेत् । अन्यथोपपत्तेर्वक्ष्यमाणत्वात्। तस्मान्नित्यस्थले काम्यादिष्टसाधनं विधिरिति मनोरथमात्रम् । मैवम् । यत्तावदुक्तं संध्योपासनं प्रयोजनं न सम्भवति । गौणमुख्यविकल्पगलितत्वात् । तदयुक्तम् । मुख्य एव प्रयोजनेऽन्तर्भावात् । समानाधिकरणेच्छाजन्येच्छाविषय-

---

त्वेनापूर्वत्वव्याघातान्न तत्काम्यमत आह तच्चेति । दुःखविरोधिन इव दुःखसाधनविरोधिनोऽपि काम्यत्वादित्यर्थः । नापूर्वत्वक्षतिरिति । न हि गुरुनय इवास्मन्मते सर्वथा प्रमाणान्तरागोचरत्वमपूर्वत्वम् अलौकिकप्रत्यासत्तिजप्रत्यक्षादिनापि तद्ग्रहणात्किन्त्वपूर्वत्वेनेति भावः । तत्पूर्वोक्ते नैवेति । गौणमुख्यत्वविकल्पेनेत्यर्थः । तथाभूत इति । प्रत्यवायविरोधिनीत्यर्थः । प्रत्यवाये प्रमाणाभावस्य दर्शितत्वादुपासनसाध्यप्रत्यवायप्रसक्त्यभावेनापूर्वे तद्विरोधित्वस्य सुतरामप्रामाणिकत्वात्कालान्तरीयफलाभावेन तत्स्वरूपस्याप्रामाणिकत्वादिति भावः । संध्याविध्यनुपपत्तिरेव तत्र मानमित्याशंक्याह अन्यथोपपत्तेरिति । उपासनफलकत्वेनोपपत्तेरित्यर्थः । उपसंहरति तस्मादिति । स्वरूपासिद्ध्या दूषयति मैवमिति । ननूक्तं सुखदुःखाभावेतर-

त्वस्य प्रयोजनाजनकप्रयोजनत्वस्य वा मुख्यप्रयोजनलक्षणत्वात् । एतदेव निरुपाधीच्छाविषयत्वमिति गीयते । न चैतल्लक्षणमुपासनेऽसिद्धम् । उपासनस्य दुःखहेतुत्वाभावत्वे काम्यत्वम् । न च दुःखहेत्वभावः किञ्चिदर्थानुकूलतया काम्यते किन्तु स्वरूपत एव सर्पकण्टकादिपरिहरणे तथावधारणात् । न चैवं मुख्यं द्विविधं सुखं दुःखाभावश्चेति विभागानुपपत्तिः दुःखाभाव

---

त्वान्न मुख्यप्रयोजनतेति तत्राह समानाधिकरणेति । तत्रेच्छाविषयत्वेनातिव्याप्तिनिरासाय अन्यत्वमन्त्येच्छाविशेषणं द्रष्टव्यम् । असम्भवनिरासाय समानाधिकरणेति । प्रयोजनेति । प्रयोजनत्वमिष्यमाणत्वम् तन्मात्रं गौणप्रयोजनेपीत्यतो अनकान्तम् । अभियुक्तविरोधशङ्कां निरस्यति एतदेवेति । ननूपासने द्वयमप्यसिद्धमित्याशंक्याह नचेति । विशेष्यभागं तावदुपासने वर्त्तयति दुःखहेत्वभावेनेति । अनुपासनस्य दुरितद्वारा दुःखहेतुत्वादिति भावः । काम्यत्वमिति । नचैवं कामिकार्यत्वे नित्यत्वविरोधः । प्रकृत्यर्थेतरकामनाया एव नित्यताविरोधित्वाभ्युपगमादिति भावः । विशेषणांशमुपपादयति नचेत्यादिना । ननु दुःखहेत्वभावस्य सुखदुःखाभावेतरत्वात्स्वरूपेण

इत्यत्र दुःखपदेनैकविंशतिप्रभेदभिन्नस्य विवक्षितत्वात्। यद्वा गौणमेवेदं प्रयोजनम्। ननु कथं गौणत्वं किञ्चित्प्रयोजनकं हि गौणं सम्भवति न चानेन किञ्चित्प्रयोजनं जन्यते। एतदपि न। साध्य-

काम्यत्वानुपपत्तिरित्याशंक्याह सर्पकंटकादिपरिहारे तयेति। स्वरूपत एव काम्यत्वावधारणादित्यर्थः। नन्वेवं मुख्यप्रयोजनविघात इत्यत आह नयेति। नन्वनुपासनस्य दुरितहेतुत्वमुपासनविध्यधीनज्ञानम् स चानुपासनगतदुरितसाधनतांशज्ञानाधीनप्रवृत्तिरित्यन्योन्याश्रय इति चेत्। एतदस्वरसादेवाह। यद्वेतीत्येके। तन्न अग्रिमपक्षेपि तदनुद्धारात्। अपरे तु न विधेः कर्त्तव्यत्वमवगम्य विहिताकरणेन प्रत्यवायकल्पनं येनान्योन्याश्रयः स्यात्किन्तु सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मस्वित्यादिनिन्दार्थवादेन प्रायश्चित्तोपदेशेन चेति। ननु सर्प्पकण्टकादिपरिहारे दुःखं मे मा भूदिति कामनयैव प्रवृत्तेर्दुःखानुत्पादनिश्चयेन तत्कामनाविरहिणो जाङ्गलिकस्याप्रवृत्तेश्च स्वस्वरूपेण काम्यत्वावधारणमसिद्धम्। कल्पितलक्षणानुसारेण अतश्चो मुख्यप्रयोजनत्वाभिधानेऽपि सुखं दुःखाभावं वानुद्दिश्यान्यत्र स्वतन्त्रप्रवृत्तेरभावाद्दुःखपदेनैकविंशतिभेददुःखविवक्षायां च सुखाभावोऽपि मुख्यप्रयोजनमित्यतिचित्रमित्यस्वरसादाह यद्वा गौणमेवेति। प्रयोजनाजनकत्वान्न गौण

ताज्ज्ञानजन्येच्छाविषयत्वस्यैव गौणलक्षणत्वात् । एतदसिद्धमिति चेत् न । यद्यपि स्वतो न संध्योपासनन्न किञ्चित्प्रयोजनं प्रति साधनन्तथाप्यनुपासनस्य प्रत्यवायप्रतियोगिकसाधनज्ञानजन्येच्छाविषयत्वम् तदभावत्वेन संध्योपासनस्य संभवत्येव सर्पापसर्पणस्य दुःखहेतुज्ञानजनितेच्छाविषयत्वं तदभावस्वरूपत्वेनापसर्पणस्येतिवत् एवं संध्योपासनस्य प्रयोजनत्वे व्यवस्थिते तद्भावनाया एवांशोपायत्वेनान्वयः । यद्वा लिङ्गपदेनोपस्थिता-

त्वमित्याक्षिपति ननु कथमिति । अप्रयोजकतया दूषयति एतदपीति । साधनताज्ञानेन जन्या या इच्छा तद्विषयत्वमित्यर्थः । नित्यत्वभङ्गप्रसङ्गं मनसि कृत्वाऽविदिताशयैः शङ्कते एतदिति । स्वाशयं विवृण्वन् परिहरति यद्यपीत्यादिना । साधनतायां स्ववृत्तित्वविशेषणं गौरवादतन्त्रमित्याशयेनाह अनुपासनस्येति । अनुपासनस्य या प्रत्यवायप्रतियोगिकसाधनता तज्ज्ञानजन्या या इच्छा तद्विषयत्वं संध्योपासनस्येत्यर्थः । अन्यस्य साधनताज्ञानादन्यत्र कथमिच्छेत्यत आह तदभावत्वेनेति । अनुपासनाभावरूपत्वेनेत्यर्थः । अनिष्टसाधनताज्ञानस्य तदभाव इच्छाजनकत्वस्वभावादिति भावः ।

पीष्टसाधनता इष्टाभावात् संध्योपासनेनानुमीय-
ते। न चैतावता इष्टसाधनताक्षतिः लिङ्गादेरिष्ट-
साधनतायामेव शक्तेरवधारणात्। नन्वेवं संध्यो-

तमेव स्वभावं दृष्टान्तेन दृढयति सर्पोपसर्पणस्येति। सर्पोपसर्पणस्य यद्दुःखहेतुत्वज्ञानं तज्जन्येच्छाविषयत्वमपसर्पणस्य यथेत्यर्थः। नन्वेवमप्युपासनस्येष्टत्वमुपपादितं नेष्टसाधनत्वमित्यत आह एवमिति। तद्भावनाया एवेति। एकप्रत्ययोपात्तत्वेनान्तरंगत्वा दुपासनरूपेष्टसाधनत्वसम्भवाच्चेति भावः। नन्वेवं यत्रेष्टसाधनतावगमस्तत्र न प्रवृत्तिः यत्र च यागप्रवृत्तिर्न तत्रेष्टसाधनतावगम इति साधुसमर्थितमिष्टसाधनताज्ञानस्य प्रवर्तकत्वमित्यस्वरसादाह यद्वेति। नन्वेवमिष्टसाधनता लिङर्थ इति गतमत आह नचेति। क्वचिदयोग्यतानन्वयेऽपि काम्यस्थले परिशेषावधारितायास्तच्छक्तेस्त्यागायोगादन्यथा द्वावानयेत्यत्र विभक्त्युपनीतसंख्याया अनन्वयात्तस्या अपि तदर्थकतात्यागप्रसङ्गादिति भावः। संध्योपासने प्रवृत्तिदर्शनात्तत्रेष्टसाधनतान्वयबोध आवश्यक इतीष्टान्तरमन्वेष्टव्यम्। तथा च स एव नित्यताविरोध इत्याशयेन शङ्कते नन्वेवमिति। वस्तुतो न तद्वैदिकं कर्म यत्र न फलमस्ति। तथाहि "दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमाहरन्नित्यादौ" विधावेव श्रूयते। क्वचिदर्थवादे यथा—

पासने कथं प्रवृत्तिरिष्टोपायताया अभावादिति चेत् । आपाततस्तावदेवम् उपासनस्य वेदबोधितत्वेन कर्त्तव्यतायामकुर्वन्विहितं कर्मेत्यादिवाक्यानुसन्धानात् उपासनस्य प्रत्यवायहेतुत्वेऽवगते तद्व्यतिरेकरूपस्य काम्यत्वमेवात्रधार्य तदुपाये प्रवर्त्तते न तूपासन एव । उपासनस्यायोग्य

---

संध्यामुपासते ये तु सततं संशितव्रताः ।

विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्॥ इति ।

संध्योपासनस्य यत्र नार्थवादोपि तत्र विश्वजिन्न्यायात्स्वर्गः कल्प्यते इष्टविशेषसाधनताज्ञानं विना विधेः प्रवर्तकताऽनिर्वाहात् । ननु प्रथमप्रवृत्तेतरनिरपेक्षाऽहरहःश्रुत्या तत्कालजीविमात्रस्याधिकारप्रतीतेस्तत्सापेक्षचरमप्रवृत्तार्थवादोपनीतफलकामनाधिकारः उपजीव्यविरोधादिति चेत् । न अहरहः श्रुतेरर्थवादाद्युपस्थापितं फलमनुपादाय प्रवर्तकताऽनिर्वाहेन सापेक्षत्वविशेषात् । नचैवं फलकामकार्यत्वे नित्यताविरोधः

संध्याहीनो शुचिर्नित्यमनर्हः सर्वकर्मसु ।

यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥

संध्या येन न विज्ञाता न च संध्या ह्युपासिता ।

जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ॥

त्वात् । प्रकरणादुपस्थापितोपासनोपायेनैव साधनतान्वय इति कश्चित् । नन्विष्टसाधनतापक्षेपीच्छाज्ञानं प्रवर्तकं स्यात् । इच्छाविषयतावच्छेदकप्रकारवत्प्रतियोगिसाधनताज्ञानं प्रवर्त्तकमित्यपि न समीचीनम् । अत्रापि विशेषणमुपलक्षणं वा ? आद्ये तज्ज्ञानस्यापि प्रवर्त्तकता-

इत्यादि निन्दाश्रवणान्नित्यतोपपत्तेः । इति परिहर्तारमभिसंहितं सूचयन्नेकदेशिनां परिहारमाह आपातत इति । एवं वक्ष्यमाणमुत्तरमित्यर्थः । कर्तव्यतायामिति । प्रतीतायामिति शेषः । तद्व्यतिरेकरूपस्येति । उपासनस्येति शेषः । तदुपाये जलादावित्यर्थः । नतूपासन इति । इष्टसाधनत्वावगमादिति भावः । अशाब्दस्यापि शब्दान्वयप्रतियोगितया भानमिति मन्वानानां मतमाह उपासनस्येति । अयोग्यत्वात् इष्टसाधनतान्वयायोग्यत्वात् । पक्षद्वयमप्येतदयुक्तमित्यापातत इत्यनेनैव सूचितम् । तथाहि कर्तव्यता तावत्कृतिसाध्येष्टसाधनता सा च संध्योपासने वेदेन बोध्यत इतीदानीमेवोक्तम् तथाच विहितत्वासिद्धावकुर्वन्विहितमित्यनेनापि कथमनुपासनस्य प्रत्यवायहेतुत्वावगमः । न च वैदिकपदप्रतिपाद्यतामात्रेण कर्तव्यतावगमसम्भव इति यद्यप्युपासनस्यायोग्यत्वादित्यादि तद्योगरूढिस्थले निराकृतमेवेतीष्ट-

पत्तिः । द्वितीयेऽनुगतस्यैकस्योपलक्ष्यस्याभावादननुगमापत्तिः । न चेच्छान्तर्भावेन शक्तिकल्पना युक्ता । इच्छाया स्वरूपसत्त्या एव प्रवर्त्तकत्वात् । न चेच्छामुपलक्षणीकृत्य स्वर्गोपायत्वादावेव विधिप्रत्ययस्य शक्तिः । अनेकार्थत्वप्रसङ्गात् । न च साधनमात्रं शक्यम् । तन्मात्रज्ञानस्याप्रवर्त्तकत्वात् सिद्धान्तव्या[illegible]पाच्च ।

साधनताविधिपक्षे नित्येपि गले पादिकया फलम[illegible]युपेयमिति । चिकीर्षाप्रतिबंद्या प्रवृत्तिविष्ठते नन्विष्टेति नन्विच्छाविषयतावच्छेदकसुखत्वादिमत्प्रतियोगिकसाधनताज्ञानमेवेष्टसाधनताज्ञानं विवक्षितमत आह इच्छाविषयतेति । तज्ज्ञानस्येति । अन्यथा विशेषणत्वानापत्तेरिति भावः । अनुगतस्येति । सुखदुःखाभावानुगतस्येत्यर्थः । ज्ञानस्य प्रवर्त्तकत्वं निराकृत्य ज्ञेयस्य विध्यर्थत्वमपि निराकरोति नचेच्छान्तर्भावेनेति । लिङादेरिति शेषः । शक्तेन हि न शक्यमुत्पाद्यमपि तु ज्ञानं न चेच्छाज्ञानं प्रवृत्तौ हेतुरित्याह इच्छाया इति । ननु तटस्थेनैवेष्टत्वेन परिचायिते स्वर्गोपायत्वादौ शक्तिरास्ताम[illegible] आह अनेकेति । शक्यतावच्छेदकना[illegible]त्वादिति भावः । अस्तु तर्हि साधनतामात्रमेव शक्यमत आह न चेति । प्रवर्तकज्ञानविषयो हि विधि[illegible]त्ययशक्यः न च साधनतामात्रम् तथा अनिष्टसाधनताज्ञानादपि प्रवृत्त्यापत्तेरित्याह तन्मात्रेति ।

मैवम् । साधनतामात्रमेव विधिप्रत्यय-शक्यम् । न चैतावता लकारान्तरसाम्यापत्तिः । विधिप्रत्ययस्येतरलकारसाधारण्येनाकूलयत्नोप-स्थापकत्वेऽप्यसाधारण्येन साधनताया उप-स्थापकत्वात् । स्वर्गसाधनतादिकं समभिव्याहारबललभ्यम् । इष्टसाधनता शक्येति पक्षेऽपि

---

अत्रैकदेशिमतेन परिहरमाह मैवं साधनतामा-त्रमित्यादिना । मात्रपदेनेष्टांशमात्रव्यवच्छेदो विव-क्षितो न कृतिसाध्यत्वादेरिति ध्येयम् । नन्वेवं ल-डादितुल्यशक्यतया लिङादेः प्रवर्त्तकतानुपपत्तिरत आह न चेति । धात्वर्थानुकूलकृताविष्टसाधनतान्वय इति मतेन परिहरति विधिप्रत्ययस्येति । इतरसाधा-रण्येन लिङ्त्वाद्याकारेण । साधनतायाः अन्या-नुपसर्जनीभूतसाधनतामात्रस्य अत एवाख्यातत्वलि-ङ्गाद्याकाराभ्यामुभयोपस्थितौ यागानुकूला कृतिः सा-धनमित्यन्वयः । अन्यथा स न स्यादिति भावः । व-स्तुतस्त्वाख्यातशक्यं यत्नमात्रं न तन्निष्ठमनुकूलत्वं यत्ने तु धात्वर्थस्य विषयत्वं स्वरूपसम्बन्धात्मकं संसर्गविधया भासते नानुकूलत्वं तेन न शङ्कापीति ध्येयम् । कथं तर्हि स्वर्गादिसाधनतालाभ इत्यत आह स्वर्गेति । स्व-र्गादिपदेन लिङः समभिव्याहारविशेषादित्यर्थः । ननु

विशेषलाभार्थं समभिव्याहारविशेषालम्बनेन प्रवर्तकत्वस्योपजीव्यत्वात्। इष्टसाधनता शक्येति व्यवहारस्तु वाक्याभिप्रायेणेति न सिद्धान्तव्याकोपोऽपि। किन्तु यद्यपि फलेच्छा स्वरूपसत्येव प्रवर्त्तिका तथापि इष्टत्वे लिङादीनां शक्तिरङ्गीकार्या अन्यथा स्वर्गोपायतादेरलाभात्। न च समभिव्याहारबलेन स्वर्गसाधनतालाभः। समभिव्याहारादपि तदेवान्वेति यद्विनाऽन्वयापर्य-

ततो वरं शक्तिरेव तदनुसरणवैयर्थ्याभावादत आह इष्टसाधनेति। समभिव्याहारविशेषेति। अन्यलभ्यत्वालम्बनप्रवृत्तस्य लाघवाख्यतर्कस्येत्यर्थः। एवं च शक्तिग्राहकं मानं यथा न स्वर्गसाधनतायां तां ग्राहयति तथेष्टसाधनतायामपि किन्तु लाघवात्साधनतायामेवेति भावः। सिद्धान्तव्याकोपं परिहरति इष्टसाधनतेति। एवमेकदेशिना परं निराकृत्येदानीं तमपि निराकरोति किञ्चेति। नेच्छाज्ञानस्य प्रवर्तकतया तज्जननापेक्षायां लिङादेः शक्तिरिष्यते। किन्तु स्वर्गाद्यर्थिप्रवर्त्तकस्वर्गोपायतादिबोधायैव तयैव च स्वरूपसत्या फलानामनुगतीकरणान्न लिङो नानार्थतापि। अन्यथा फलविशेषसाधनताननुगमात् न शक्या न वा लभ्येत्यसति तद्बोधे प्रवृत्तिर्विरुद्ध्येतेति भावः। कुत इत्यत

वसानम् । न हि स्वर्गकामो यजेतेत्यत्र स्वर्गेण समं साधनतान्वये तदपर्यवसानम् । साधनतासामान्यं हि साध्यसामान्यान्वयमादाय पर्यवस्यति । तथा च याग एव साधनत्वेनान्वेतु न तु लब्धपुरुषान्वयो निराकांक्षः स्वर्ग । पचतीत्यत्र पाक इव यागोऽपि लब्धान्वय इति चेत् । एवं तुल्यत्वेऽपि संनि तया तथात्वमस्तु । इष्टोपायताविधित्वं तु यदिच्छाविषयत्वेनोपस्थितं तदेवान्वययोग्यमतस्तदभिधानमेव

आह अन्वयेति । ननूक्तसमभिव्याहारात्तल्लाभ इत्यत आह न चेति । यद्विनेति । समभिव्याहारमात्रस्यातिप्रसंगित्वादिति भावः । ननु स्वर्गेणापि विनाऽन्वयापर्यवसानमेवेत्यत आह नहीति । याग एवेति । साकांक्षत्वादिति शेषः । स्वर्गस्य निराकांक्षत्वे हेतुमाह लब्धपुरुषान्वय इति । तदिच्छाविषयतया तदन्वितत्वेनोपस्थित इत्यर्थः । ननु पचतीत्यादौ यथाक्षिप्तकर्त्रादिना पाकादिर्लब्धान्वयस्तथा यागोपीत्यविशेषात्सोपि नान्वीयेतेति प्रतिबंद्या प्रत्यवतिष्ठते पचतीति । लब्धान्वयत्वेनोभयोरविशेषेऽपि समानपदोपात्तत्वेनान्तरङ्गतया विशेषाद्याग एवान्वेति न स्वर्गोऽसंनिहितत्वादिति परिहरति एवमिति । नन्विष्टो-

युक्तम् । अत एव विश्वजिता यजेतेत्यत्र तावन्नान्वयो यावन्नेष्टत्वेन स्वर्गोपस्थितिः ।

कश्चित्पुनराह । इष्टसाधनत्वमित्यत्र निरुपधीच्छाविषयत्वमात्रमिष्टत्वम् । न पुन-

पायताविधित्वेपि कथं स्वर्गस्य साध्यत्वेनान्वयः तदिष्टसाधनताया अनभिधानादित्यत आह इष्टोपायतेति । तदभिधानं इष्टोपायताभिधानम् । ननु विश्वजिता यजेतेत्यत्रेष्टमनादायापि लिङा साधनबोधान्नेष्टसाधताविधिरित्यत आह । अतएवेति । अत एवेष्टसाधनताविधिरित्यर्थः । सामान्येन प्रतीत एव विशेषे जिज्ञासोदयेन तत्कल्पनाया अवतारसंभवादिति भावः । वयं तु ब्रूमः । तथा सत्ययमेति पुरुषो राज्ञः पुरुषोऽपसार्यतामित्यत्रैकेन विनाप्यन्वयपर्यवसानसम्भवान्नैकेनाप्यन्वयबोधः स्यादिति तात्पर्यविषयत्वमन्वयविशेषणमावश्यकम् अस्ति चेह स्वर्गेण विना तात्पर्यविषयान्वयापर्यवसानम् । तथाहि प्रयोजकवृद्धोदीरितविधिवाक्यश्रवणानन्तरभाविन्या प्रयोज्यवृद्धप्रवृत्त्याऽनुमिते तदीयस्वरूपसदिच्छाविषयसाधनताज्ञाने यावन्न लिङादीनां जनकत्वमवधार्य्यते तावदिष्टसाधनत्वेपि शक्तिमत् । अवधारिते तु तस्मिन्कुतो यागस्य साध्यत्वेन साधनान्वयशङ्कापि तस्य स्वर्गसाधनतानवगमदशा-

रिच्छाविषयत्वमात्रम् । तथाच स्वर्गेणैवान्वयो न तु यागेनेति ।

तन्न तथात्वेप्यग्निकामो दारुणि मथ्नीयादित्यत्र साध्यत्वेनाग्नेरन्वयो न स्यात् । तस्माद्बलवदनिष्टाननुबंधिसाध्येष्टसाधनत्वमेव निष्फलानिष्टफलाभ्यां व्यावर्त्तमानं विधि-

यामिष्टत्वाभावेन तत्साधनताज्ञानस्याप्रवर्तकत्वात् । कृतिसाध्यो यागः साधनमित्यत्र कृतिरूपसाधनाविरुद्धतयोपस्थितस्य यागस्य साधनसाध्यतान्वये निराकांक्षत्वाच्च । यत्तु प्रवर्त्तकत्वतात्पर्यग्रहात्तदन्यथानुपपत्त्येष्टान्वयलाभे इष्टसाधनत्वमेवान्यथानुपपत्त्या लभ्यतां कृतं साधनत्वांशेपि शक्तिकल्पनयेति । तन्न । साधनत्वस्य पदानुपस्थितौ स्वर्गेण तदन्वयस्य शाब्दबोधानुपपत्तेः । तत्साधनतामात्रं विधिरित्येवयुक्तमिति ।

स्वर्गेणैवेति । तस्यैव मुख्यत्वेन निरुपाधीच्छाविषयत्वादिति भावः ।

तन्नेति । यत एवं सतीति शेषः । निःफलानिष्टफलाभ्यामिति । स्वकृत्यसाध्यत्वाच्चेति शेषः । अत्र ब्रूमः । बलवदनिष्टाननुबन्धित्वज्ञानं यथा न प्रवर्त्तकं तथोक्तमेव । कृतिसाध्यताज्ञानमपि न प्रवर्तकं मानाभावात् । न च कृत्यसाध्यताज्ञानेपि प्रवृत्त्यापत्तिः तस्यैव प्रतिबन्धकत्वात् । न च जनकीभूतज्ञानाविघटकत्वे प्र-

तिबन्धकत्वनियमः । गौरवज्ञानस्य द्विकर्तृत्वाद्यनुमिति- प्रतिबन्धकत्वे विरोध्यविषयकत्वेपि विघटनाय द्वाराभावेन व्यभिचारात् । न च यज्जातीयं ज्ञानं सर्वत्र यज्जातीये प्रतिबन्धकमिति विवक्षितं गौरवज्ञानं च न सर्वत्र गुर्वर्थज्ञानजातीये प्रतिबन्धकमतो न दोषः अत एव सिद्धसाधनेपि न व्यभिचारः सिसाधयिषास्थले तत्सत्त्वेप्यनुमित्युदयादिति वाच्यम् । तथात्वप्रयोजकत्वात् । एतेन कृतिसाध्यत्वव्यतिरेकज्ञानस्य प्रतिबन्धकतया यत्संशयव्यतिरेकनिश्चयावित्यादिव्याप्तिबलेन कृतिसाध्यताज्ञानस्य कारणताकल्पनमपास्तम् । न चैवमनिष्टसाधनताज्ञानाभाव एव कारणमितीष्टसाधनताज्ञानमपि न हेतुः स्यादिति वाच्यम् । अनन्यथासिद्धान्वयव्यतिरेकाभ्यामिष्टसाधनताज्ञानस्य हेतुत्वकल्पनात् । अपि च वृद्धस्य तरुणावस्थस्वकृतिसाध्यतास्मरणात्कुतो न धनुराकर्षणे प्रवृत्तिः । स्वकृत्यसाध्यताज्ञानेन प्रतिबन्धादिति चेत् । न विघटनीयत्वाभिमतस्य स्वकृत्यसाध्यताज्ञानस्याविद्यमानत्वात् । तदातनस्वकृतिसाध्यताज्ञानमेव हेतुरिति चेन्न । अननुगमप्रसङ्गात् । अस्तुवा प्रवृत्तिविशेषेणानुगतमेव तद्धेतुः । तथापि कृतिसाध्यत्वस्य विध्यर्थत्वे मानाभावः । न हि यावज्ज्ञानं प्रवृत्तिहेतुस्तत्सर्वं विधिशक्यम् । उपादानप्रत्यक्षस्यापि तद्धेतुत्वात् । उपादानस्य चाविध्यर्थत्वात् । शाब्दं यज्ज्ञानं प्रवर्तकमिति चासं-

प्रतिपत्तिपराहतम् । किञ्चैवं राजा राजसूयेन यजेतेत्यस्य राजसूययागो राज्ञः कृतिसाध्यत्वे सति बलवदनिनिष्टाननुबन्धीष्टसाधनमित्यर्थकत्वात्तदेव शक्तं प्रति प्रमाणमप्रमाणं चान्यं प्रतीतिविरुद्धमापद्येत । अपि च स्वपरोदासीनकृतिसाध्यमात्रस्य प्रवृत्त्यनुपयोगितया तद्बोधनमनर्थकम् । प्रवृत्त्यनुपयोगिनश्च स्वकृतिसाध्यत्वस्याशक्यत्वेन तद्बोधनमशक्यमितीष्टसाधनतामात्रमेव विधिरिति । अवश्यं चैतदभ्युपगन्तव्यम् अन्यान्वयानुपपत्तेः । तथाहि लिङ्त्वाकारोपस्थापिता कृतिसाध्यता किं धात्वर्थेनान्वेति यागः कृतिसाध्य इति उत लत्वाकारोपस्थापितया धात्वर्थगोचरया कृत्या यागकृतिः कृतिसाध्येष्टसाधनमिति? नाद्यः । लत्वाकारोपस्थितकृतेरनन्वयापत्तेः न च लिङ्त्वाकारोपस्थितकृतिसाध्यतान्तर्गतकृत्या भेदेनान्वयः । शक्यैकदेशत्वेन तस्या अपदार्थत्वात् । अन्वयेपि वा कृतिसाध्यत्वान्तर्गतकृत्यभेदान्वयप्रतियोगितत्वाकारोपस्थापितकृतौ यागस्य विषयत्वेनान्वयस्य व्युत्पन्नत्वाद्यागगोचरकृतिसाध्य इत्यन्वयबोधप्रसङ्गात् । न द्वितीयः । कृतौ कृतिसाध्यत्वासम्भवेन बाधप्रसङ्गात् । अथोच्यते उपस्थितापि कृतिरयोग्यत्वान्न कृतिसाध्यत्वेनान्वेति किन्तु याग एवेति । तन्न । लिङः क्वचिदपि द्वितीयकृत्यनुपस्थितौ तथाकल्पने मानाभावात् बहुवक्तव्यश्चायमर्थ

रित्येव युक्तम् । श्येनेनाऽभिचरन्यजेतेत्यत्र प्रायश्चित्ताधलेन बलवदनिष्टाननुबन्धानुसन्धानान्न तदन्तर्भावेन विधिरिति चेत् । न । तत्र योग्यतया साध्येष्टोपायत्वस्यैवान्वयात् । अपि च विहितम्लेच्छजनपदाभिचारमुद्दिश्य वेदे श्येनयागाभिधानं युक्तम् अन्यथा वेदप्रणेतुराप्तत्वम् भज्येत। अत एव समस्तस्यैव विधेरन्वयो योग्यः । लोभादिवशादविहितब्राह्मणाऽभिचारमुद्दिश्यानुष्ठिते श्येने प्रायश्चित्तविधेरपि साफल्यमिति किमधिकेन । नन्वेवं जीवनयोनिप्रयत्नसाध्येऽपीष्टोपाये प्राणादिपञ्चकेऽपि किमिति न प्रवर्त्तते । मैवम्

---

इत्युपरम्यते । बलवदनिष्टाननुबन्धित्वविशेषणांशे व्यभिचारं शङ्कते श्येनेनेति । विशिष्टस्य शक्यत्वेऽपि लक्षणया त्रिषु शक्तित्रयस्वीकारे तन्मात्रशक्तिभ्यां वा कृतिसाध्येष्टोपायत्वयोरुपस्थितौ न विरोध इति परिहरति तत्र योग्यतयेति । बलवदनिष्टाननुबन्धित्वस्य शक्यतानिराकरणान्न किञ्चिदेतदिति तत्त्वम् । एकदेशिनां परिहारमाह अपिचेत्यादिना । अन्यथेति । श्येनस्यानिष्टजनकत्वे दुःखहेतुकर्मोपदेष्टृत्वेनेति भावः । अत एवेति । म्लेच्छाद्यभिचारस्य बलवदनिष्टाननुबन्धित्वादेवेत्यर्थः । कथं तर्हि प्रायश्चित्तोपदेश इत्यत आह

प्राणादिपञ्चकक्रियायाः कृत्यसाध्यत्वात् । जीवनयोनिप्रयत्नसाध्या हि सा न चासौ कृतिः । चिकीर्षायोनिप्रयत्नस्यात्र कृतित्वेनाभिमतत्वात् । अन्यथेष्टसाधनतालिङ्गककार्यतानुमानात्तत्रापि तत्र प्रवृत्तिप्रसङ्गः समान इति स्थूलः प्रमादः । किन्तु कृतिसाध्येष्टसाधनताज्ञानं चेद्भवति एतावता प्रवर्त्तत एवेति नेष्यते । अपि त्वेतावतैव प्रवर्त्तते यत्र त्वन्यथासिद्ध्यादिकं प्रतिबन्धकं तत्राप्रवृत्तावपि न कारणताक्षतिरिति किं वारंवारं मर्मोद्घाटनेन । यत्तु कैश्चिदुक्तम् । फलेच्छा ज्ञातैवोपयुज्यते । तदहृदयवचनमित्युपेक्षणीयमेव । तथात्वे प्रमाणाभावादित्यास्तां विस्तरः ॥

इति विधिप्रकरणम् ।

लोभादीति । व्यभिचारान्नेष्टसाधनं प्रवर्त्तकमिति शङ्कते नन्वेवमिति । इष्टोपाये जीवनरूपेष्टोपाय इत्यर्थः । विकल्पानुपपत्त्या दूषयति मैवं प्राणादीति । प्रमाणाभावादिति । अन्योन्याश्रयप्रसङ्गाच्चेति द्रष्टव्यम् । कृतिरिति । चिकीर्षाजन्यः प्रयत्न इत्यर्थः । इष्टापत्तिं स्पष्टयति भवति हीति । तत्किं विनैव यत्नं तत्क्रिया जायत इत्यत आह जीवनयोनीति । ननु सोऽपि कृतिरेव कृतियत्नपदयोः पर्यायत्वादित्यत आह न चासाविति ।

इति श्रीसकलसामन्त० विधिप्रकरणम् ॥

ननु स्वर्गोपायत्वेन कार्यत्वेन वा रूपेण क्रियया अन्वय इति न युक्तम् । तत्र नियोज्यकर्त्तव्यत्वावगमाभावात् । कामी हि काम्यादन्यत्काम्याव्यवहितसाधनमेव कर्त्तव्यतयावैति । न च सस्यार्थिनः कर्षकस्य व्यवहितोपाये कर्षणे प्रवृत्तिदर्शनान्नायं नियम इति वाच्यम् । तत्रापि हि व्यापारपरम्परामन्तर्भाव्यैवावगमो नान्यथेति ।

---

उपोद्घातसङ्गत्या अपूर्वं साधयिष्यन् पूर्वपक्षयति नन्विति । अयुक्तत्वे हेतुमाह तत्रेति । नियोज्यस्य प्रवर्त्यस्य कर्तव्यत्वेन तज्ज्ञानासम्भवादित्यर्थः । कथमेतदित्यत आह कामीति । काम्ये व्यभिचारवारणायाह काम्यादन्यदिति । काम्यस्य कामनाविषयस्य यदव्यवहितसाधनं तदेव कर्तव्यतया जानातीत्यर्थः । यागश्च न स्वर्गे तथा तस्य चिरभावित्वाद्यागस्य चाचिरनाशित्वादिति भावः । ननु सस्यकामस्य व्यवहितेपि तत्साधने कर्षणे प्रवृत्तिदर्शनान्नैष नियम इत्यत आह नचेति । कर्षणेप्यवान्तरव्यापारमन्तर्भाव्यैव कर्षकस्य तथात्वावगमो न तमनन्तर्भाव्येति । तथात्वे नियमाभावे प्रमाणाभावादित्यर्थः । सस्याव्यवहितसाधनं कर्षणजन्यमतिशयविशेषं प्रथमं कर्त्तव्यतयावगत्य पश्चात्काम्ये तदतिशयाव्यवहितसाधनं

तथात्वे मानाभावात्(१)। साक्षात्साधनतारूपविशेषबाधे परम्परामादायैव सामान्यप्रत्ययाच्च अत एव छिद्रघटबाधे छिद्रेतरत्वेन रूपेण घटेन जलमानयेत्यादौ घटप्रतिपत्तिः। ननु विधिप्रत्ययस्यापूर्वे केन रूपेण शक्तिः किं कार्यत्वेन वा क्रियातिरिक्तकार्यत्वेन वा स्थिरकार्यत्वेन वा अपूर्वत्वेन वा अन्यथा वा ? नाद्यः। क्रियासाधारण्याच्छक्याशक्यसाधारणस्य शक्य-

---

कर्षणं कर्त्तव्यतयावगत्य तत्र प्रवर्तते। न च यागे तथा सम्भवति व्यापारोपस्थापकाभावादिति भावः। असिद्ध्या प्राभाकरः परिहरति नेति। अत एवेति। यागे विध्यनन्वयप्रसङ्गादेवेत्यर्थः। एवं च लिङुपस्थापितापूर्वलक्षणव्यापारमन्तर्भाव्य यागे नियोज्यकर्तव्यतावगमसम्भवान्न तत्र कार्यत्वान्वयानुपपत्तिप्रसङ्ग इति भावः। अनन्यलभ्यः शब्दार्थ इति विरोधं नैयायिकः शङ्कते नन्विति। नौचितीति। गौरवादिति भावः। असिद्ध्या दूषयति नेति। अयोग्यतेति। निरन्वयध्वस्ते कालान्तरभाविकार्यजनकत्वस्य क्वाप्यदर्शनादिति भावः। ननु साक्षात्साधनतारूपविशेषबाधेपि सामान्याबाधात्तेन रूपेण यागसाधनतावगमात्साधनतानुपपत्तेः

---

(१) अत्र मूलपाठो भ्रष्ट इति भाति टीकादर्शनात्।

त्वेऽनवच्छेदकत्वात् । अन्यथा प्रमेयत्वेनैव सर्वत्र शक्तिः स्यात् । नेतरः घटादिसाधारण्यात् । नापरः तत्त्वादेव । नोपांत्यः पूर्वमनुपस्थितेः । उपस्थितावपूर्वत्वव्याघाताच्च । न चरमः । अनिर्वचनात् । मैवम् । स्थिरकार्यत्वमेव चोपलक्षणीकृत्यापूर्वं प्रवर्त्तमानं लिङ्पदन्तर्कसम्पादनयाऽपूर्वमवगम-

---

कल्प्यमेवापूर्वं न लिङादेस्तत्र शक्तिरित्यत आह-साक्षादिति । एवंच परंपराघटकानुपस्थितौ प्रतीत्यनुपपत्तेः शाब्दमेवापूर्वं न कल्प्यमिति भावः । स्वोक्तेऽनुभवं प्रमाणयति अतएवेति । यत एवैषा व्युत्पत्तिस्तत एव सार्वलौकिकीयं प्रतीतिरित्यर्थः । द्वारबाधेन बाधं नैयायिकः शंकते नन्विति । तादृशस्यैव लिङादिशक्यतावच्छेदकत्वे को दोष इत्यत आह अन्यथेति । विनिगमकाभावादिति भावः । घटादीति । अपूर्ववदिति भावः । तत्त्वादेवेति । घटादिसाधारण्यादेवेत्यर्थः । पूर्वमिति । शक्तिग्रहात्प्रागित्यर्थः । वाक्यैकसमधिगम्यत्वादिति भावः । अस्तु तर्हि मानान्तरोपस्थिते तत्र शक्तिग्रह इत्यत आह उपस्थितावपूर्वत्वेति । अपसिद्धान्तापात इत्यर्थः । अनिर्वचनेति । भविष्यति कश्चित्तादृशो धर्म इत्युक्तेप्यप्रतीकारादिति भावः । असिद्ध्यापत्तिं हरति मैवमिति । पूर्वत्र

यति। न चैवं नित्यनिषेधापूर्वयोरलाभप्रसङ्गो दोषः। एकत्र निर्णीतेऽन्यत्रापि तथा कल्पनात्। नचैवं पुष्टिकामो घृतं पिबेदित्यादावपूर्वावगमप्रसङ्गः। वैदिकलिङ्गेन नियमात्। यद्वा लोके क्रियास्वतद्व्यापारस्य धातुसाम्याद्वैव वा लिङर्थत्वात्। न च नानार्थत्वापत्तिः लोके लक्षणयैवोपपत्तेरिति।

अत्रोच्यते। साधनत्वस्य क्रियायामन्व-

गौरवादाह। कार्यत्वमेवेति। स्थायित्वं योग्यताबलाल्लभ्येतेति भावः। उपलक्षणीकृत्येति। शक्तावनन्तभूतमेव शक्त्यवच्छेदकीकृत्येत्यर्थः। तथात्वस्यादिकप्रवृत्तावपि ? वासस्वी देवदत्त इत्यादिबहुशो दर्शनादिति भावः। ननु तथापि प्रवरक्रियाद्यतिरिक्ततल्लाभः कथमित्यत आह तर्केति। तद्यदि क्रियादिव्यतिरिक्तं न स्यात्तदा स्वर्गजनकं न स्यादित्यादितर्कसाहित्येनापूर्वमनुभावयतीत्यर्थः। तर्हि नित्यनिषेधस्थले फलाश्रयणात्प्रतीत्यनुपपत्तेरभावान्नापूर्वे लिङादेः शक्तिः सिद्ध्येदित्यत आह नचेति। एकत्रेति। लाघवादित्यर्थः। न च प्रयोजनबाधाद्बाधः स्वत एवापूर्वस्यानन्यप्रयोजनत्वाच्छब्दानुरोधित्वात्कल्पनाया इति भा-

ययोग्यतया व्यापारे शक्तिरित्यभिमतं परस्य । एतच्चानुपपन्नम् । तथाहि का सा योग्यता या क्रियायां नास्ति । न तावत्सजातीयेऽन्वयदर्शनम् । केन रूपेण साजात्यमभिमतमायुष्मताम् । न तावद्येन केनापि वह्निना सिञ्चेदित्यादावपि योग्यतापत्तेः । न च पदार्थतावच्छेदकरूपेण साजात्यम् । आद्यजाते गौः पयः पिबतीत्यादौ तदभावात् । नान्यथा काचिद्योग्यता । अशक्यनिर्वचनत्वात् । तस्माद्बाधकप्रमाणविरह एव योग्यता सा चात्र साधनत्वेन प्रकारेण विद्यत एव । न हि साधनत्वेन रूपेणान्वयानिश्चयः केनापि

---

वः । न्यायतौल्याल्लौकिकलिङादेरप्यपूर्वे शक्तिप्रसङ्ग इत्यत आह नचेति । ननु ये लौकिकास्त एव वैदिका इत्याह यद्वेति । क्रियामात्रस्येति । क्रियास्वरूपस्येत्यर्थः । ननु न घृतपानाव्यवहितोत्तरकाल एव पुष्ट्यादिरित्यत आह तद्व्यापारस्येति । धातुसाम्यादिरूपस्य तद्व्यापारस्येत्यर्थः । तर्हि लिङादेर्नानार्थता स्यात्, न चेष्टापत्तिः, अन्यायश्चानेकार्थत्वमिति न्यायविरोधादित्यत आह न चेति । लक्षणयैवेत्यर्थः । अतो न गौरवादीति भावः ।

प्रमाणेन बाध्यते । न च नियमतो व्यापारपरंपरामादायैवान्वयबोधः । प्रमाणाभावात् । न च साक्षात्साधनताबाधे परंपरा साधनता प्रतीयत इत्येतावतैव क्रियाव्यापारे शक्तिरिति युक्तम् छिद्रेतरत्वेपि शक्तिकल्पनापत्तेः । न ह्यत्र नियमत

अपूर्वमादायापि यागे स्वर्गसाधनताप्रतीतिसम्भवान्न तत्र शब्दशक्तिः कल्प्यते गौरवादित्यभिप्रेत्य सिद्धान्तयिष्यन्नाह अत्रेति । अयोग्यताबाधमुद्दिधीर्षुरर्थतोनुवदति साधनेति । अभिद्रूष्योद्धरति एतच्चेति । उपपादयति तथाहीति । ननु सजातीये दर्शनं सेत्यत आह न तावदिति । विकल्पासहं साजात्यमिति मनसि कृत्य पृच्छति केनेति । नन्वस्तु केनापि तदित्यत आह न तावदिति । वह्निनेति । द्रव्यत्वजात्या सजातीये जले सेककरणत्वदर्शनादिति भावः । नन्वन्वयप्रतियोगितावच्छेदकेन धर्मेण साधर्म्यमिह साजात्यार्थ इति नोक्तातिव्याप्तिप्रसङ्गः, न ह्यग्नौ द्रवत्वं तद्वति सेककरणत्वस्य दर्शनादित्यत आह नचेति । आद्येति । अदृष्टाद्यभातान्तरपयःपानस्यापि तत्रान्वयबोधे दर्शनादित्यर्थः । अशक्येति । अशक्यनिर्वचनत्वादित्यर्थः । तदेवं परिशेषसिद्धां योग्यतामुपसंहरति

परम्परासाधनताप्रतीतिः । साक्षात्साधनताबाधाप्रतिसन्धानदशायां चरणप्रचारणस्याप्यशक्यत्वात् । किञ्च साक्षात्साधनताबाधेऽपि न कारणतामात्रान्वयबाधः । कारणत्वं हि सामान्यम् ।

तस्मादिति । ननु सापि यागे बाधितेत्यत आह-साचेति । साधनत्वेनेति । साक्षात्परम्परोदासीनसाधनत्वेनेत्यर्थः । उपपादयति नहीति । केनापीति । प्रत्यक्षविषयत्वाच्छब्दस्यानुपलम्भात् । अत एवानुमानासम्भवाच्चेति भावः । ननु व्यापारद्वारा यत्कारणं तत्र व्यापारपरम्परामादायैव कारणेनान्वयनियमान्न उदासीने तदन्वयः सम्भवतीत्यत आह नचेति । अभावादिति । योग्यानुपलंभबाधादिति भावः । साक्षात्साधनताबाधे परम्पराप्रतीतेस्तत्र शक्तिरित्यप्रयोजकत्वेन दूषयति नचेति । छिद्रेतरेति । घटेन जलमाहरेत्यत्र नियमतस्तत्प्रतीतेरिति भावः । स्वरूपासिद्ध्या दूषयति नचेति । परम्परामनादायापि वेदाद्यागे स्वर्गसाधनतावगमादिति भावः । नन्वसिद्धमिदमित्यत आह साक्षादिति । तत्प्रतिसन्धाननैयत्ये मानाभावादिति भावः । चरणप्रचरणस्यापातप्रतीतिकलहस्यापीत्यर्थः । ननु साध्यसाधनस्वाभाव्यात्साक्षात्साधनताबाधप्रतिसन्धानमावश्यकमित्यत आह किञ्चेति । दृष्टान्तेनोपपा-

तत्र च साक्षात्त्वपरम्परात्वे विशेषणे तथा च विशेषणे बाधात्तस्यान्वयो मा भवतु सामान्यान्वयस्तु केन वारणीयः दण्डबाधे पुरुषान्वयवत्। एवञ्च छिद्रबाधे छिद्रान्वयो मा भवतु घटत्वेनान्वयस्तु तत्राप्यविरुद्ध एव घटत्वस्य छिद्रसाधारण्यादनुपपत्तिरिति चेत्। न तथापि योग्यतया छिद्रेतरत्वस्यैवान्वयन्न तु छिद्रेतरत्वेन घटत्वस्य युगपद्वृत्तिद्वयविरोधात्। नचोपलक्षणेन शक्तिग्रह उपलक्ष्यस्याभावात्। न चापूर्वत्वमेवोपलक्ष्यम् उपलक्षणेन समं तस्य सम्बन्धाप्रतिसन्धानात्। प्रतिसन्धाने वाऽपूर्वत्वक्षतेः।

दयति दण्डेति। दार्ष्टान्तिकम् दूषयित्वा दृष्टान्तं दूषयति एवमिति। नेति। छिद्रेतरेति। वस्तुगत्या छिद्रेतरस्येत्यर्थः। युगपदिति। सामग्रीभेदाच्छक्तिलक्षणाभ्यामेकपदेनान्वयबोधजननादेरसम्भवादिति भावः। कार्यत्वोपलक्षणत्वपक्षं दूषयति नचेति। उपलक्ष्येति। वाग्मी देवदत्त इत्यादौ व्यक्तिविशेषादिवच्छक्यतावच्छेदकस्य धर्मस्यानुगतस्यापूर्वेऽभावादित्यर्थः। नन्वपूर्वत्वमेवोपलक्ष्यमनुगतमस्तीत्यत आह न चेति। सम्बन्धेति। अन्यथातिप्रसङ्गादिति भावः। अस्तु तर्हि तत्प्रतिसन्धानमित्यत आह तत्प्रतिसन्धानेति। सम्बन्धिज्ञानाधीनज्ञानत्वात्सम्बन्धस्येति भावः। अस्तु तर्हि

न च कार्यत्वेनैव रूपेण लिङादेः शक्तिरन्यत्र प्रयोगवारणार्थं पङ्कजपदे पद्मत्ववदपूर्वत्वम् प्रयोगोपाधिरिति वाच्यम् । अप्रतीतस्य प्रयोगोपाधित्वासम्भवात् । प्रयोगोपाधित्वस्यापि योगरूढिस्थले निरस्तत्वात् । न चैकत्र निर्णीतेन शास्त्रार्थेन नित्यनिषेधापूर्वयोर्लाभः लोके क्रियायामेव शक्तेः । न च तत्र लक्षणा । प्रमाणाभा-

विशेषणमेव कार्यत्वं घटादिप्रयोगवारणायापूर्वत्वस्य सोपाधिकत्वमस्तु कुमुदादिप्रयोगवारणाय पद्मत्वस्येव पंकज इत्यत आह न चेति । अप्रतीतप्रयोगोपाधिनाऽनवच्छिन्ने प्रयोगं नियमयेत्तज्ञ ज्ञाते तस्मिन्संभवति अन्यथा गृहीतावयवशक्तेरगृहीतपद्मत्वस्यापि कुमुदे पङ्कजपदप्रयोगो न स्याज्ज्ञाज्ञातयाऽपि शक्त्या प्रयोगनियमनमविशेषादिति भावः । निरस्तत्वादिति । धर्ममात्रशक्युच्छेदप्रसङ्गेनेत्यर्थः । लाघवान्नित्यनिषेधस्थलेऽपि लिङादेरपूर्वे शक्तिः सिद्ध्यतीति नचेति दूषयति नचेति । लोके क्रियायामेवेति । एवञ्चोभयप्रसक्तौ फलाभावज्ञापनमध्रीचीनमेव शक्तिकल्पके न तत्र क्रियामात्र एव शक्तिः कल्प्यते प्रत्युत काम्यस्थलीयलिङादेरपि नाऽपूर्वे शक्तिः सिद्ध्येदेकत्र निपातन्यायविरोधादिति भावः । ननु लौकिकी लिङ्लाक्षणिकीत्यत आह नचेति । प्रमाणेति । मुख्यबाधादित्यर्थः ।

वात् । वैपरीत्यस्यापि सुवचत्वात् । अन्यथोपपत्तेर्दर्शितत्वाच्च । ब्रह्महत्यादिक्रियायाः नरकविशेषसाधनत्वग्रहोऽप्येवं न स्यात् । तत्र च परेण दुरदृष्टस्य कल्प्यत्वाभ्युपगमात् । अनुभवस्य स्मरणम् प्रति द्वाराग्रहे कथङ्कारणता निश्चीयते । तत्रापि परोक्तदूषणगणस्यावकाशात् । तत्र द्वाराग्रहेपि साधनताग्रहे किमपराद्धं यागादिसाधनतया । तस्मादपूर्वं वाच्यताभिमानः परस्येत्युपग

वैपरीत्येति । प्रमाणाभावेपि लक्षणाभिधाने वेदेपि तदभिधाने न कोपि वारयिता भवेदिति भावः । नन्वन्यथानुपपत्तिस्तत्र वारयित्री स्यादित्यत आहान्यथेति । सामान्येन साधनतान्वयबोधसम्भवस्य निर्णीतत्वादित्यर्थः । किञ्चैकविशेषबाधे अपरावशेषमादायैव सामान्यान्वय इति नियमे सति तन्मते ब्रह्महत्यादिक्रियाया नरकविशेषहेतुत्वं प्रतीयेत भवन्मतेऽपि दुरदृष्टस्य कल्प्यत्वात्तथाच स्वीकुरु वा तत्र दुरितस्य वाच्यत्वं परिहर वा काम्यस्थलेऽप्यपूर्वस्य तत्त्वमिति दुरुत्तरा प्रतिबन्दिरित्याह ब्रह्मेति । प्रतिबन्द्यन्तरमाह अनुभवेति । परोक्तेति । साक्षात्साधनतायां बाधात्परम्पराघटकोपस्थापकाभावाच्चेति भावः । तत्र द्वाराग्रहेपीति । द्वाराग्रहे कारणताभ्युपेयते गत्यन्तराभावस्यात्राप्यविशे

म्यते । ननु कल्पनाप्यपूर्वं न सम्भवति । अन्यथोपपत्तेः । तथाहि यागध्वंस एव पूर्वस्थानेऽभिषिच्यताम् । ध्वंसस्यानन्तत्वादनन्तफलप्रवाहापत्त्याऽनिर्मोक्षापत्तिरिति चेत् । मा तावत्समयफलजनकस्वभावस्यापूर्वध्वंसेऽपि प्रकल्पनात । धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायस्य जागरूकत्वात् । धर्मः क्षरति कीर्त्तनादित्यनेन धर्मस्य ध्वंसप्रतियोगित्वमवगम्यते । तत्तु न ध्वंसस्य सम्भवति विरोधात् । प्रायश्चित्तविधिवैफल्यं

---

चात्मत्युतागौरवाच्चेति भावः । तदेवं सिद्धामपूर्वकल्पनमुपसंहरति तस्मादिति । अपूर्व एवेति । निर्बीजत्वादिति भावः । तटस्थः शङ्कते नन्विति । अन्यथोपपत्त्यसिद्धिशङ्कां निरस्यति तथाहीति । तद्य विशेषेण प्रेक्षावतां यागादौ प्रवृत्तिर्न स्याद्बन्धहेतुत्वादिति शङ्कते ध्वंसेति । असिद्ध्या दूषयति मेति । तावदिति । यथा अपूर्वं नियतकालफलजनकस्वभावं कल्प्यते तथा ध्वंसेऽपि तथास्वभावः कल्प्येत तथा स्वयमनन्तोऽपि सान्तमेव फलप्रवाहं जनयतीत्यर्थः । ननु ध्वंसेपि चेत्स्वभावः कल्पनीय एवेत्यविशेषादपूर्वमेव कल्प्यतामित्यत आह धर्मीति । आगमविरोधेन परिहारं शङ्कते धर्मः क्षरतीति । ननु क्षरतीत्यस्य न

प्रसङ्गात् । यागप्रतिबन्धकता च नैवमिति चेत्
अस्तु तावदेवम् । तथापि साक्षादेव यागेन शरीरविशेष एव जन्यते तेन च समयान्तरे स्वर्गो जन्यते । यद्वा कालपरंपरैव व्यापारोऽस्तु क्रियाया एव वा स्थैर्यं कल्प्यतामिति । मैवम् । न तावच्छरीरस्य व्यापारत्वं प्रलये शरीरबाधेपि प्रलयानन्तरं स्वर्गादिरूपफलस्य प्रामाणिकत्वात् । प्रलये

नश्यतीत्यर्थः किन्तु फलं जनयतीत्यर्थः ततः कथं विरोध इत्यत आह प्रायश्चित्तेति । ननु प्रायश्चित्तविधिरन्यथोपपत्तेरित्यत आह यागेति । कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वादिति भावः । अन्यथासिद्ध्यन्तरेण परिहरति अस्त्वति । विशेष इति । स्वर्गाव्यवहितपूर्वसमयस्थायनपेक्षः शुक्रशोणितादिरस्मदाद्यप्रत्यक्षश्चेत्यर्थः । अस्तु ध्वंसेनान्यथासिद्धिस्तथापि नापूर्वं सिद्ध्येत् क्लृप्तसजातीयशरीरविशेषकल्पनयैवान्यथासिद्धेरिति भावः । पूर्वत्र गौरवादाह यद्वेति । कालकलामुहूर्तादिरूपेत्यर्थः । अन्यथासिद्ध्या पूर्वत्रास्वरसादाह क्रियाया एवेति । सूक्ष्मरूपेण क्रियैव यागादिः स्वर्गोत्पादपर्यन्तं तिष्ठतीति वा कल्प्यतामित्यर्थः । धर्मिकल्पनातो धर्मकल्पनाया लघुत्वादिति भावः । व्यभिचारेण शरीरकल्पनापक्षं निरस्यति न तावदिति । प्रामाणिकेति । नानाकल्पभा-

तच्छरीरं नश्यतीति चेत् । न धर्मिग्राहकेन प्रमाणेन प्रलयस्य सकलकार्यद्रव्यानाधारसमयत्वेन सिद्धत्वात् । किञ्च शरीरम् प्रति न तावद्यागस्य साक्षाज्जनकत्वम् सम्भवति । अतः परमाणुक्रियाद्वारा वक्तव्यम् । तस्याश्च न यागजन्यत्वम् । व्यभिचारात् । न च परमाणुक्रियैव काचिद्विशेषरूपा यागजन्या सा च न यागं व्यभिचरतीति वाच्यम् । तद्विशेषकल्पनागौरवात् ।

विफलजनकत्वेनापि श्रुत्या केषाञ्चित्कर्मणां विधानादिति भावः । तच्छरीरं फलैरनाश्यमित्यजनितफलं चेत् प्रलयेऽपि तिष्ठेन्न मानाभावादिति शङ्कते प्रलय इति । धर्मिग्राहकमानबाधेन परिहरति नेति । सिद्धत्वादिति । अन्यथोपपत्तेश्चान्यत्वादिति शेषः । कारणताबाधेनापि परिहरति किञ्चेति । साक्षादिति । द्व्यणुकादिप्रक्रममन्तरेणैवेत्यर्थः । परमाणुक्रियेति । द्व्यणुकारंभकपरमाणुक्रियेत्यर्थः । नन्वस्तु तथा किं तदित्यत आह तस्याश्चेति । व्यभिचारादिति । लोष्ठादिजनकतत्क्रियाणां विनैव यागेनोत्पादादिति भावः । ननु क्रियासामान्ये व्यभिचारेऽपि न विशेषव्यभिचार इत्यत आह । नचेति । तद्विशेषेति । क्रियान्तरवैजात्यकल्पन इत्यर्थः । ननु कल्पनागौरवमपूर्वकल्पने

क्लृप्तकारणान्तरप्रत्याख्यानेऽतिप्रसङ्गात् । अत एव समयकलापरंपरापि न यागव्यापारः । किञ्च अनुभवेप्येवंभूतव्यापारेणान्यथासिद्ध्या संस्कारोपि न सिद्ध्येत् । ननु व्यापारं विनापि यागः स्वर्गं प्रति कारणमस्तु । न च चिरध्वस्तस्य व्यापारद्वारा कारणत्वदर्शनात् व्यापारं विना-

कैमुतिकमित्यत आह क्लृप्तेति । अक्लृप्तकारणभावस्य यागस्य शरीरं प्रति कारणता कल्पयित्वा क्लृप्ततत्कारणभावशुक्रशोणितादेः प्रत्याख्याने अतिप्रसङ्गात्कार्यमात्रे तथा प्रसङ्गादित्यर्थः । एवं च स्वर्गोपपादकत्वे शरीरकल्पनापि व्याहन्येतेति भावः । उक्तयुक्त्यतिदेशेन कालकलाव्यापारतापक्षं निरस्यति अतएवेति । प्रलये तन्नाशात्प्रलयानन्तरयागादिफलानुत्पादप्रसङ्गादेवेत्यर्थः । अतिप्रसङ्गेनापि दूषयति किञ्चेति । अनुभवेपीति । विनिगमकाभावादिति भावः । अतएव क्रियास्थैर्यपक्षोपि परास्तः परस्पराश्रयप्रसङ्गाद्धर्मिग्राहकमानबाधाच्चेति भावः । यागे व्यापारकल्पना स्वर्गसाधनतानिर्वाहाय वा चिरध्वस्तकारणताया व्यापारव्याप्तत्वाद्वा ? नाद्यः । तथाहि निर्वाहाय जननाय ज्ञापनाय वा ? नाद्यः । अनन्यथासिद्धनियतपूर्ववर्तित्वम् हि कारणत्वम् तच्च न व्यापारस्योत्तरभावित्वेन तत्रासामर्थ्यात् । न

कारणत्वानुपपत्ति रिति वाच्यम् व्याप्तौ प्रमाणाभावात् । न च कारणत्वचिरध्वस्तयोरविशेषापत्तिः कारणत्वस्यैव विशेषत्वादिति एतदपि नास्ति कारणत्वस्य कार्याव्यवहितपूर्वसमयवर्तित्वतद्वर्तिव्यापारवत्त्वान्यतररूपानियतत्वादिति संक्षेपः ॥

इत्यपूर्वप्रकरणम् ।

चरमः वेदेनैव तज्ज्ञापनान्न द्वितीयः व्याप्तौ मानाभावादिति शङ्कते नन्विति । मानाभावादिति । विपक्षे मानाभावादिति भावः । नन्वतिप्रसङ्ग एव विपक्षे बाधक इत्यत आह नचेति । चिरध्वस्तः कालान्तरभाविस्वर्गजनको यागः स्वर्गजननानुकूलव्यापारवान् न स्यात् तदा स्वर्गजनको न स्यात् इति विपक्षबाधकतर्कसहकृतात् यागः स्वर्गजननानुकूलव्यापारवद्यथा सस्यजनकं कर्षणं यथा वा संस्कारजनकोऽनुभव इत्यनुमानाद्यागव्यापारापूर्वसिद्धिरस्तवेति परिहरति एतदपीति । कार्याव्यवहितसमयपूर्ववर्तित्वमनुभवादौ व्यभिचारि स्मृत्यादिप्रतीतस्य तथात्वस्य बाधितत्वात् । कार्याव्यवहितपूर्वसमयवर्तिव्यापारकत्वमपि तथैव व्यभिचारि संस्कारादिप्रतीतस्य तथात्वे योग्यानुपलम्भबाधादित्यत आह अन्यतरेति । नियतत्वादिति ।

अत्रान्यथाख्यातौ तावत्संप्रदायसिद्धा वि॰ प्रतिपत्तिः अरजतं रजतत्वप्रकारकज्ञानविषयो न वा रजतज्ञानमरजतविषयं न वा अरजतं रजतत्वप्रकारकविषयताश्रयो न वा रजतत्वप्रकारकविषयता रजतनिष्ठा न वा ज्ञानम् स्वविषयताव्यधिकरणप्रकारकं न वा इदं ज्ञानं व्यधिकरण॰

---

अनन्यथासिद्धान्वयव्यतिरेकाभ्यां तदवधारणादिति भावः ॥ ॥

इति श्रीसकलसामन्त॰ अपूर्वप्रकरणम् ।

ज्ञानत्वस्य व्यधिकरणप्रकारकवृत्तित्वव्यवस्थापनाय विचारमारिप्समानस्तटस्थस्य विप्रतिपत्त्यनिर्वचनमूलां विचारासम्भवाशङ्कामुपोद्घातेन निराचष्टे अन्यथाख्याताविति । ज्ञानस्य व्यधिकरणप्रकारकत्वे इत्यर्थः । अरजतत्वप्रकारकज्ञानविषयत्वेनासिद्धसाधननिवृत्त्यै रजतत्वप्रकारकेति । तादृशेच्छाविषयत्वे तन्निवृत्त्यै ज्ञानेति । अरजतत्वं रजतत्वज्ञानविषय एवेति सिद्धसाधननिवृत्त्यै प्रकारेति । अतिरिक्तविषयतावादिनां विप्रतिपत्तिचतुष्टयमुपन्यस्यति अरजतं रजतत्वप्रकारकविषयतेत्यादि । विषयता नाम विशेष्यमात्रवृत्तिर्विशेषणताविशेषः । रजतत्वप्रकारिकेति । न च पूर्वविप्रतिपत्त्यभेदः विशेषणविशेष्यभेदेन भेदात् । स्वविषयता-

प्रकारावच्छिन्नविषयताकं न वा ज्ञानं विशिष्टज्ञानत्वेन प्रवृत्तिजनकं न वा ? नाद्यः अर्थान्तरत्वात् । समूहालम्बनरूपतयाप्युपपत्तेः । नापि द्वितीयः अत एव । नापि तृतीयः अन्यथाख्यातिवादिनां नेति कोटेरप्रसिद्धेस्ते रजतत्वप्रकारकविषयत्वस्य केवलान्वयित्वाङ्गीकारात् । नापि

---

व्यधिकरणेति । ननु व्यधिकरणता तदनधिकरणाधिकरणता वा तदधिकरणानधिकरणकता वा विवक्षिता ? नाद्यः सामान्यलक्षणानङ्गीकारिगुरुनये धूम इतिज्ञानविषयताया संनिहितधूमवृत्तेरनधिकरणपर्वतीयधूमत्वस्य वर्तमानत्वेन धूम इति ज्ञाने स्वविषयताव्यधिकरणप्रकारकत्वसत्त्वेन सिद्धसाधनात् । न द्वितीयः गगनत्वमित्याद्यप्रवृत्तिगगनादिप्रकारकज्ञाने सिद्धसाधनादिति चेत् न स्वविषयताधिकरणमनधिकरणं यस्य प्रकारताप्रविष्टवैशिष्ट्यस्य तत्प्रकारकं न वेत्यर्थे दोषाभावात् । ज्ञानं विशिष्टज्ञानत्वेनेति । विशिष्टज्ञानत्वम् ज्ञाननिष्ठप्रवृत्तिजनकतावच्छेदकं न वेत्यर्थः । यद्यपि प्रत्येकं ग्रहणस्मरणयोर्विशिष्टज्ञानत्वस्य प्रवृत्तिजनकतावच्छेदकत्वस्वीकारेऽपि नान्यथाख्यातिसिद्धिः । तथापीष्टतावच्छेदकप्रवृत्तिविषयवैशिष्ट्यावगाहिज्ञानत्वम् विशिष्टज्ञानत्वं विवक्षितमिति भावः । अर्थान्तरत्वमेव विवृणोति

चतुर्थः । साधारण्याभावात् । नापि पञ्चमः । सामान्यतोऽप्रसिद्धेः । नापि षष्ठः । परं प्रत्यसिद्धेः ।

समूहेति । इमे शुक्तिरजते इति रजतत्वप्रकारकज्ञानविषयत्वस्यारजते शुक्त्यादौ सम्भवादित्यर्थः । अतएव अर्थान्तरत्वादेव । अप्रसिद्धिं विवृणोति नै रजतत्वेति । यद्यप्यतीन्द्रिये वाय्वाकाशादौ न रजतत्वप्रकारकविषयतासम्भवस्तथापि सर्वं न रजतमिति तन्निषेधबुद्धेरपि । आहार्यरजततादात्म्यारोपरूपपूर्वकत्वादवश्यं रजतत्वप्रकारकविषयताश्रयत्वमेवेष्टव्यमिति भावः । साधारण्याभावादिति । रजतज्ञानस्यारजतविषयस्य सिद्धावपि साधारण्येन विसंवादिप्रवृत्तिज्ञानमात्रेऽन्यथाख्यातिप्रसिद्धेरित्यर्थः । ज्ञानं स्वविषयतेत्यादिपञ्चमपक्षेऽपि ज्ञानत्वपदे रजतज्ञानादिरूपविशेषपरे ज्ञानमात्रपरे वा ? आद्ये विवादिप्रवृत्तिहेतुज्ञानमात्राभिमतान्यथाख्यातित्वासिद्धिरित्यभिप्रेत्य द्वितीये दोषमाह सामान्यत इति । ज्ञानविषयतानधिकरणस्य वस्तुन एवाप्रसिद्धेरित्यर्थः । न च स्वविषयताधिकरणानधिकरणं निरधिकरणमेव प्रसिद्धमिति वाच्यम् । तथासति स्वविषयताधिकरणेत्यस्य व्यर्थत्वादिति भावः । षष्ठेऽपि विषयतापेक्षं वैयधिकरण्यमिति स्थिते किं सामान्यतो ज्ञानविषयताव्यधिकरणप्रकारावच्छिन्नविषयताकत्वं विवक्षितमुत पक्षीकृते

व्यक्तिविशेषविवक्षायामसाधारण्यात् । किञ्च इदम् ज्ञानमिति सत्यं ज्ञानं विवक्षितम् । शुक्तिगोचरम् वा ? नाद्यः । तत्र व्यधिकरणप्रकारावच्छिन्ने साध्ये बाधात् । नेतरः परं प्रत्यसिद्धेः बाधाच्च ।

---

दण्डज्ञानविशेषितमिति विकल्प्य नाद्य इत्याह परंप्रतीति । इच्छादावतिरिक्तविषयतायास्तद्वादिभिरप्यनङ्गीकारात् ज्ञाननिरूपितायाश्च तस्या व्यधिकरणप्रकारावच्छिन्नत्वस्याख्यातिवादिनं प्रत्यसिद्धेरित्यर्थः । अत्र सामान्यतोऽप्रसिद्धेरित्यपि द्रष्टव्यम् । अन्त्यमनूद्य दूषयति व्यक्तीति । स्वरूपसम्बन्ध एव विषयता सा चेच्छादौ व्यधिकरणप्रकारिका गुरुणाभ्युपगम्यत एवेति न तं प्रत्यप्रसिद्धिरित्यस्वरसादाह किञ्चेति । ज्ञानमिति । विप्रतिपत्तिगतेनेदंपदेनेत्यर्थः । इदंच पंचमविप्रतिपत्तिगतज्ञानपदस्याप्युपलक्षणम् । शुक्तिगोचरमिति । व्यधिकरणप्रकारकमित्यर्थः । यथाश्रुते प्रसिद्धध्यभिधानविरोधात् भ्रमान्तरसाधारण्यानुपपत्तेश्च । व्यधिकरणेति । व्यधिकरणप्रकारावच्छिन्नविषयताकत्व इत्यर्थः । उपलक्षणं चैतत् । विषयताव्यधिकरणप्रकारकत्वे इत्यपि द्रष्टव्यम् । परंप्रतीति । तथाच पक्षस्य तं प्रत्यसिद्धतया तत्र हेतोरन्यतरासिद्धिप्रसङ्गादिति भावः । बाधाच्चेति । प्रसिद्धौ वा नेति कोटि-

नापि सप्तमः। तथाहि तत्रायमर्थः। रजतार्थिप्रवृत्तिं प्रति कारणत्वे प्रवृत्तिसमानविषय-

साधने बाधादित्यर्थः। सप्तमीं दूषयितुं तात्पर्यविषयं तदर्थमाह तत्रायमित्यादिना। विशिष्टज्ञानत्वेन प्रवृत्तिजनकत्वस्य यथाश्रुते विधिकोटेः परं प्रत्यसिद्धेरिति भावः। प्रवृत्तिसमानविषयेति। पुरोवर्तिनः शुक्तित्वेन ज्ञाने देशान्तरीयरजतस्मरणाच्छुक्तिरजतेतिसमूहालम्बनाद्वा प्रवृत्तिप्रसङ्गवारणायेदं विशेषणम्। रजतत्वाज्ञानदशायां रजतार्थिप्रवृत्तिवारणायोत्तरविशेषणम्। तत्रावच्छिन्नत्वम् अवच्छिन्नत्तिप्रमाविषयत्वम्। न तु तदन्यूनानतिरिक्तवृत्तित्वम्। तथासति प्रवृत्तिजनकेऽन्यथारव्यातिज्ञाने रजतत्वान्यूनानतिरिक्तवृत्तिविषयताकत्वाभावेन तादृशज्ञानत्वस्यावच्छेदकत्वानुपपत्तिप्रसङ्गात्। नन्विदं रजतमितिवदिह रजतत्वमित्यपि ज्ञानाद्रजतार्थिप्रवृत्तिदर्शनात्तत्र च रजतत्वस्याप्रकारत्वान्न रजतत्वप्रकारावच्छिन्नविषयताप्रतियोगिज्ञानत्वं रजतार्थिप्रवृतिजनकतावच्छेदकमिति विधौ बाधः। न च प्रवृत्तिविशेष्यकज्ञानस्यैव प्रवर्तकत्वान्नैव ततः प्रवृत्तिरिति वाच्यम्। लाघवेन रजतत्वरजतार्थिप्रवृत्तिविषयवैशिष्ट्यावगाहिज्ञानस्यैव तदर्थिप्रवृत्तौ हेतुत्वात्। विशेष्यत्वस्य विषयत्वाधिकपदार्थघटितशरीरतया तद्गर्भस्य गुरुत्वेन प्रवर्तकतानवच्छेदकत्वा-

रजतत्वप्रकारावच्छिन्नविषयता प्रतियोगिज्ञानत्वेनावच्छिद्यते न वा । इयं च विप्रतिपत्त्या स्वसमानविषयकः संशयः । तेन समानविषयक एव विचारः प्रवर्त्तयितव्यः तद्विषयश्च नान्यथाख्यातिरूपः अपि तु तद्व्यापाररूपः । न च व्यापकसिद्ध्यर्थम् कथायां व्याप्यसाधनम् युज्यते ।

---

रुचेति चेत् । न इष्टतावच्छेदकप्रवृत्तिविशेष्यवैशिष्ट्यावगाहिज्ञानस्य प्रवर्तकत्वे प्रमेयमिति ज्ञानादपि प्रवृत्तिप्रसङ्गात् । प्रमेयत्वेन रूपेण वैशिष्ट्यस्यापि तत्राभानात् इष्टतावच्छेदकप्रकारकत्वस्यावश्यवाच्यत्वादिह च तदभावात् । अस्त्वयमर्थस्ततः किमत आह इयं चेति । धर्मिकोटितत्संसर्गबहिर्भूतत्वादिति भावः । अपि तु तद्व्याप्य इति प्रवृत्तिसमानविषयतायां रजतार्थिताजन्यशुक्तिप्रवृत्तिजनकज्ञानवृत्तित्वानुमानं संसर्गमर्यादयाऽन्यथाख्यातिविषयं तद्व्याप्यं ज्ञानवृत्तिप्रवृत्तिकारणतावच्छेदकं तत्रेत्यर्थः तथा चार्थान्तरमिति भावः । ननु व्याप्यसिद्धेर्व्यापकसिद्ध्यर्थत्वान्न तथेत्याशंक्याह विप्रतिपत्तेरित्यादिना प्राप्तकालत्वादित्यन्तेन । व्याप्यसाधनमिति । व्यापकं तद्व्याप्यं चानुपन्यस्येति शेषः । व्यापकं प्रतिज्ञाय तत्साधकतया व्याप्ये प्रयुक्ते तदसिद्ध्युद्भावने सत्येव तत्साधकाकांक्षोदया-

अप्राप्तकालत्वात् । न च वैशिष्ट्यस्य कारणतावच्छेदकतानिषेधेनान्यथाख्यातिर्निषिद्धा भवतीति महान्प्रमाद इति ।

मैवम् । रजतत्वावच्छिन्नकार्यज्ञानविषयता रजतनिष्ठात्यन्ताभावप्रतियोगिनी न वेत्येव विप्रतिपत्तिः । रजतत्वप्रकारिका विषयताऽरजतनिष्ठा नवेति वा । न चासाधारण्यम् दोषः । एतावताऽन्यथाख्यातिविचारानुकूलत्वानपायात् ।

दिति भावः । तदेवं विधिपक्षे व्याप्यसाधनेऽप्राप्तकालतामुक्त्वा निषेधपक्षेऽर्थान्तरतापीत्याह नचेत्यादिना । व्याप्यनिवृत्तेर्व्यापकनिवृत्त्यनापेक्षकत्वादिति भावः । उपसंहरति इति महान्प्रमाद इति । अन्यथाख्यातौ विप्रत्तिपत्तिं प्रतिज्ञाय तद्व्याप्ये तदभिधानरूप इत्यर्थः ।

एवं तटस्थेन विप्रतिपत्त्यनिर्वचनाद्विचारासम्भवमुक्तं तन्निरुक्त्या निरस्यति मैवमिति । रजतत्वावच्छिन्नेति । रजतत्वप्रकारिका ज्ञानविषयतेत्यर्थः । ज्ञानविषयत्वमात्रस्य केवलान्वयितया बाध इत्यत उक्तं रजतत्वावच्छिन्नेति । न च रजतत्वे तथाभूतेपि रजतत्वप्रकारकज्ञानविषयत्वसत्त्वाद्बाधः । अतिरिक्तविषयताश्रयणेनाभिधानात्तस्याश्च विशेष्यमात्रवृत्ति-

यद्वा ज्ञानत्वम् यथार्थत्वव्याप्यम् न वा । यद्वा ज्ञानविषयत्वम् स्वप्रकारात्यन्ताभावसमानाधि-

त्वादिति भावः । उक्तदोषोद्दिधीर्षया दूषितामपि विप्रतिपत्तिमुपादत्ते रजतत्वप्रकारिकेति । एतावता-पीति । क्वचिदपि ज्ञाने व्यधिकरणप्रकारकत्वसिद्धो-ऽन्यथाख्यातिसिद्धेरप्रत्यूहत्वादिति भावः । विशेष्य-मात्रवृत्त्यतिरिक्तविषयताया मानाभावादपरितुष्यन्नाह यद्वेति । ननु न्यायनयेऽपि भ्रमे धर्म्यंशे याथार्थ्यांशे याथार्थ्यस्वीकारात् तद्व्याप्यत्वे सिद्धसाधनं निषेधे बाधश्च । न च प्रकारांशावच्छेदेन तदभावसामा-धिकरण्यमात्राद्व्यभिचारः द्रव्यत्वादेः संयोगादिव्या-प्यतया तुल्योतरत्वादित्यस्वरसादाह ज्ञानविषयत्व-मिति । ज्ञानविशेष्यत्वमित्यर्थः । तेन न प्रकारांशे बाधासिद्धिसाधने इति भावः । स्वप्रकारेति । सिद्ध-साधननिवृत्त्यै स्वेति । नन्वव्याप्यवृत्तिज्ञानविषयत्वं स्व प्रकारीभूतसंयोगाद्यन्ताभावसमानाधिकरणमेवेति सिद्ध-साधनमिति चेत् न । अत्यन्ताभावपदेन विरोधिन एव ग्रहणात् । अत एव बाधास्फूर्तिदशायामसङ्कीर्ण-बाधोदाहरणजाया अनुमितेरन्यथाख्यातिनिर्वाह इति भावः । सर्वस्य पूर्वप्रतिबन्धस्य प्रकृतोपयोगमाह एवं विप्रतिपत्तिव्यवस्थिताविति । तज्जन्यसंशयादिति शेषः । ज्ञानस्य व्यधिकरणप्रकारकत्वं किमन्यथानुप-

करणम् न वा । एवं विप्रतिपत्तिव्यवस्थितौ विचारविषये प्राभाकराणामयमाशयः । रजततया शुक्तिज्ञानं रजतव्याहारव्यवहारान्यथानुपपत्त्या स्वीकर्त्तव्यम् । तयोश्च रजतत्वप्रकारकज्ञानसा-

पत्त्या उत प्रत्यक्षेणैवेति विकल्प्य प्रथममनूद्य दूषयति रजततयेति । शुक्तिविशेष्यकज्ञानं रजततया रजतत्वप्रकारकं स्वीकर्त्तव्यम् । तत्र शुक्तौ विशेष्ये रजतत्वप्रवृत्तिनिमित्तकपदाभिलापतत्प्रकारकेच्छानुपपत्त्येत्यर्थः । अयं भावः । आरोपहेतुत्वाभिमतरजतस्मरणस्यैव तावन्न प्रवर्त्तकत्वम् । रजतत्वप्रकारकत्वेपि भिन्नविशेष्यकत्वात् । अतः शुक्तिविशेष्यकमेव तया वाच्यम् । तत्र यदि न रजतत्वप्रकारकं न रजतार्थिप्रवृत्तौ रजताभिलापे वा हेतुः स्यादिति तस्य रजतत्वप्रकारकत्वमेष्टव्यमिति । अथान्यथोपपत्तिमाह तयोश्चेति । न तु शुक्तिगोचररजतत्वप्रकारकज्ञानसाध्यत्वमिति शेषः । रजतार्थिप्रवृत्तिर्हि रजतत्वप्रकारकज्ञानव्यतिरेकेऽसम्भवन्ती तन्मात्रमाक्षिपेत्तच्च सिद्धमेव न तु शुक्तिज्ञानस्यैव तत्प्रकारकत्वं रजते तदर्थिप्रवृत्तौ व्यभिचारादिति भावः । नन्वस्तीह प्रवृत्तौ रजतत्वप्रकारकत्वं शुक्तिविशेष्यकत्वं च तत्राद्यस्य रजतस्मरणेन निर्वाहेपि चरमस्याकस्मिकतापत्त्या शुक्तिविशेष्यकत्वं

ध्यत्वम् तच्च स्मरणरूपं वृत्तमेव न तु व्यवहर्त्तव्य-विशेष्यकरजतत्वाप्रकारकज्ञानजन्यं व्याहारव्य-वहारयोः गौरवात् । न च यत्र क्वचिद्रजतज्ञाने सर्वत्र व्याहारव्यवहारप्रसङ्गो दोषः । अभेदव्य-वहारे भेदाग्रहस्य संसर्गव्यवहारेऽसंसर्गाग्रहस्य

रजतज्ञानगतं प्रयोजकमास्थेयम् । न च रजतस्मरणे तदस्तीति शुक्तिविशेष्यकं ज्ञानान्तरमेव रजतस्या-भ्युपेत्याशंक्याह ननु व्यवहर्तव्येति । इदं-ज्ञानाच्छु-क्तिविशेष्यकात्तस्याप्युपपत्तेरिति भावः । गौरवादिति । शुक्तिविशेष्यकज्ञानकारणतावच्छेदके रजतत्वप्रकारक-त्वप्रवेशे रजतत्वप्रकारकज्ञानकारणतावच्छेदके शुक्ति-विशेष्यकत्वप्रवेशादित्यर्थः । न च ज्ञानद्वयपक्षेपि व्यक्तिगौरवम् उभयसिद्धत्वात् अन्यथा दण्डसहितचक्र-त्वेन कारणतापत्तेरिति भावः । ननु परस्परवार्तान-भिज्ञद्वयवादिमते ज्ञानं स्वविशेष्य एव व्यवहारकमिति नियमस्वीकारे रजतज्ञानाद्रजत एव व्यवहारः स्यात् अन्यथा त्वतिप्रसङ्ग इत्याशंक्याह न च यत्र क्वचिदिति । अभेदव्यवहार इति । ज्ञानविषयीभूताभेदप्रयोज्यत्वा-भिमते व्यवहारे प्रवृत्त्यभेदाभिलापरूप इत्यर्थः । एवं संसर्गव्यवहार इत्यपि । ननु नियामके वश्यानुसरणीये संसर्गग्रह एव तथास्तां लाघवात् नासंसर्गाग्रहे ।

नियामकत्वात् । अस्य च भ्रमवादिनापि नियमार्थमङ्गीकर्त्तव्यत्वात् । सत्यरजतस्थलेपि भेदाग्रहादेव तदुपपत्तेः वैशिष्ट्यस्याप्रयोजकत्वात् ।

ननु ज्ञानं व्यवहारादिकल्पनीयमिति नाङ्गीकुर्म्मः किन्तु मानसप्रत्यक्षसिद्धं तत् । तस्य च सान्वयव्यतिरेकाभ्यामेव व्यवहारादिकारणत्वं मानगौरवादित्याशंक्याह अस्य चेति । नियमार्थं भ्रमनियमार्थम् । क्लृप्तमात्रापि लाघवमिति भावः । ननु संसर्गग्रहोपि सत्यप्रवृत्त्यादिस्थले क्लृप्तो भावरूपश्चेति लघुतर इत्यत आह सत्येति ।

---

द्वितीयं शङ्कते ननु ज्ञानमित्यादिना । ननु ज्ञानप्रत्यक्षतायां नास्माकमपि विवादः । किन्तु संसर्गगोचरमेकमुतागृहीतासंसर्गकमनेकमिति तत्र च त, त्प्रत्यक्षताभिधानमर्थान्तरमित्याशंक्याह तस्य चेति - तस्य च ज्ञानस्य सत्यज्ञाने वृत्ते यथा येन रूपेण प्रवृत्तिविशेष्येष्टतावच्छेदकसंसर्गज्ञानत्वेन प्रवृत्त्यादिहेतुत्वमन्वयव्यतिरेकाभ्यां कृत्वा मानसप्रत्यक्षसिद्धम् तथैव तेनैव रूपेण विपरीतबोधेपीत्यर्थः । अत्र च यागस्वर्गसाध्यसाधनभावग्राहिप्रमाणस्येव ज्ञानप्रवृत्तिकार्यकारणभावग्राहिणो मानसप्रत्यक्षस्यावच्छेदकरूपौदासीन्यशंकां वारयितुमन्वयव्यतिरेकाभ्यामिति । अवच्छेदरूपमपुर-

सम्प्रत्यक्षसिद्धम् यथा सत्यरजतस्थले भवति तथा विपरीतरजतविज्ञानेऽपि। कथमन्यथा शुक्ती रजतया मया ज्ञातेतिव्यवहारो बाधावतारेऽपि । तदिदमुक्तमाचार्यैः-संसर्गः क्वापि न सिद्धयेदिति ।

---

स्कृत्यान्वयव्यतिरेकानवगमात्तत्पुरस्कारेण कारणताग्राहकं प्रमाणावच्छेदकरूपमवश्यं विषयीकरोतीति भावः । नन्वसत्यरजतस्थानीयज्ञाने संसर्गविषयत्वस्यानुपलब्धिबाधितत्वान्न तत्कारणतावच्छेदकमत आह कथमन्यथेति । व्यवहारोऽभिज्ञा अभिवदनं च अनुव्यवसाये व्यवसायप्रकारत्वेन रजतत्वस्य भानमभिवदने प्रकारवाचिनी तृतीया च विशेष्ये तत्तात्संसर्गभानेनोपपद्यतेति नानुलब्धिरिति भावः । ननु व्यवसाय इवानुव्यवसायेप्यसंसर्गाग्रहादेव संसर्गग्रहत्वाभिमानमत आह बाधावतारेपीति । ननु सत्यस्थलेपि भेदाग्रहादेव प्रवृत्त्युपपत्तेः संसर्गग्रहत्वेन कारणत्वाग्रहान्न प्रकृते संसर्गसिद्धिरितिशंकामाचार्यसंमतिप्रदर्शनव्याजेन निरस्यति तदिदमुक्तमिति । सत्यस्थले व्यवसायस्य संसर्गगोचरत्वे बाधकाभावात्तदुपनीतसंसर्गगोचरत्वमनुव्यवसाये युज्यते इति कारणबाधाध्यवसायो न संसर्गगोचर इति क्व तदुपनयाधीनः संसर्गगोचरोऽनुव्यवसायः ।

एतदपि नास्ति । शुक्तौ रजतसाक्षात्कारस्य कारणबाधेन बाधे शुक्ती रूप्यतया ज्ञातेति व्यवहारस्य प्राचीनभेदाग्रहनिबन्धनत्वात् । तथाहि रजतसाक्षात्कारे रजतेन्द्रियसन्निकर्षः कारणम् तद्व्यतिरेकेण कथं शुक्तौ तदुत्पत्ति भावनापि सम्भावनापि । न च साक्षात्कारमात्रे विशेष्येन्द्रियसन्निकर्षः कारणम् तद्विशेषे च

---

अभिलापमात्रं त्वन्यथोपपाद्यमित्याह एतदपि नास्तीति । व्यवहारस्याभिलापस्य । प्राचीनेति, प्राचीनजातीयेत्यर्थः । व्यवसायव्यवहारे शुक्तौ रजतत्वासंसर्गाग्रहस्यैवानुव्यवसायव्यवहारे शुक्ती रजतत्वप्रकारकज्ञानविषयत्वासंसर्गाग्रहस्य निबन्धत्वादिति भावः । कारणताबाधमुपपादयितुं कारणं तावदाह रजतेति । तद्विशेष्यके वा सत्यप्रत्यक्षे तथादर्शनादिति भावः । तद्व्यतिरेकेण इति । ज्ञानं च न संनिकर्षोतिप्रसङ्गादिति भावः । ननु स्वविशेष्यसंनिकर्षत्वेन रजतसंयोगस्य कारणत्वं न रजतसंनिकर्षत्वेन । यत्किञ्चिद्रजतसंनिकर्षादपि यत्किंचिद्रजतसाक्षात्कारप्रसङ्गात् । कारणतावच्छेदकाक्रान्तसमवधाने कार्योत्पादस्य दुरपवादत्वादस्ति चेह शुक्तिरूपविशेष्यसंनिकर्ष इत्याशं-

रजतसाक्षात्कारे तद्विशेष्येन्द्रियसन्निकर्षस्यैव कारणत्वम् विशेष्ये विशेसन्निकर्षस्यैव कारणत्वेनाङ्गीकारादिति वाच्यम्। क्वचिद्विशेष्यासंनिधानेपि साक्षात्कारिभ्रमस्य त्वयाङ्गीका-

---

र्याह न च साक्षात्कारमात्रे इति। विशिष्टत्वाविशेषिते जन्यसाक्षात्कारमात्र इत्यर्थः। निर्विकल्पके घटादेर्विशेष्यत्वाभानेपि वस्तुतो विशेष्यत्वस्यानपायात्। न च प्रकारगर्भस्य तस्य निःप्रकारकनिर्विकल्पकविषयेऽसम्भवः, प्रकारत्वानवगाहित्वस्यैव निःप्रकारकनिर्विकल्पककाले घटे न घटत्वप्रतियोगित्वविशेष्यकतापत्तिः तदा घटत्वस्यापि घटत्वप्रतियोगिकवैशिष्ट्यानुपयोगित्वसत्त्वात्, अन्यथा घटत्वमितिज्ञानकालेपि तस्य विशेष्यतानापत्तेः ज्ञानविशेषाधीनत्वे चान्योन्याश्रयप्रसङ्ग इति वाच्यम्। तथा घटत्वे विशेष्यत्वसत्त्वेपि घट इति ज्ञानेनाविषयीकरणात्। ज्ञानस्वभावस्यैवात्र नियामकत्वादिति भावः। तद्विशेष्येति। तस्य रजतसाक्षात्कारस्य विशेष्यमिति विग्रहः। विशेष्यसंनिकर्षस्य भ्रमविशेषे व्यभिचारेण सामान्यकारणताया एवाभावान्न तद्विशेष्यसंनिकर्षत्वेन तद्बलकल्प्यविशेषकारणता, किन्तु रजतसंनिकर्षत्वादिनैव वाच्या तदभावाच्च न रजतभ्रमसम्भव इत्याह क्वचिद्विशेष्या-

रात् । तथाहि साक्षाद्दूर्ध्वम् दृष्ट्वान्यत्रागत्वा

सन्निधानेपीति । वस्तुतो विशेष्यत्वापेक्षया विषयत्वस्य लघुत्वाद्विषयसंनिकर्षत्वेन हेतुत्वे यत्सामान्यमित्यादिन्यायेन रजतविषयसाक्षात्काररजतरूपविषयसंनिकर्षत्वेनैव कारणता युक्ता । अत एव विषयेन्द्रियसंनिकर्षत्वेनापि कारणत्वे सिद्धैवान्यथाख्यातिः । रजतासंनिकर्षेपि शुक्तिरूपविषयसंनिकर्षादेव तदुपपत्तेरिति निरस्तम् । रजतसंनिकर्षरूपविशेषकारणाभावे सामान्यसामग्र्या अकिंचित्करत्वात् । अत एव घटसंनिकर्षात्पटप्रत्यक्षापादनमप्यनवकाशम् । विशेषसामग्र्यभावात् अन्यथा विशेष्यसंनिकर्षत्वेन कारणतापक्षेप्यगतेः । किञ्चैवं विशेषणसंनिकर्षस्य पृथक्सामान्यकारणताकल्पनमप्यनपेक्षितमित्यपरमनुकूलम् भवति । यत्तु यावद्विषयसंनिकर्षत्वेन कारणत्वे तदपेक्षया विशेष्यसंनिकर्षत्वमेव लघु अन्यथा तु विशेषणविशेष्यान्यतरमात्रसंनिकर्षादपि साक्षात्कारापत्तिरिति । तन्न आवश्यकविशेषकारणताकल्पनेनैव यावदर्थसिद्धेः । न चैवम् प्रतियोगित्वादिभानमभावादिसाक्षात्कारेषु न स्यात् संनिकर्षाभावादिति वाच्यम् । विशेषणसंनिकर्षपक्षेपि तुल्यत्वात् । अतो नान्यथाख्यातिसिद्धिरित्याशयेनाह त्वयेति । विशेष्यसंनिकर्षकारणतावादिनेत्यर्थः । मया तु न विशेष्यसंनिकर्षत्वेन क्वचित्कारण-

चेन्तयतो भवति । स स्थाणुः पुरुषो वेति संशयः । न च ज्ञानधर्मिक एव संशयस्तत्रेति वाच्यम् । ज्ञानाभानेपि तथा संशयात् । एवं विपर्ययोऽप्यूहनीयः । न च तत्र दोषस्यैव सन्निकर्षत्वम् प्रौढप्रत्यासत्तिर्बहिर्भावेन तस्य सन्निकर्षत्वात् । न च तत्र ज्ञानान्तरोपनीते मन एव कारणम् युक्तम् । बहिर्विशेष्यके मनसोऽस्वातन्त्र्यात् ज्ञानान्तरोपनयस्य तद्विशेषणक एव साक्षात्कारे प्रयोजकत्वात् । परमाणुमहं जानामीत्यत्र तथा दर्शनात् । अन्यथानुमित्यादेरुच्छेदापातात् । भेदाग्रहपक्षे त्वस्य दोषस्याभावात् ।

---

ताभ्रमो वाभ्युपगम्यते । वयापि तद्वादिना सत्यसाक्षात्कार एव तदभ्युपगमान्नेदमिति भावः । नन्वयं ज्ञानेच्छानुविशेष्यत्वादिकोटिकः संशयः अस्ति च ज्ञानेन संनिकर्ष इति क्व व्यभिचार इत्यत आह न च ज्ञानेति । ज्ञानाभान इति । धर्मिज्ञानस्य तद्धेतुत्वादिति भावः । बहिर्भावेनेति । सामान्यलक्षणादिरपीति भावः । ननु परमत्यादिवदसंनिकर्षेपि मानसोयं संशयः स्यादत आह न च तत्रेति । संशय इत्यर्थः । ज्ञानान्तरोपनीते विशेष्ये सतीत्यर्थः । तथाच शुक्ता-

ननु भेदाग्रहात्प्रवृत्तिरनुपपन्ना। तथाहि यथोपस्थितेष्टभेदाग्रहस्य निवर्तकत्वम् वाच्यम् न त्विष्टभेदग्रहस्य तथात्वे सत्यरजते नेदं रजतमिति कृत्वा न निवर्त्तेत तत्रेष्टभेदग्रहस्याभावात्। भावे वा विपरीतख्यात्यापत्तेः। तथाच शुक्ताविदम् रजतमेव न शुक्तिरिति ज्ञानादुपस्थितेष्टानिष्टभेदाग्रहसहितात्प्रवृत्त्योर्यौगपद्यापत्तिः। न च तत्रानिष्टभेदग्रह एवेति वाच्यम्। अन्यथाख्यातिस्वीकारापत्तेः। न च स्वातन्त्र्योपस्थितानिष्टभेदग्रह एवेति वाच्यम्। स्वातन्त्र्यस्य निर्वक्तुमशक्यत्वात्। एतदपि न साधीयः अभावाविशेषणतयोपस्थितानिष्टभेदाग्रहस्य निवर्तकत्वात्। प्रवर्त्तकत्वमप्यभावाविशेषणतयोपस्थितेष्टभेदाग्रहस्यैव तेन सत्यरजते नेदम् रजतमिति कृत्वा न प्रवृत्त्यापत्तिः। तस्य च

विदं रजतमेवेति न च शुक्तिरित्येवकारार्थः। अत एवानिष्टतावच्छेदकप्रकारकोपस्थितिविषयानिष्टभेदाग्रहान्निवृत्त्यापादनमुपपाद्यत इति द्रष्टव्यम्। अभावाविशेषणतयेति। नन्वेवमभावप्रतियोगीदं शुक्तिशकलमिति ज्ञानादपि न निवर्तेत निवर्तकस्य स्वातन्त्र्योपस्थिता-

प्रकृतेऽभावात् । यद्वा आरोपनियमार्थमवश्यं भेदाग्रहे विशेषः स्वीकर्त्तव्यः । स च विशेषः प्रवृत्तिप्रयोजक एवास्तु न च प्रकृते तथा विशेषः । अन्यथोभयभेदाग्रहात्संशय एव स्यात् नत्विदं रजतमेवेति विपर्ययः । ननु स्थाणौ स्थाणुपुरुषसंशयानन्तरं पुरुष एवेति व्यवहारस्तावत् दृश्यते तत्र च न भेदाग्रहस्य निमित्तत्वम् स्थाणौ पुरुषभेदाग्राहवत्स्थाणुभेदाग्रहस्यापि विद्यमानत्वादेककोटिव्यवहारानुपपत्तेः संशयतादवस्थ्यं स्यात् । एकस्मिन्धर्मिणि परस्परविरुद्धे भेदाग्रहस्य तव संशयत्वात । न च स्थाणुभेदसह एव विपरीतख्यातिप्रसङ्गात् । तस्मादगत्या

---

निष्टभेदाग्रहस्याभावादिति चेत् । न पुरोवर्त्यगृहीतासंसर्ग भेदप्रतियोगित्वेनानुपस्थितत्वस्यैवेष्टानिष्टयोः स्वातन्त्र्यपदार्थत्वादित्याहुः । नन्वेवं रजतान्नेयमशुक्तिरिति बुद्ध्या न निवर्त्तेत शुक्तिभेदस्य पुरोवर्त्तिन्यसंसर्गग्रहेन्यथाख्यात्यापत्तेः । अन्यथा तु तादृशभेदप्रतियोगित्वेनैवानिष्टोपस्थितेरित्यरुचेराह यद्वेति । अन्यथोभयभेदाग्रहादिति । स्वमताभिनिवेशेनेदम् । न्यायनये दोषादन्यतरभेदस्यैव स्वीकारात् ।

विपरीतख्यातिः स्वीकर्त्तव्येति । मैवम् । संशयानन्तरं स्थाणुग्रह एव विपरीतख्यातिप्रसङ्गात् तस्मादगत्या विपरीतख्यातिः न स्वीकर्तव्या स्थाणौ पुरुष एवायमिति व्यवहारोपि पुरुषभेदाग्रहादेवोपपद्यते । न च संशयतादवस्थ्यम् स्वतन्त्रोपस्थितपरस्परविरुद्धोभयकोटिभेदाग्रहस्य संशयत्वात्पुरुष एवायमित्यत्राभावविशेषणतया स्थाणोरुपस्थितत्वात् । अन्यथा तावतापि पुरुष एवायमित्यत्र संशयोत्पत्तिप्रसङ्गः । नन्वसंसर्गाग्रहाच्चेत्प्रवृत्तिः सर्वत्र तदा वह्न्यर्थिप्रवृत्तौ धूलीपटले धूमप्रतिसंधानापेक्षा न स्यात् । वन्ह्यसंसर्गाग्रहार्थमिति चेत् न पूर्वमपि वह्न्युपस्थितिग्रहापेक्षानियमेन वन्ह्यर्थिप्रवृत्तौ निर्वह्नौ वन्ह्यनुमितिरुत्पद्यत इत्यवश्यं स्वीकर्त्तव्यम् ।

---

एकस्मिन् धर्मिणीति । भिन्नधर्मिकसमूहालम्बनव्यावृत्त्यर्थमेकस्मिन्निति । प्रमाव्यावृत्त्यै परस्परेत्यादि । क्रमिकद्वारद्वये एकधर्मिके तादृश्यतिव्याप्तिवारणायैकदेत्यपि द्रष्टव्यम् । अत्र रजत एव नेदं रजतम् किन्तु शुक्तिरिति भ्रमेऽव्याप्तिवारणायैव स्वतन्त्रोपस्थितेत्यस्यापि बोध्यत्वात्संशयोत्तरमत्यक्षस्य च विशेषदर्शन-

किञ्चैवं कथमन्यथात्रानुमिनोमीति व्यवहारस्त्व-त्पक्षे स्यात्। प्रत्यक्षोपस्थिते विशेष्येऽसंसर्गा-ग्रहेण पीतः शंख इत्यादौ साक्षात्करोमीति व्य-वहारस्य त्वयेष्यमाणत्वादिति । एतदपि न साधु । पूर्वं वह्न्यसंसर्गाग्रहसत्त्वेऽपि निर्वह्नित्वा-संसर्गाग्रहस्यापि विद्यमानत्वात् । ततः कथं धूमप्रतिसंधानात् प्राङ्निःकम्पं वह्न्यर्थी प्रव-र्त्तेत । धूलीपटले धूमप्रतिसन्धानानन्तरं नियमतो वह्न्युपस्थितौ तदसंसर्गाग्रहाद्वह्न्यर्थी निष्कम्पो नियमतः प्रवर्त्तते । अनुमिनोमीति व्यवहारस्य लिङ्गोपस्थापितव्यापकासंसर्गाग्रह एव निब-न्धनं तस्मादेतावतापि नान्यथाख्यातिसिद्धिः । किञ्चान्यथाख्यातिपक्षे इदं रजतमिति ज्ञानस्य को

---

जन्यत्वेनावधारणात्मकतया पुरुष एव न स्थाणुरिति अ-न्यतरकोटेरभावविशेषणतयोपस्थित्यवश्यम्भावेन स्वा-तन्त्र्यभङ्गान्नोभयभेदाग्रहेपि संशयापत्तिरिति परिहरति नैवमित्यादिना । पूर्वमपीति । संशयानुरोधात्तत्स्थल एवाक्षेपादिति भावः । लिङ्गज्ञानविशेषस्य तज्ञानङ्गीका-रेऽनुमित्यनुव्यवसायानुपपत्तिस्तस्यैवोभयमतेऽनुमिति-पदार्थत्वादिति दूषणान्तरमाह किञ्चैवमित्यादिना ।

विषय: शुक्तिरजते वा अनयोस्तादात्म्यं वा शुक्तिरजतत्वयो: सामानाधिकरण्यं वा रजतत्वेन प्रकारेण शुक्तिर्वा ? नाद्य: समूहालम्बनेनाप्युपपत्ते: । न द्वितीयो सदतिप्रसङ्गात् । अत एव न तृतीयो निबन्धनात् । किन्तु दोषाणाम् प्रकृतकार्यप्रतिबन्धकत्वम् दृष्टम् नतु कार्यविशेषजनकत्वम् कथमन्यथा भ्रष्टात् कुटजबीजात् न्यग्रोधाङ्कुरो न जायते । ननु भेदाग्रहपक्षे नेदं रजतमिति ज्ञानेन किं बाध्यते इदमिति ज्ञानं वा रजतमिति ज्ञानं वा ? न तावदाद्य: इदन्तास्पदस्य

ननूपस्थिते पक्षे उपस्थितवन्ह्यसंसर्गाग्रह एव तद्विषय इत्यत आह प्रत्यक्षोपस्थित इति । तथाच तत्राप्यनुमिनोमीतीह वा साक्षात्कारोमीति व्यवहारस्य प्रसङ्गान्नेदं युक्तमिति भाव: । वन्ह्यर्थिनि:कम्पप्रवृत्तिप्रतिबन्धकनिर्वन्हित्वकोटिस्वतन्त्रोपस्थितिप्रतिबन्धे लिङ्गासंसर्गाग्रहस्याप्रयोगान्न तदनुरोधेनानुमितिभ्रमसिद्धिरिति परिहरति एतदपीति । ततो वन्ह्यसंसर्गाग्रहात् नियमत: कोट्यन्तरासमुच्चिततया दूषणान्तरमुद्धरति अनुमिनोमीति । लिङ्गाद्व्यापकोपस्थिति: स्वीक्रियते न तु संसर्गोपस्थितिरपीति नान्यथाख्याति: पीत: शंख इत्यादौ च लैङ्गिकव्यापकोपस्थितेरनङ्गी-

तद्वस्थत्वात् । नेतरः रजतस्यापि न शुक्तिसत्वात् । तस्माच्छुक्तौ रजतत्वज्ञानं निषिध्यते रजताभेदो वा उभयथापि बाधबलेनान्यथाख्यातिसिद्धिरिति । मैवम् । भेदाग्रहप्रसंजिताभेदव्यवहारस्य बाध्यत्वात । ननु भेदाग्रहस्य प्रवर्तकत्वे सम्वादासम्वादलक्षणम् प्रवृत्तिवै-

कारान्नानुमिनोमीति व्यवहारप्रसङ्ग इति भावः । न केवलमन्यथाख्यातौ साधकाभावः किन्तु बाधकमप्यस्तीत्याह किञ्चेति । तृतीयेति । प्रकारत्वरूपतया तन्निर्वचने वा तस्योभयवैशिष्ट्यागर्भतया पूर्वोक्तासत्ख्यातिप्रसङ्गादिति भावः । ननु बाधानुपपत्तेरन्यथाख्यातेः साधकत्वान्न तावत्साधकाभावः नापि बाधकं प्रमाणमूलकतया सदुपरागेणासत्ख्यात्यभ्युपगमादिति शङ्कते ननु भेदेति । इदन्तास्पदस्येति । बाधकज्ञाने रजतोल्लेखवैयर्थ्यापत्तेश्चेति द्रष्टव्यम् । रजतस्यापि न रजतमित्येव बाधाकारप्रसङ्गाच्चेति द्रष्टव्यम् । तस्माच्छुक्तौ रजतत्वज्ञानं शुक्तिविशेष्यकं रजतत्वज्ञानमित्यर्थः । रजतत्वज्ञाने शुक्तिविशेष्यकत्वमिति यावत् । ननु रजतत्वज्ञानं शुक्तिं विशेष्यीकृत्योत्पन्नमेवेति तच्च शुक्तिविशेष्यकत्वनिषेधबाधबाध्यः स्यादित्यरुचेराह रजताभेदो वेति । बाधबलेनेति । पूर्वज्ञानेनाभेदानव-

विषयः शुक्तिरजते वा अनयोस्तादात्म्यं वा शुक्तिरजतत्वयोः सामानाधिकरण्यं वा रजतत्वेन प्रकारेण शुक्तिर्वा ? नाद्यः समूहालम्बनेनाप्युपपत्तेः । न द्वितीयो सदतिप्रसङ्गात् । अत एव न तृतीयो निबन्धनात् । किन्तु दोषाणाम् प्रकृतकार्यप्रतिबन्धकत्वम् दृष्टम् नतु कार्यविशेषजनकत्वम् कथमन्यथा भ्रष्टात् कुटजबीजात् न्यग्रोधाङ्कुरो न जायते । ननु भेदाग्रहपक्षे नेदं रजतमिति ज्ञानेन किं बाध्यते इदमिति ज्ञानं वा रजतमिति ज्ञानं वा ? न तावदाद्यः इदन्तास्पदस्य

ननूपस्थिते पक्षे उपस्थितवन्ह्यसंसर्गाग्रह एव तद्विषय इत्यत आह प्रत्यक्षोपस्थित इति । तथाच तत्राप्यनुमिनोमीतीह वा साक्षात्कारोमीति व्यवहारस्य प्रसङ्गान्नेदं युक्तमिति भावः । वन्ह्यर्थिनिःकम्पप्रवृत्तिप्रतिबन्धकनिर्वन्हित्वकोटिस्वतन्त्रोपस्थितिप्रतिबन्धे लिङ्गासंसर्गाग्रहस्याप्रयोगान्न तदनुरोधेनानुमितिभ्रमसिद्धिरिति परिहरति एतदपीति । ततो वन्ह्यसंसर्गाग्रहात् नियमतः कोट्यन्तरासमुच्चिततया दूषणान्तरमुद्धरति अनुमिनोमीति । लिङ्गाद्व्यापकोपस्थितिः स्वीक्रियते न तु संसर्गोपस्थितिरपीति नान्यथाख्यातिः पीतः शंख इत्यादौ च लैङ्गिकव्यापकोपस्थितेरनङ्गी-

तदवस्थत्वात् । नेतरः रजतस्यापि न युक्तिसत्वात् । तस्माच्छुक्तौ रजतत्वज्ञानं निषिध्यते रजताभेदो वा उभयथापि बाधबलेनान्यथाख्यातिसिद्धिरिति । मैवम् । भेदाग्रहप्रसंजिताभेदव्यवहारस्य बाध्यत्वात् । ननु भेदाग्रहस्य प्रवर्तकत्वे सम्वादासम्वादलक्षणम् प्रवृत्तिवै-

---

कारान्नानुमिनोमीति व्यवहारप्रसङ्ग इति भावः । न केवलमन्यथाख्यातौ साधकाभावः किन्तु बाधकमप्यस्तीत्याह किञ्चेति । तृतीयेति । प्रकारत्वरूपतया तन्निर्वचने वा तस्योभयवैशिष्ट्यागर्भतया पूर्वोक्तासत्ख्यातिप्रसङ्गादिति भावः । ननु बाधानुपपत्तेरन्यथाख्यातेः साधकत्वान्न तावत्साधकाभावः नापि बाधकं प्रमाणमूलकतया सदुपरागेणासत्ख्यात्यभ्युपगमादिति शङ्कते ननु भेदेति । इदन्ताऽस्पदस्येति । बाधकज्ञाने रजतोल्लेखवैयर्थ्यापत्तेश्चेति द्रष्टव्यम् । रजतस्यापि न रजतमित्येव बाधाकारप्रसङ्गाच्चेति द्रष्टव्यम् । तस्माच्छुक्तौ रजतत्वज्ञानं शुक्तिविशेष्यकं रजतत्वज्ञानमित्यर्थः । रजतत्वज्ञाने शुक्तिविशेष्यकत्वमिति यावत् । ननु रजतत्वज्ञानं शुक्तिं विशेष्यीकृत्योत्पन्नमेवेति तत्र शुक्तिविशेष्यकत्वनिषेधबाधबाध्यः स्यादित्यरुचेराह रजताभेदो वेति । बाधबलेनेति । पूर्वज्ञानेनाभेदानव-

चित्र्यम् न स्यात् तस्माद्भेदगूहस्य संवादि-प्रवृत्तिजनकत्वमवश्यं वाच्यम् तथाचाननुगमः तदवस्थ एवेति । मैवम् । सत्यरजते रजतभेदा-गूहस्य संवादिप्रवृत्तिजनकत्वात् विपरीते रज-तभेदागूहस्य विसंवादिप्रवृत्तिजनकत्वादिति पूर्व-पक्षसंक्षेपः ।

अत्रोच्यते । रजतत्वप्रकारकज्ञानस्य रज-तव्यवहारकारणत्वमविवादम् तावत् तत्र व्यवहा-र्यविशेष्यकत्वेऽतिप्रसङ्गनिवारणार्थं भेदागूहोऽपे-

---

भासेऽप्रसक्तस्य निषेधानुपपत्तेरिति भावः । व्यवहार-स्येति । नेदं रजतमित्यस्येदं रजततया न व्यवहर्त्त-व्यमित्येवमर्थत्वादिति भावः । ननु भेदाग्रहः प्रवर्त्तक इत्ययुक्तम् तस्य प्रवृत्तिमात्रहेतुत्वे प्रवृत्तिगतसंवादवि-सम्वादरूपावान्तरवैलक्षण्यप्रयोजकस्य भेदाग्रहे वैल-क्षण्याभावेन तद्राकस्मिकतापत्तेः । विसंवादिप्रवृत्तौ चाभेदग्रहस्य हेतुत्वे प्रवृत्तित्वस्याकस्मिकतापत्तेः । न च भावाभावरूपयोस्तयोरनुगतमस्ति रूपं यत्पुरस्का-रेण तयोरेव सामान्यप्रयोजकता स्यात् । इष्टाभेदग्रहस्य तु प्रवर्तकत्वे सामान्येन प्रवृत्तित्वप्रयोजकत्वम् । स्वग-तसंवादविसंवादाभ्यां चावान्तरवैलक्षण्यप्रयोजकत्व-मिति सिद्धान्यथाख्यातिरिति शङ्कते ननु भेदाग्रहस्ये-

क्षणीयः सोऽपि न यस्य कस्यापि किन्तु रजतस्य । न चायं यत्र कुत्रापि किन्तु पुरोवर्तिनि तथा रजतप्रतियोगिकभेदग्रहाभावः पुरोवर्तिनि रजतव्यवहारनियामकमित्यभिमतम् तथा च पुरोवर्तिनि रजतभेदविषयकग्रहाभावस्य व्यवहारनियामकत्वमस्तु पुरोवर्तिनि रजतग्रहस्य वा । तत्राद्ये गौरवमतो द्वितीय एव ज्यायान् । न चै-

---

ति । तथाचाननुगम इति । प्रवृत्तित्वावच्छिन्न इतिशेषः । इष्टभेदाग्रहत्वेन प्रवृत्तित्वावच्छिन्ने स्वगतेष्टानिष्टविषयत्वास्यां च संवादिविसंवादिप्रवृत्तित्वावच्छिन्ने इष्टभेदाग्रहस्यैव प्रयोजकत्वान्नानुपपत्तिरित्याशयेन परिहरति मैवं रजत इति ।

पूर्वपक्षरहस्यं निरस्यन् विविनक्ति तावत् रजतत्वप्रकारकज्ञानस्येत्यादिनाभिमतमित्यन्तेन । अविवादमिति । अन्यथा रजतेच्छाया एवानुदये तस्येष्टताया अभावेनेष्टभेदाग्रहस्याप्यसम्भवादिति भावः । ननु तावता कथमन्यथाख्यातिसिद्धिः तस्य शुक्तिविशेष्यकत्वे बीजाभावादित्यत आह तन्नेति । रजतत्वप्रकारकज्ञान इत्यर्थः । अतन्त्रत्वे प्रवृत्त्यप्रयोजकत्वम् । यद्वा तत्र रजतव्यवहारकारणत्वे । अतन्त्रत्वे अप्रयोजकत्व इत्यर्थः । विविक्तमर्थन्दर्शयितुम-

वमन्यथाख्यातिस्वीकारे गौरवप्रसङ्गः प्रमाणवतो गौरवस्यापि न्याय्यत्वात् । न चान्यथाख्यातिकारणतया भेदाग्रहस्य स्वीकर्तव्यत्वात् तस्यैव व्यवहारे कारणत्वमस्त्विति वाच्यम् अन्यथाख्यातौ क्लृप्तायां तत्राग्रहकारणत्वकल्पनस्योचितत्वात् । नन्वेवं व्यवहारे तत्र ग्रहकारणताया-

---

नुवदति तथा चेति । आद्ये गौरवमिति । अभावद्वयागर्भत्वादिति भावः । न्याय्यानिति । अवच्छेदलाघवादिति भावः । नन्वतिरिक्तान्यथाख्यातिकल्पने गौरवं तावदस्तीत्याशंक्याह नचैवमिति । प्रमाणवत इति । प्रमाणप्रवृत्त्युत्तरकालोपस्थितिकस्य तस्य तदप्रतिबन्धकत्वादिति भावः । ननु तवावच्छेदकलाघववन्ममाप्यस्ति क्लृप्तकल्पनालाघवं सहकारीत्याशंक्याह न चान्यथाख्यातीति । तस्यैवेति । तद्धेतोरेवास्तु किं तेनेति न्यायादिति भावः । किमन्यथाख्यातिकारणतया क्लृप्तस्य कल्पनेति लाघवमभिधत्से उत प्रवृत्तिकारणतयेति विकल्प्याद्ये दोषमाह अन्यथाख्याताविति । तथा चान्यथाख्यात्यसिद्धौ भेदाग्रहस्य क्लृप्तत्वमेवासिद्धं तत्सिद्धौ तु तदभिधानमकिंचित्करमिति भावः । द्वितीये त्वसिद्धिरित्याह नन्वेवं व्यवहार इति । भेदाग्रहस्य कारणतया स्वीकर्तव्यमेवम्पदार्थः । येन क्लृप्त-

मेव विवादात् रजतज्ञानस्यावश्योपजीव्य-
त्वात्तदेव प्रवर्तकमस्तु तथापि प्रवृत्तिस-
मानविषयकत्वमुपजीव्यम् । सत्यरजतस्थले
तथैवायातमिति चेत् । न प्रवृत्तिसमानविषयक-
त्वस्यानुपजीव्यत्वेऽतिप्रसङ्गात् । न च तद्वारणार्थ-

---

कल्पना स्यादिति शेषः । नन्विष्टपुरोवर्तिभेदग्रहे
प्रवृत्त्यभावात्तदभावे च भावात्सामान्यतो भेदाग्रहस्य
प्रवृत्तिप्रयोजकत्वावगमाद्विवादिप्रवृत्तिस्थले क्लृप्तत्व-
लाघवावतारे किं बाधकम् । न च सत्यस्थले विशिष्टज्ञान-
प्रयुक्ता तस्य क्लृप्तताऽसत्यस्थले तु तदसिद्धेः क्व भेदा-
ग्रहक्लृप्ततेति वाच्यम् । तथा सति तद्धेतोरेवेति
न्यायस्य निर्विषयतापातात् । तत्पदार्थाकल्पने तद्धेतुतया
कल्पनीयस्याप्यसिद्धेः । तत्कल्पने तु धर्मिग्राहकप्रमा-
णविरोधेनान्यथासिद्ध्या च तत्कारणतानपवादकत्वा-
दिति चेत् । न पूर्वोक्तगौरव एव तात्पर्यात् । अत एव
निरस्तमपि भेदाग्रहपक्षमेतद्विशेषाभिप्रायेण पुनस्त-
द्भाव्यगौरवपराहत्यैव निराकरिष्यतीति द्रष्टव्यम् ।
ननु सत्यस्थले दृष्टत्वात्प्रवृत्तिसमानविषयत्वमपि
तन्त्रमत आह सत्यस्थल इति । तदेवेत्यवधारणेनोपजी-
व्यान्तरमात्रं निरस्यते उत समानविषयत्वमात्रम् ? नाद्य
इत्याह प्रवृत्तिसमानेति । द्वितीयमाशंक्य निरस्यति

मग्रह एवोपासनीयः । अन्तरङ्गन्यायेन समान-विषयत्वेनोपासनाया एवोचितत्वात् । न च सर्व-त्रोभयवादिसिद्धत्वादग्रहस्यैव कारणता न्याय्या विशिष्टज्ञानस्योभयवादिसिद्धत्वादिति वाच्यम् । न ह्युभयवादिसिद्धत्वं कारणत्वस्वीकारे प्रयोज-कम् किन्तु प्रमायाम् न च प्रमाणमग्रहं कारणत्वेन गोचरीकरोति । गौरवपराहतेरुक्तत्वात् । न च क्वचिद्विशेष्यासन्निकर्षेऽपि बहिर्विशेष्यकभ्रमस्वी-कारेण कारणबाधाद्द्ध इति युक्तम् । ज्ञाना-

---

न च तद्द्वारणार्थमिति । अन्तरङ्गन्यायेनेति । उभयसि-द्धेष्टज्ञानस्य विषयतामात्रं पुरोवर्तिनि कल्प्यते अन्यप्रवृत्तिसमानाधिकरणतया लाघवेनेत्यर्थः । फलोप-पादकापूर्वस्य तदाश्रये कल्पनवदिति भावः । केचित्तु जनकीभूताभेदज्ञानाविघटकत्वे भेदग्रहाप्रतिबन्धकतैव न स्यान्नतरां भेदाग्रहकारणतेति तद्वादिना गुरुणाप्य-भेदज्ञानमभ्युपगन्तव्यमित्यन्यथाख्यातौ साधकमाहुः । तन्न अप्रयोजकताया विधिप्रकरणे प्रपञ्चितत्वात् परेण तदनभ्युपगमाच्चेति । यदुक्तं भ्रमविशेषे विशेष्येन्द्रियसं-निकर्षस्य व्यभिचारादित्यादि तदुद्धरति न च क्वचिदि-त्यादिना । कारणबाधादिति । तद्विशेष्यसंनिकर्षत्वेन कारणत्वे निरस्ते तत्साक्षात्कारे तत्संनिकर्षत्वेन कारण-

न्तरेणोपनीते यहिर्विशेष्यकज्ञानसम्भवात् ज्ञातः परमाणुरित्यादौ बहिर्विशेष्यकज्ञानज्ञानस्यापि सम्भवात् । कार्यदर्शनस्योभयत्रापि समानत्वात् । न चानुमित्याद्युच्छेदप्रसङ्गः अत्र तृतीयलिङ्गपरामर्शस्थले विशेषस्योक्तत्वात् । न च स्थातन्त्र्योप-

तयोपरिस्थितस्य रजतसंनिकर्षस्य बाधादित्यर्थः । न स्थाणुः पुरुषो वेत्यत्रापि ज्ञानलक्षणविशेष्यसंनिकर्षसत्वान्न व्यभिचार इत्याह ज्ञानान्तरोपनीत इति । ननु ज्ञानस्य बहिर्विशेषणक एव परमाणुमहं जानामीत्यादौ संनिकर्षत्वं क्लृप्तं नान्यत्रेत्याशंक्याह ज्ञातः परमाणुरिति । नन्वेवं चाक्षुषप्रत्यक्षोपनीते पर्वतादौ स्मृत्युपनीतवन्हिसंसर्गो मनसैव परिच्छिद्यतां कृतमनुमित्या ज्ञानान्तरेणेत्याशंक्याह नचानुमितीति । विशेषस्येति । न हि ज्ञानान्तरोपनीतार्थविषये ज्ञानेऽनुमिनोमीतिव्यवहारोऽतिप्रसङ्गादिनेत्यर्थः । एतेन लाघवानुरोधेन विषयसंनिकर्षत्वेन कारणतामाश्रित्य तद्विषयसाक्षात्कारे तद्विषयसंनिकर्षस्य विशेषकारणस्य बाधेनान्यथाख्यातिनिराकरणं निरस्तम् ज्ञानलक्षणसंनिकर्षस्यारोप्ये रजतादावपि सम्भवात् । न च संयोगेन प्रत्यक्षस्थानं युक्तम् । निखातरजते गेहादौ ज्ञानान्तरोपनीतरजतविशेषणस्य [illegible]तवदिदमितिज्ञानस्य दुर्व-

स्थिता निष्टभेदाग्रहस्य निवर्तकत्वम् परस्पराभाव-
विशिष्टे शुक्तिरजते इति ज्ञानाच्छुक्तौ रजतार्थी न
निवर्त्तेत। किञ्च इमे रङ्गरजते इत्यत्र स्वातन्त्र्योप-
स्थितेष्टानिष्टभेदाग्रहस्य निवर्तकस्य विद्यमानत्वा-
त्किमिति न युगपत्प्रवृत्तिनिवृत्ती स्याताम्। न
च यत्र यन्निष्ठेन सादृश्येन यत्स्मारितम् तत्र
तद्भेदाग्रहस्य नियामकत्वमिति वाच्यम्। अनु-
भूयमानारोपे सत्यरजतस्थले च तदभावात्। नच

---

नादलौकिकज्ञाने संयोगस्यातन्त्रत्वात् इति। यथाश्रुते स्वातन्त्र्यपदार्थे दूषणमाह परस्पराभावेति। निरुक्ति निष्कर्षे तु दूषणमपि निष्कृष्टमुक्तमनुस्मर्तव्यम्। स्वतन्त्रोपस्थितेष्टानिष्टभेदाग्रहयोः प्रवृत्तिनिवृत्तिहेतुत्वे रजतरङ्गयोः क्रमेण रङ्गरजतभ्रमे एकैकत्रोभयभेदाग्रहसम्भवात्प्रवृत्तियौगपद्यापत्तिरित्याह किञ्चेमे रङ्गरजते इति। रजतरङ्गयोरिति शेषः। अत्रेति। भ्रम इति शेषः। विद्यमानत्वात् एकैकत्रेति शेषः। न चैतादृश-भ्रमे मानाभावः। अनेकज्ञानसामग्रीसमवधाने समूहालम्बनभ्रमसमूहालम्बनस्यापि दुर्वारत्वादिति भावः। ननु तन्निष्ठसादृश्यस्मारितेष्टान्यतरभेदाग्रहस्य तत्र प्रवृत्तिनिवृत्त्यन्यतरहेतुत्वम् इह च रङ्गनिष्ठेन सादृश्येन रजतमेव स्मारितं न रङ्गमिति तद्भेदाग्रहः सन्नपि

तत्र रजते रजतभेदग्रहो वा न चान्यथाख्यातौ रजतभेदासंसर्गाग्रहस्यैव रजतभेदग्रहार्थत्वादिति वाच्यम् । सत्यरजतस्थले रजतभेदासंसर्गाग्रहस्यापि विद्यमानत्वात्प्रवृत्तिदशायां तत्रापि निवर्तेत । शुक्तौ चेदं रजतमिति ज्ञानेऽपि रजतभेदासंसर्गाग्रहाद्युगपत्प्रवृत्तिप्रसङ्गात् । न च तत्र रजतभेदासंसर्गाग्रहः । अन्यथाख्यातिस्वीकारापत्तेः । न च तत्र रजतभेदासंसर्गाग्रहान्न निवृत्तिरिति वाच्यम् ।

---

न निवृत्तिहेतुः किन्तु रजतभेदाग्रह एव प्रवृत्तिहेतुरित्याशंक्याह न च यन्निष्ठेनेति । किमिदं विसम्वादिप्रवृत्त्योरेव नियामकमभिमतं प्रवृत्तिनिवृत्तिमात्रेति विकल्प्याद्ये आह अनुभूयमानेति । आरोप्यस्मरणस्यैवाभावादिति भावः । अन्त्येप्याह सत्येति । ननु रजते रङ्गभ्रमदशायां रजतभेदासंसर्गाग्रहसत्त्वात्तस्य च रजतभेदसंसर्गग्रहसमानशीलत्वेन न प्रवृत्तिरन्यथाख्यातिर्वा रजतभेदसंसर्गग्रहानभ्युपगमादित्याशंक्य निराचष्टे रजतभेदेति । तस्यापि रजतभेदकार्यकारित्वादिति भावः । निवर्तेतेति । न प्रवर्तेतेत्यर्थः । रजतभेदग्रहसमानशीलस्य रजतभेदासंसर्गाग्रहस्य प्रवृत्तिप्रतिबन्धकत्वादिति भावः । शुक्तौ चेदमिति ।

असंसर्गाग्रहस्य संसर्गातिरिक्तस्याभावात्। अग्रहस्य व्यवहारानुपपादकत्वादित्युक्तत्वात्। ननु किं विशेषनिष्टङ्कनेन तत्र यदेव भ्रमे नियामकं तदेव प्रवृत्तावस्तु। अन्यथा तव किमिति भेदज्ञानं न जायत इति। मैवम्। भ्रमनियामकस्य सत्यरजतस्थलेऽभावात्तत्र न प्रवर्तेत। सादृश्यं हि तथा। न च रजते रजतसादृश्यमस्ति

रजतत्वासंसर्गाग्रहात्प्रवृत्ते रजतभेदासंसर्गाग्रहाच्च तत्प्रतिबन्धकस्य प्रसङ्गादित्यर्थः। ननु शुक्ताविदं रजतमिति ज्ञानज्ञाने प्रवृत्तिप्रतिबन्धादर्शनाद्रजत भेदासंसर्गग्रह एव वाच्यः। न चान्यथाख्यातिप्रसङ्गः तत्समानशीलस्य रजतभेदासंसर्गाग्रहस्यैव तेन विवक्षितत्वादित्याशंक्याह न च तत्रेति। न निवृत्तिरिति। न प्रवृत्त्यभाव इत्यर्थः। अतिरिक्तस्य वक्रोक्त्ते रजतभेदसंसर्गाग्रहात् न निवृत्तिरित्यत्र पर्यवसानाद्रजते नेदं रजतमिति ज्ञाने न निवर्त्तेत। अन्यथाख्यातिभीतेन भवता रजतभेदसंसर्गाग्रहस्य वाच्यत्वादिति भावः। एवं भेदाग्रहस्य प्रवर्तकत्वे निरस्ते परः प्रतिविधत्ते ननु किं विशेषेति। यत्र भ्रमनियामकमस्ति तत्रास्तु प्रवृत्तिनियामकं विसम्वादिप्रवृत्तिस्थले तत्सत्वे एव किं प्रमाणमत आह अन्यथेति। ज्ञानमिति। विशेष्या-

रजते रजतसादृश्याभावात् भ्रमनियामकस्य भ्रमनिरूपणीयत्वात् । भ्रमस्य च त्वयानङ्गीकारात् अङ्गीकारे वा विवादपर्यवसानात् । उपजीव्यप्रमाणविरोधाच्च । न च तृतीयार्थानिर्वचनम् ।

---

दारोप्यस्येति शेषः । व्यभिचारेण दूषयति भ्रमनियामकस्येति । भ्रमापेक्षितस्य विशेषणाज्ञानादेस्तत्रापि सत्त्वमाशंक्याह सादृश्यं हीति । उपलक्षणमेतद्दोषाणाम् सत्यपि सादृश्ये तदभावे भ्रमाभावात्तत्सत्त्वे च सादृश्यस्य जलचन्द्रादिभ्रमेष्वनावश्यकत्वात् । न च रजत इति सादृश्यस्य भेदगर्भत्वादिति भावः । अस्तीत्यनन्तरम् रजते रजतसादृश्यस्याभावादिति क्वचित्पठ्यते तद्धेतुविभक्त्यनन्वयादुपेक्ष्यम् । यद्वा रजतेपि रजतान्तरसादृश्यसत्त्वादसिद्धिमाशङ्क्याह न च रजत इति । रजतत्वावच्छिन्ने व्यभिचारात्प्रवृत्तिवैजात्ये च मानाभावात् । न चैवम् भ्रमेष्वहेतुतापत्तिः । चक्षुरादिकरणाभेदप्रयोज्यजातिविशेषावच्छिन्नेषु भ्रमेषु चक्षुरादिदोषाणां नियामकत्वे बाधकाभावात् इत्यभिप्रेत्य द्वितीये दोषमाह भ्रमनियामकस्येति । उपजीव्येति । भ्रममनङ्गीकृत्य तन्नियामकत्वेन दोषादिकारणतया दुर्ग्रहत्वादिति भावः । यदुक्तं रजतत्वेन रूपेण शुक्तिरन्यथाख्यातिविषय इत्यत्र तृतीयार्थानिर्वचनम् त-

प्रकारस्यैव तत्त्वात् । न च प्रकारनिर्वचने दोषद्वयम् । उभयवादिसमाधेयत्वात् । न च दोषस्य प्रकृतकार्यप्रतिबन्धकत्वमात्रम् । दग्धवेत्रबीजात्कदलीकाण्डजननदर्शनात् । अन्यथा

त्निरस्यति न च तृतीयेति । ननु प्रकारकत्वमपि दुर्वचम् । तथाहि तत्र विशेष्यनिष्ठवैशिष्ट्यप्रतियोगित्वम् । भ्रमप्रकारेऽव्याप्तेः । रजतत्वादेः शुक्त्यादिनिष्ठवैशिष्ट्यप्रतियोगित्वस्याभावात् । भावे वा भ्रमत्वव्याघातात् । नापि तत्त्वेन भासमानत्वम् । तत्रात्तृतीयार्थभूतप्रकारनिर्वचने आत्माश्रयप्रसङ्गात् । यन्निष्ठवैशिष्ट्यप्रतियोगित्वम् यत्र भासते भासमानवैशिष्ट्यप्रतियोगित्वं वा इत्यपि न प्रमेयमितिज्ञानेपि घटत्वादेः प्रकारत्वप्रसङ्गात् । घटत्वे घटनिष्ठवैशिष्ट्यप्रतियोगित्वस्य वास्तवस्य प्रमेयत्वेन भानात् । भ्रमप्रकारेऽव्याप्तेश्च । न च यत्रेत्यस्य यन्निष्ठतयेत्यर्थः तृतीयार्थनिर्वचने आत्माश्रयस्योक्तत्वात् इत्याशङ्क्याह न च प्रकारेति । शुक्तौ रजतत्वेनाभानादिति तृतीयोल्लेखिव्यवहारस्य सर्वसाधारणतया तृतीयार्थभूतप्रकारत्वस्य त्वया निर्वाच्यत्वान्न ममैवायम् पर्यनुयोग इत्याह उभयेति । ननु दुष्टत्वे नष्टे वेत्रबीजं नष्टमेव दाहादिति न कदलीकाण्डजनकम् किन्तु तद्भस्मावय-

दोषाणां तत्त्वे तथापि कथं विसंवादिनी प्रवृत्तिः स्यात् । न च ज्ञानस्यायथार्थत्वे समाश्वासाभावः । विसंवादिप्रवृत्तिजनकत्वेनोभयवादिसमाधेयत्वात् । न च भेदाग्रहप्रसञ्जिताभेदव्यवहारस्य बाध्यत्वम् व्यवहारो हि प्रवृत्तिर्वा शब्दप्रयोगो वा ? नाद्यः । न हि नेदं रजतमिति ज्ञानं प्रवृत्तिं बाधते प्रवृत्तेस्सर्वत्र भावात् नापि प्रवृत्तियोग्यताम् अशक्यत्वात । न द्वितीयः । नहि नेदं रजतमितिज्ञानस्य पुरोवर्त्तिनि रजतशब्दप्रयोगो नास्तीति विशेषः अनुभवविरोधात । न च रजतभेदाप्रकारकं पुरोवर्त्तिज्ञानं रजतोपस्थितिसहायं पुरोवर्त्तिनि प्रवर्तयति पुरोवर्तिज्ञाने वा ये भेदा भासन्ते तेष्वेव रजतप्रतियोगित्वं

---

वास्ते चादुष्टा एवेत्यत आह अन्यथेति । ननु क्वचिदपि ज्ञानस्यायथार्थत्वे तच्छङ्कया विश्वासो न स्यात्तद्धेतुप्रामाण्यानुमितेरपि तच्छङ्काकवलितत्वादित्याशङ्क्याह न च ज्ञानस्येति । सर्वत्रोपेक्षाज्ञानादौ । अशक्यत्वादिति । बाधोत्तरकालम् पुनर्भ्रमान्तरात्तत्रैव प्रवृत्तिदर्शनादिति भावः । परैकदेशयभिमतं प्रवृत्तिहेत्वन्तरमाशङ्क्य निराचष्टे न च रजतभेदेति । उपस्थिते-

न गृह्यत इत्येवं वा प्रवर्तते। अग्रहशब्देन पर्युदासमर्यादया ग्रहविशेषस्यैव विवक्षितत्वादिति वाच्यम्। सत्यरजतेपि नेदं रजतमिति कृत्वापि प्रवर्त्तेत। न हि तत्र पुरोवर्त्तिज्ञानम् रजतभेदप्रकारकम् नवा तज्ज्ञानविषयो भेदो रजतप्रतियोगित्वेन गृह्यते। अन्यथाख्यातिस्वीकारापातात्। किञ्च कोऽसौ भेदो यस्याग्रहो व्यवहारयति। न तावत्स्वरूपम्। इदं रजतमित्यत्र स्वरूपग्रहस्य विद्यमानत्वात्। नापि वैधर्म्यम्। वैधर्म्यस्य किं स्वरूपेणाग्रहो भेदाग्रहो वैधर्म्येण वा? न तावदाद्यः वस्तुगत्या यद्वैधर्म्यम् तद्ग्रहेपि व्यवहारस्यदर्शनात्। नापि द्वितीयः। वैधर्म्यस्यात्यन्ताभावत्वेन निर्वचनात्। अत्यन्ताभावस्य स्वरूपादन्यस्य स्वयानङ्गीकारात्। किञ्च यत्किञ्चिद्वैधर्म्यस्य सर्वत्र ग्रहात् तदीयत्वेन विशे-

---

ष्टभेदवैशिष्ट्यानवगाहि पुरोवर्त्तिज्ञानमित्यर्थः। पुरोवर्त्तीति। रजतत्वप्रतियोगिकत्वग्रहविषयभेदाविषयं पुरोवर्त्तिज्ञानं यदा भवति एवं सति वा प्रवर्त्तेत इत्यर्थः। नन्वेवं भेदाग्रहः प्रवर्त्तक इति सिद्धान्तविरोध इत्यत आह अग्रहशब्देनेति। वस्तुगत्येति। तैलत्व-

षयोऽननुगमात् । नाप्यन्योन्याभावः तस्य त्वयानभ्युपगमादिति । किन्तु भेदाग्रहस्य प्रवर्त्तकत्वम् सत्यरजतस्थले न सम्भवति । तथाहि तत्र पुरोवर्तिना रजतभेदस्याग्रहो वाच्यो येन केनापि वा ? नान्त्यः । अतिप्रसङ्गात् अन्यभेदग्रहेपि प्रवृत्तिदर्शनात् । नाद्यः । अप्रसिद्धेः । नापि पुरोवर्तिरजतत्व-प्रकारकभेदग्रहस्याभावः सामान्यरूपेणोपस्थिते रजते रजतत्वप्रकारकभेदाग्रहस्याभावेपि प्रवृत्ते-र्दर्शितत्वात् । न च तत्र रजतत्वेन रूपेण पुरो-

---

रूपजलवैधर्म्यग्रहेपि नैलं जलमिति व्यवहारदर्शनादि-त्यर्थः । वैधर्म्यस्येति । रजतादिनिष्ठात्यन्ताभावप्र-तियोगिधर्मत्वस्यैव वैधर्म्यपदार्थत्वादित्यर्थः । ननु त-दीयस्वरूपान्यत्वस्य वैधर्म्यनिर्वचनेनुपयोगादत्यन्ताभा-वस्य चाङ्गीकारान्न दोष इत्यत आह किञ्चेति । नन्विष्टवैधर्म्याग्रहः प्रवृत्तिमात्रे हेतुरनुगत एवान्यथेष्टाभेदग्र-हपक्षेप्यननुगमप्रसक्तेः कथं नानुगम इत्यरुचेराह किन्त्वि भेदाग्रहस्येति । अतिप्रसङ्गादिति । पुरोवर्त्तिना समं भेदग्रहेप्यन्येन येन केनापि समं भेदाग्रहसत्त्वेन प्र-वृत्तिप्रसङ्गादित्यर्थः । भेदग्रहमात्राभावो विवक्षित इ-त्याशङ्क्याह । अन्यभेदेति । तथा च तत्र व्यभिचा-

वर्त्युपस्थितिरेव न निवृत्तेति वाच्यम् । विशिष्टज्ञानत्वेन प्रयोजकत्वस्वीकारात् । न च चाकचिक्यादिना रजतोपस्थितौ रजतार्थिप्रवृत्तेः कारणमिति वाच्यम् । गेहे रजतमिति वाक्यादपि प्रवृत्तिदर्शनात् । तत्र चाकचिक्यादेरभावात् । नापि पुरोवर्त्तिनि रजतप्रकारको यो भेदग्रहस्तस्याभाव इति वाच्यम् । अन्यथाख्यातिस्वीकारप्रसङ्गात् अप्रसिद्धत्वाच्च । तस्माच्छुक्तौ रजतमेवेदं प्रतीयते तत्र चेष्टसाधनतामनुमाय रजता-

रान्न स हेतुरिति भावः । सामान्येनेति । इदं प्रमेयत्वेनेत्यर्थः । इष्टतावच्छेदकरूपेणोपस्थितेः सहकारित्वेनाभ्युपगमादिति भावः । नन्विष्टतावच्छेदकरूपेण पुरोवर्त्युपस्थितेः सहकारिभावादप्रवृत्तावपि भेदाग्रहकारणत्वमप्रत्यूहमेवेत्याशङ्क्याह न च तत्रेति । ननु न ब्रूमो रजतत्वेन पुरोवर्त्युपस्थितिरपेक्षितेति येनान्यथाख्यातिप्रसङ्गः किन्तु तद्गतचाकचिक्यादिप्रकारिका तदुपस्थितिः न च सामान्येन रजतज्ञानस्थले सति न प्रवृत्तिप्रसङ्ग इत्याशङ्क्याह न चाकचिक्यादिनेति । रजतपदं सत्यस्थलाभिप्रायम् । शाब्दरजतज्ञानस्य चाकचिक्याप्रकारकत्वात्तदुपस्थितिर्व्यभिचारान्न प्रवृत्तिहेतुरित्याह । गेहे रजतमिति । न चेष्टतावच्छेदकरूपेणोप-

र्थी प्रवर्त्तते । न तु रजतभेदाग्रहात्सादितेष्टसाधनभेदाग्रहेण इति संक्षेपः ।

इत्यन्यथाख्यातिप्रकरणम्

स्थितेष्टभेदग्रहाभाव उपस्थिते पुरोवर्त्तिनि प्रवर्तक इत्यत्र न दोष इति वाच्यम् । पूर्वोक्तगौरवस्यैव मूलबाधकस्यानुसरणीयत्वादिति भावः । अप्रसिद्धत्वाच्चेति । चोविकल्पार्थौ । रजतभेदग्रहात्सादितेति । यद्यपि शुक्तीष्टसाधनोपस्थित्योरिष्टसाधनभेदाग्रहस्य च प्रागपि सत्त्वान्न रजतभेदाग्रहस्तत्रोपयुज्यते तथापि निःकंपप्रवर्तकोपस्थितेष्टसाधनभेदाग्रहो रजतभेदाग्रहायत्त एव । प्राक्तन्या इष्टसाधनोपस्थितेः स्वतन्त्रानिष्टसाधनतोपस्थितिप्रतिपक्षितत्वेनाकिञ्चित्करत्वादिति भावः ॥

इतिश्रीसकलसामन्त० अन्यथाख्यातिप्रकरणम् ॥

—:o:—

इहार्थापत्तिमनुमानातिरिक्तम् प्रमाणमिति परे मेनिरे। तेषामयमाशयः। जीवतश्चैत्रस्य गेहाभावदर्शनेन बहिःसत्त्वम् प्रतीयत इति तावत् सर्वानुमतम्। तत्र न गेहाभावो हेतुः व्यधिकरणत्वात्। न च जीवित्वगृहाभावबहिःसत्त्वयोर्व्याप्तिसन्धानम् सर्वेषाम्। कथं चेन्द्रियासं-

अनुपपत्तिज्ञानस्य प्रमाणान्तरत्वम् निराकरिष्यन्ननुपपत्तिज्ञानत्वमनुभवत्वसाक्षाद्व्याप्यजात्यवच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकम् न वेति विचाराङ्गसंशयजननीं विप्रतिपत्तिमाह। अर्थापत्तिरिति। मेनिरे मीमांसकादय इति शेषः। द्वे ह्यर्थापत्तिः श्रुतार्थापत्तिर्दृष्टार्थापत्तिश्च। तत्राद्या प्रमितानुपपत्तिरित्येके। प्रमाणविरोधाभासज्ञानमित्यपरे। तर्कविषय इत्यन्ये। संशयविशेष इत्यपरे। श्रुतपदार्थानामन्वयप्रतीत्यनुपपत्तिः श्रुतार्थापत्तिः। आभिप्रायिकपदविशेषकल्पना फलम्। तत्रानुपपत्तिरूपाया दृष्टार्थापत्तेरनन्यथासिद्धप्रमारूपफलकरणतया प्रमाणान्तरत्वव्यवस्थापनाय फलासत्त्वम् तावन्निराचष्टे जीवतश्चैत्रस्येति। अनुपपद्यमानदर्शनत्वेन व्याप्यदर्शनत्वेन वेत्यत्र तु विवाद इति तावच्छब्दार्थः। नन्वनुमानेनान्यथासिद्धम् फलमेतदत आह तच्च नेति। देवदत्ते पक्षे

न्विकृष्टे देवदत्ते हेतोः पक्षधर्मताग्रहः । न च तां विनानुमानमतिप्रसङ्गात् । एवं पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्रापि तावन्निशाभोजनम-

बहिःसत्त्वेऽनुमेयेऽभावस्य गेहनिष्ठतया व्यधिकरणत्वाद-पक्षधर्मत्वादिति यावत् । ननु गृहनिष्ठाभावप्रतियोगित्वम् हेतुः स च देवदत्तवृत्तिरेवेत्यस्वेराह न चेति । तथाच यस्य व्याप्यप्रतिसन्धाने बहिःसत्त्वज्ञानम् तत्र कारणान्तरानुपपत्तेरर्थापत्तिरेव करणमिति भावः । किञ्च निरुक्तरीत्या पक्षधर्मतोपपादितापि न स्वरूप-सत्यनुमितिहेतुः किन्तु तज्ज्ञानम् तच्चासम्भवीत्याह कथं चेन्द्रियस्येति । न चैवं स्मृते पर्वतादौ वन्ह्याद्य-नुमानं न स्यादिति वाच्यम् । तत्र धूमत्वस्यापि पूर्वानुभूततया स्मृतिसम्भवात् । तृतीयलिङ्गपरामर्शस्य च मयाऽनङ्गीकारात् । इह च देवदत्तस्य गृहनिष्ठाभाव-प्रतियोगित्वेनाननुभूतत्वेन स्मरणस्याप्यसम्भवात् । यद्वा तत्रापि पर्वतवृत्तितया स्मृते धूमे वन्हिं विना-नुपपत्तिज्ञानादर्थापत्तिविधयैवास्तु वन्हिसिद्धिः । क्लृ-प्तकरणाभावस्थलीयसिद्धेरर्थापत्तिकल्पकायास्तुल्य-त्वादिति भावः । श्रुतार्थापत्तिं व्यवस्थापयितुं तत्फ-लमाह एवमिति । इत्यत्र वाक्ये श्रुते इति शेषः । निशाभोजनमिति । तथाच निशि भुङ्क्त इति तत्प्रति-पादकवाक्यकल्पनमर्थापत्तिफलमिति भावः । नन्वन्य

नुभूयते । न चात्रापि व्याप्त्यादिग्रहनियम इति पूर्ववदूहनीयम् । ननु बहिःसत्त्वमात्रम् विनानुपपत्तिः देवदत्तबहिःसत्त्वम् विना वा ? नाद्यः । एवं हि बहिःसत्त्वमात्रम् कल्प्येत न तु देवद-

---

त्तसिद्धित्वान्नैतत्फलं श्रुतार्थापत्तिं गमयति नापि निशाभोजनज्ञानमेव शब्दप्रतीतेन दिवा भुंजानत्वे सति पीनत्वेन दृष्टार्थापत्तिविषया वा तत्सक्षम वादित्याशङ्क्याह न चात्रापीति । आदिपदेन हेतु पक्षधर्मताग्रहः । अयमाशयः । स्यादप्यनुमानान्निशाभोजनसिद्धिर्यदि वाक्याद्दिवा भुंजानत्वे सति पीनत्वस्य हेतोः प्रतीतिः स्यात्सैव तु न अभोजी पीन इतिवद्बाधात् । ननु युक्तं भोजनमात्रसाध्यं पीनत्वम् तन्निषेधो बाधान्न प्रतीयत इति, इह तु दिवाभोजनं विशेष एव निषिद्ध्यत इति पीनत्वप्रतीतौ को विरोध इति चेत् । न अन्यतरविशेषबाधे सामान्यप्रमापकस्य विशेषान्तरोपस्थितिसाहाय्यनियमात् कल्पमाना चोपस्थितिः यद्यर्थस्यैव न तर्हि शब्दसहकारिणी स्यात् । शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यतीति न्यायात् । अतो योग्यताघटकरात्रिभोजनोपस्थापकं रात्रौ भुङ्क्त इतिवाक्यं कल्प्यत इति तदिदमाह ऊहनीयमिति । ननु किं निरूपणेन स्वरूपसत्यैवानु-

त्तस्य । द्वितीये तदीयम् बहिःसत्त्वम् प्रतीतमप्रतीतम् वा ? आद्ये किमर्थापत्त्या परिच्छेद्यम् । तदीयबहिःसत्त्वस्य प्रमाणान्तरादेव सिद्धेः । द्वितीये तु कथमप्रतीतेनानुपपत्तिनिरूपणम् । न चानिरूपिता वानुपपत्तिः कथम् गमिकाऽतिप्रसङ्गात् । अनुमानन्तु पक्षधर्मताबलाद्विशिष्टबहिःसत्त्वसाधकमिति न तत्रानुपपत्तिरिति । मैवम् । विशकलितेनैव बहिसत्त्वादिनानुपपत्तिनिरूपणादिति विशिष्टावगमस्त्वर्थापत्तेरेव फलम् ।

---

पपत्तिः करणमस्त्वत आह नचानिरूपितेति । अतिप्रसङ्गात् तदज्ञानेपि कल्पनाप्रसङ्गात् । अर्थापत्त्याभासोच्छेदप्रसङ्गश्चेति द्रष्टव्यम् । यथा सामान्यतो वन्हिव्याप्यतयावगतो धूमः स्वाश्रयतया ज्ञाते सामान्यतो वन्हिं साधयत्येव वन्हिविशेषसिद्धिश्शब्दार्थो न तु पर्वतीयवन्हित्वादिना तथेह बहिःसत्त्वसामान्येन विनानुपपन्नतया ज्ञातं जीविगृहासत्त्वं देवदत्तप्रवृत्तितया ज्ञातमिति तत्र बहिःसत्त्वं सामान्यतः साधयद्देवदत्तीयबहिःसत्त्वे पर्यवस्यति न तु तेन रूपेणेति न तत्प्रतीतेः प्रागुपयोग इत्याह मैवं विशकलितेत्यादिना । प्रत्यक्षदृष्टप्रागुक्तश्रुतार्थापत्तिवाक्यार्थानुपपत्ति-

एवम् दिवाभोजित्वे सति तेनैव पीनत्वानुपपत्तिनिरूपणम् रात्रिभोजनन्तु तेन क्वचिदपि न प्रतीतमतएव नानुमानता साध्याप्रसिद्धेः । भोजनन्तु पुष्टिकारणन्तथा क्लृप्तम् समयान्तरमादाय विश्राम्यति । विरोधप्रतिसन्धानमेव वा कारणम् तदेवार्थापत्तिपदवाच्यम् । फलम् पुनरस्य सामान्यप्रवृत्तविशेषप्रवृत्तप्रमाणयोर्भिन्न-

---

रूपदृष्टार्थापत्त्यन्तरमुपादाय प्रकारान्तरेणाप्यनुपपत्तिनिरूपणमुपपादयति एवमिति । अभोजित्वेनैवानुपपत्तिनिरूपणमिति । भोजनकर्तृत्वेन विनैवानुपपत्तिनिरूपणं न रात्रिभोजनकर्तृत्वेनेत्यर्थः । कुत इत्यत आह रात्रिभोजनन्त्विति । अस्मिंश्च पक्षेऽनुमानशंकापि नेत्यर्थः । अत एवेति । तदेव विवृणोति साध्येति । ननु भोजनकर्तृत्वेनैवानुपपत्तिनिरूपणे भोजनकर्तृत्वमात्रं कल्पयेत न रात्रिभोजनकर्तृत्वमत आह भोजनमिति । दिवाभोजनबाधे भोजनसामान्यप्रतीतेस्तदितरविशेषप्रकारकत्वस्वीकारादिति भावः । सामान्यविशेषग्राहकमानयोर्विरोधाभासज्ञानमर्थापत्तिरिति मतमुपपादयति । विरोधेति । जीवी क्वचिदस्तीति सामान्यमुखप्रमाणस्य ग्राहिणा सह विरोधप्रतिसन्धानमित्यर्थः । करणस्य क्रियानिरूप्यत्वान्नामाह फलं पुनरिति ।

विषयतया विरोधबुद्धिः ।

अत्र कैश्चिदुक्तम् विरुद्धधर्माध्यासप्रतिसन्धानादेवानयोर्भिन्नविषयत्वं सिद्धमिति किमर्थापत्त्या । न च विरुद्धधर्माध्यासासिद्धिः । अस्तित्वनास्तित्वलक्षणस्य तस्यानुभवसाक्षिकत्वात् । अन्यथा विरोधप्रतिसन्धानानुपपत्तिरिति ।

तदपि न । सामान्यतो भेदावगमेपि गृहान्यत्वेन न गृहभिन्नतापरिच्छेदः क्वचिदस्तीति प्रमाणे अर्थापत्त्यधीनत्वात् । विरोधसम्भावना वा प्रामाण्यसम्भावना वा विरुद्धयोः करणम् । तदेवार्थापत्तिस्थाने निवे-

---

अस्मिन् पक्षे न्यायैकदेशिदूषणमुद्धर्तुमनुवदति अत्र कैश्चिदिति । विरुद्धार्थग्राहकयोरेकविषयत्वेऽर्थयोर्विरोधो वा ग्राहकयोः प्रामाण्यं वा न स्याच्छुक्लः पट इति वत्पीतः शंख इतिवद्वेति भावः । अन्यथेति । प्रमाणयोः स्वरूपेण विरोधाभावादिति भावः । इमे भिन्नविषये विरुद्धविषयप्रमाणत्वादित्यनुमितौ विषयभेदमात्रविषयीकरणेपि क्वचिदस्तीति प्रमाणे गृहभिन्नविषयताया अविषयीकरणात्तत्प्रकारकप्रतीत्यर्थमर्थापत्तिस्वीकार इत्यर्थः ।

शनीयम् । तर्क एव वा बहिःसत्त्वादिकल्पकोऽस्तु एवं हि सः यदि देवदत्तो बहिरसन् स्यात् जीवित्वे सति गृहेऽसन्न स्यादिति । यद्वा सत्त्वग्राहकं प्रमाणम् यद्यभावग्राहकप्रमाणसमानविषयकम् स्यात्तदाऽप्रमाणमेव स्यादिति प्रतिसन्धानमेवात्र कारणम् व्यवस्थितमनुमापकमवस्थितम् कल्पकमिति वचनादिति ।

अत्रोच्यते । काऽसावनुपपत्तिर्यस्याः कार-

---

तर्कविशेष एवार्थापत्तिरिति मतमुपन्यस्यति तर्क एव वेति । अत्र वाशब्देनानास्थांसूचयन्प्रसिद्धवह्न्यनुमानादेरपि तर्कानवतारे प्रयोजकतया तदवतारे च तस्यैव वह्निकल्पकतया प्रामाण्योच्छेदापत्तिमस्वरसमभिप्रैति देवदत्त इति । जीवी गृहाद्भिन्न इति शेषः । अतो नेष्टापत्तिः । यद्यभावग्राहकेति । स्वग्राह्याभावग्राहकप्रमाणसमानविषयं स्यादित्यर्थः । तेन न व्यभिचार इति ध्येयम् । अस्मिन्पक्षे आकरसंमतिमाह व्यवस्थितमिति । निश्चितमित्यर्थः । अव्यवस्थितं तर्कितमात्रमित्यर्थ ।

व्याप्त्याद्यनवगमेऽनुपपत्तिज्ञानायोगात्तदवगमे च क्लृप्तात्तत एव फलसिद्धेर्नार्थापत्तिः प्रमाणान्तरमिति सिद्धान्तयति काऽसाविति । गृहनिष्ठाभावप्रतियोगित्वग्र-

सात्त्वम् व्याप्तिपक्षधर्मत्वावगमं विना बहिः-सत्त्वम् विना जीविनो गृहासत्त्वाभावः सेति सेत्स्यतीति । नन्वयमविनाभाव एव इयमेव च व्याप्तिस्तथाचानुपपत्तिर्व्याप्तिरित्येक एव पदार्थ इति नाममात्रपरिवर्तः । एतेन व्यतिरेकिमानमर्थापत्तिरित्यपि निरस्तम् । व्यतिरेकिणोऽपि व्याप्तपक्षधर्मताधीनत्वसम्भवात् । तथापि पुनरपि नामान्तरकरणमेव । न च लिङ्गाभावाद्नानुमानता । गृहासत्त्वस्यैव लिङ्गत्वात् । न चापक्षधर्मता । गृहनिष्ठाभावप्रतियोगित्वस्यैव तदर्थत्वात् । न चासंनिकृष्टे कथं तद्ग्रह इति वा-

---

हस्येति । बहिःसत्त्वेन विनानुपपत्तितया ज्ञानस्य देवदत्तावृत्तितयाऽज्ञाने तत्र बहिःसत्त्वकल्पनानुपपत्तेरिति भावः । कथं पुनस्तत्र तद्ग्रह इति चेत् । किमनेनैवानेन पृष्टेन । इह घटो न पटो नेत्यादावपि किमभावप्रतीतिकाले प्रतियोगीन्द्रियसंनिकर्षो येन तत्र तत्सुग्रह स्यात् । नन्वस्त्येव ज्ञानलक्षणः कथमन्यथा प्रतियोगिरूपविशेषणसंनिकर्षाभावे तद्विशिष्टाभावसाक्षात्कारः जन्यसाक्षात्कारमात्रे विशेषणसंनिकर्षस्य हेतुत्वादिति चेत् । कृतमुरारं कृतमधिकेन । तत एव सन्निकर्षात्तद्गतप्र-

च्यम् । उभयवादिसमाधेयत्वात् । अर्थापत्तिवा-
दिनापि गृहनिष्ठाभावप्रतियोगित्वग्रहस्याभ्युपे-
यत्वात् यथा पुनरसन्निकृष्टे लिङ्गपरामर्शस्त-
थोक्तं तृतीयलिङ्गपरामर्शस्थले । न च क्व-
चिदस्तीति प्रमाणस्य गृहगोचरतासम्भावनया
गृहासत्त्वम् सन्दिग्धम् सत्कथं लिङ्गमिति
वाच्यम् । गृहासत्त्वस्य सन्दिग्धत्वे हि कथमनु-
पपत्तिप्रतिसन्धानम्परस्यापि । एवं जीवत्वसं-
शयेपि अन्यथा मरणकल्पनापत्तेः । जीविनो
गृहासत्त्वम् व्यवस्थितम् हि सत्त्वम् विनानुपपन्नं

तियोगित्वभानसम्भवात् प्रतियोगित्वस्याभावविशिष्टे-
ष्टत्वाच्च न तस्य पूर्वोपस्थित्यपेक्षेति । नन्वनुमानो-
च्छेदकत्वेन ज्ञानस्यासंनिकर्षत्वादसन्निकृष्टे देवदत्तादौ
कथं तृतीयलिङ्गपरामर्शोदय इत्यत आह यथेति ।
हेतौ विशेष्यासिद्धिमाशंक्य निराचष्टे न च क्वचिदिति ।
तत्सन्देहदशायां नैवानुमानं न वार्थापत्तिः किन्तु तन्नि-
श्चयदशायां तत्र च युक्त्यैवानुमानेनार्थापत्तेः कृतार्थते-
त्याह गृहासत्त्वस्येति । विशेषणासिद्धिशङ्कायामुक्त-
परिहारमतिदिशति एवमिति । कल्पकानिश्चयदशायां
नार्थापत्तिरित्यत्र तदाकारं संवादयति जीविनो

न तत्कल्पकमिति हि तद्दर्शनम् । किन्तु क्वचिद्स्तीति प्रमाणस्य गृहविषयता सन्दिग्धा गृहे नास्तीति प्रमाणम् गृहासत्त्वनिश्चायकं तथाच तेनैव तत्संशयनिरासः निश्चिते संशयाभावात् । अन्यथा संशयानुच्छेद्यता स्यात् । न च विरोधप्रतिसन्धानमर्थापत्तिः क्वचिदस्ति गेहे नास्तीतिप्रमाणयोर्विरोधाभावात् । तथापि तत्प्रतिसन्धानमस्तीति चेत् । अस्त्वेवमपि नानुमानातिरेकः । तथाहि कोऽसौ विरोधः ? अस्तित्वना-

---

गृहासत्त्वं व्यवस्थितमिति । निश्चितमित्यर्थः । सन्दिग्धेति । । विषयान्तरे सावकाशत्वादिति भावः । तेनैवेति । निरवकाशत्वादिति भावः । प्रतिसन्धानं प्रमा ज्ञानमात्रं वा ? आद्ये आह क्वचिदिति । अन्त्यं शङ्कते तथापीति । सत्त्वप्रमापकं गृहभिन्नसत्त्वविषयं गृहासत्त्वप्रमापकविरुद्धत्वात् देवदत्तो गृहे नास्तीति प्रमाणवदिति व्यतिरेकिणैव गृहभिन्नविषयतासिद्धेर्न विरोधप्रतीतिः प्रमाणान्तरमित्याह अस्तित्वादि । ननु नाश्यनाशकभावविरोधशालिनामपि धारावाहिकानामभिन्नविषयत्वात्कथमनुमानमित्याशङ्कमानं प्रति तन्मुखेनैवान्यथा विरोधं निर्वाचयितुं पृच्छति कोऽसाविति । अपरोऽपि विदिताशयः सहानवस्थितविषयत्वं

ङ्गितत्वयोः सहानवस्थानमिति चेत् सहावस्थान मेव तयोर्न कुतः ? वैपरीत्यनियमादिति यदि तथा च व्याप्तिप्रतिसन्धानमावश्यकमिति न किञ्चि देतत् । अस्तु तर्हि संशयः कारणम् । तथाहि शतवर्षजीविश्चम् ज्योतिःशास्त्रादवगतम् जीवी गृह एवेति व्याप्तिरुपलब्धा । अनन्तरम् गेहे देवदत्ता भावमुपलभ्य सन्दिह्यते स च संशयो लाघवाख्य

प्रमाणयोर्विरोध इत्याह ङ्गितत्वेति । कल्पकासिद्धिं शङ्कते सहानवस्थानमिति । भिन्नवृत्तितानियमदर्शनान्नानुमानमित्याह वैपरीत्येति । यद्यपि हेतूकृतविरोधान्तर्गतनियमोपपादनमिदं नानुमेयभिन्नविषयतानुमित्युपयोगि तथाप्येवम्भूतहेतुनिश्चये स विरोधो भिन्नविषयतां विनानुपपन्न इति निश्चितं तदा भिन्नविषयताकल्पनमसिद्धमेव यदि निश्चितं तदानुपपत्तेर्व्याप्तिरूपतया तत्प्रतिसन्धानमावश्यकमित्यर्थः । अत एवानुपपत्तिपर्यन्तधावनस्यावश्यकत्वे पक्षान्तरत्वमपि गतमित्याशयेनाह न किञ्चिदेतदिति । ननु संशयस्य करणत्वे गतं तद्विषये प्रमाणगवेषणायेत्याशंक्याह तथाहीत्यादि । ज्योतिःशास्त्रादिति । तदुक्तलिङ्गादित्यर्थः । प्रयोजकत्वमात्रे वा पंचमी । उपलभ्य प्रमाय । संदिह्यत इति । नियमद्वयप्रामाण्ये

तर्कं सहकारिणमासाद्य बहिःसत्त्वमवधारयति । न च मरणमेव किमिति न कल्प्यत इति वाच्यम् क्वचिदवधारिततादृशजीवित्वग्राहकप्रमाणद्वयबाधप्रसङ्गात् । बहिःसत्त्वकल्पने गृह एवेति नियमग्राहकमेव मानं बाध्यत इत्यस्ति लाघवमिति । नैवम् । संशयस्य कारणत्वे मानाभावात् । अनयोरेकं प्रमाणमस्तीति सामान्यतो दृष्टे क्लृप्त एव हि प्रमाणे लाघवं सहकारि भवतु । अन्यथा फलनिःसरणाभावात् । अन्यथा अन्यत्राप्येवंविधचरणप्रसारिकया संशय एव करणं स्यादिति गतं प्रमाणान्तरवार्तया । न च तर्हि तर्कः करणं विपर्य-

पुरुषेणेति शेषः । स चेति । यथोक्तसामग्रीप्रभवः संशयविशेष इत्यर्थः । जीवनसंशयद्वारेति शेषः । जीवनबहिःसत्त्वमरणसंशयापादकस्य तस्यैव कथं बहिःसत्त्वनिश्चायकत्वमत आह लाघवाख्यमिति । ननु मरणाद्बहिःसत्त्वमपि गृहान्योन्याभावसमानाधिकरणत्वरूपमभावगर्भमेवेति न लाघवे विशेष इत्याशङ्कमानं प्रत्याह नचेति । क्लृप्तप्रमाणादेव फलसिद्धेर्न संशयः प्रमाणान्तरमित्याह संशयस्येति । एकं प्रमाणमिति । अन्यतरदप्रमाणमित्यर्थः । बाध्यत्वादिति शेषः । नन्वत्र तदवतारे न

यपर्यवसानादेव साध्यसिद्धिः । एवं पक्षान्तरेऽपि शंक्यनिरसनमिति सर्वं समञ्जसमिति ।

इति अर्थापत्तिनिरासप्रकरणम् ।

---

मानमत आह अन्यथेति । अनियतैकप्रामाण्यप्राप्तावेव विनिगमकलाघवावतारेण बहिःसत्त्वसिद्धिर्नान्यथेति भावः । पक्षान्तरं जीवनसंशयादिरूपम् ।

इति श्रीसकलशानन्त० अर्थापत्तिप्रकरणम् ।

(१)भावत्वस्य प्रमेयत्वव्यापकतां निराकरिष्यंस्तयैव विप्रतिपत्तेः संशये स्वपक्षमुपपादयते अभाव इति । घटादिरूपत्वेपि भेदान्तरत्वनिर्वाहादाह भावत्वानधिकरणमिति । अनेन च भावत्वस्य प्रमेयत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वोपदर्शनं व्यापकत्वनिरासाय । परं रोषयितुं सिद्धवद्विभागमाह प्रागभावादिभेदेनेति । रोषमाविःकुर्वन्परः प्रत्यवतिष्ठते तदेतदिति । असिद्धधर्मिकं विभजनमित्यर्थः । असिद्धिं साधयति भावत्वेति । नञर्थे भावत्वानधिकरणत्व इत्यर्थः । तेन न सिद्ध्यसिद्धिव्याघातः । मानं शङ्कते इह घटो नास्तीति । अत्र हि नञर्थे भूतलमधिकरणतया घटश्च प्रतियोगितया प्रतीयते यदि च भूतलमेव नञर्थः स्यात् नेदमिति स्यान्न वा तदपि पौनरुक्त्यात् अत एव न घटोपीत्यतिरिक्ताभावसिद्धिरिति भावः । परप्रक्रिययैव पराघातान्नेयमतिरिक्तेऽभावे मानमिति वक्तुं विकल्पयति इहहीत्यादिना । तत्रेति । द्रव्यात्यन्ताभाव इत्यर्थः तथाच प्रतियोगिमति तदत्यन्ताभावस्य तैरेवानभ्युपगमान्न संयोगात्यन्ताभावपक्षवक्ष्यमाणदोषापेक्षा । तदत्यन्तरहिते त्वधिकरणस्वरूपेण कैवल्याविशेषितेनाप्युपपत्तिरिति भावः । तत्समवा-

(१) अभाववादे यत्र यत्र मूलं काठिन्येनोपलब्धं तत्र तत्र त्यज्यते समग्रस्यानुपलंभादिति ।

यवत्तेति । तथाच न तदर्थमधिकरणे कौवल्याद्र इति भावः । संयोगात्यन्ताभावप्रतीतिरपि किं त्रैकालिकघटात्यन्ताभावस्थलीया विवक्षिता उतोपनयस्थलीयेति विकल्प्य नाद्य इत्याह अत्यन्ताभावस्थल इति । तथात्वादिति । भूतलस्वरूपत्वादित्यर्थः । द्वितीयं शङ्कते भूतलसंयुक्तमिति । नन्वत्रापि भूतलात्मैवास्तु तदभावः नेत्याह नन्वित्यादि । अतिप्रसङ्गे हेतुमाह घटवत्यपीति । ननु धर्म्मभेदे भासमानविशिष्टभेदप्रतीतेर्विशेषणाभावविषयत्वाद्घटसंयोगरहितं भूतलं संयोगात्यन्ताभाव इत्युक्तं भवति । तथाच घट्टकुटीप्रभातमापतितमित्यत आह अभावसम्बन्धानुरूपेति । तथा च स घटवद्व्यावृत्तश्चेत्स एवाभावोस्तु किं तत्राभावान्तरेणेति अथ न तत्राह अन्यथेति । ननु मन्मतेऽभाववदेवाभावाधिकरणम् । न च विशेषणत्वेऽभावस्यात्माश्रयः । उपलक्षणत्वे चानुगतानतिप्रसक्तातिरिक्तोपलक्ष्यतावच्छेदकानिरुक्तिरिति वाच्यम् । तुल्यविकल्पतया गोत्वाद्युच्छेदप्रसङ्गात् । न च त्वयापीदमनुमन्तुं शक्यमत आह किञ्च परस्यापीति । अन्यथा तत्राप्यधिकरणस्वरूपातिरिक्ताभावकल्पनापत्तिः । अथानवस्थाभिया तत्त्यागस्तर्हि प्रकृतेपि तथात्वमिति भावः । नन्वत्राप्यभेदे व्यवहारवैचित्र्यासम्भवादन्य एव तत्राभावः न चानवस्था उत्पत्तिज्ञप्त्योरप्रतिबन्धादि

न च विषयावैचित्र्ये बुद्धेर्विचित्रव्यवहारजनकत्वमयुक्तम् विषयमात्रापलापप्रसङ्गादिति वाच्यम् विषयावैचित्र्येऽपि संस्कारजज्ञानस्य तत्ताव्यवहारार्थकत्वस्वीकारात् अन्यथा सोऽपि पदार्थान्तरमेवं भविष्यति । घटो भूतो घटो भविष्यतीति व्यवहारावप्यधिकरणविशेषनिबन्धनौ तथाहि कारणविशेषसमवहितं कपालमालम्ब्य घटभविष्यत्ता व्यवह्रियते तथाच तत्र तदेव निबन्धनम् एवं ध्वंसव्यवहारेऽपि मुद्गरप्रहारादासादितवि‍शेषाधिकरणाधीन एवेति सामान्यतो विशे-

---

ष्यस्वरसादाह बुद्धिविशेषादिति । सघटबुद्ध्यन्यभूतल बुद्धिरित्यर्थः । ननु सघटाघटभूतलयोरवैचित्र्ये तद्धियामपि कुतो वैचित्र्यं स्यादित्याशङ्क्याह न च विषयेति । ननु करणवैचित्र्याद्बुद्धिवैचित्र्यम् ततो व्यवहारवैचित्र्यमित्यत्र किं बाधकमत आह विषय मात्रेति । विषयावैचित्र्येपीति । स्मृतेरनुभूतमात्र विषयत्वादिति भावः । ननु केवलभूतलस्य प्रागभावादिस्थले साधारण्याद्विलक्षणव्यवहारानुपपत्तिरित्यत आह घटो भूत इत्यादि । ननु तत्तदभावान्यो विशेष एव दुर्वच इत्यत आह तथाहीति । तदेवेति ।

अतश्च नास्तिताव्यवहारोऽन्यथोपपन्न इति कस्मान्मेयान्तर्भावः ? भावे वा चतुर्द्धेत्यनुपपन्नमत्यन्ताभावभिन्ने तादात्म्याभावे मानाभावात् । घटः पटो न भवतीति धीरेव मानमिति चेत् न अस्यास्तद्धर्मात्यन्ताभावालम्बनत्वात् अन्यथोपपन्नपाकजरागे घटे नायं श्याम इति धीरन्योन्याभावमालम्बेत । तत्र

---

कालान्तरेऽपि तथा व्यवहारप्रसङ्गेन त्वयापि तस्याव श्यवाच्यत्वादिति भावः । आसादितविशेषेति । आसादितपरस्परविभागककालाधीन एवेत्यर्थः । अत्यन्ताभावभिन्नेति । तादात्म्याभावस्यात्यन्ताभावभेदे इत्यर्थः । नन्वस्ति तावत्पटवत्त्यपि घटे घटः पटो नेति धीः न चात्र पटादन्यस्य प्रतियोगित्वम् शङ्कितुमपि शक्यमनुभवविरोधात् तथाचेयं धीरत्यन्ताभावेतराभावविषया तद्वति तदभाववत्त्वाद्व्यतिरेके वायौ रूपाभावबुद्धिवदित्यस्त्यतिरेके मानमित्याशङ्कते घटः पटो नेति । असिद्ध्या दूषयति । अस्यास्तद्धर्मेति । ननु पटो नेति समानाधिकरणनिषेधप्रतियोगित्वेन पटस्यैवोल्लेखादनुभवविरोध इत्यत आह अन्यथेति । समानाधिकरणनिषेधप्रतियोगित्वेन श्यामस्याप्युल्लेखाविशेषादिति भावः । विशेष्याभेदे विशिष्टभेदानुपपत्तेस्तस्या इव विशेष्यवति तदभावानुपपत्तेरस्या

विशेषमात्रमेव निषिध्यते यदि तदेतत्प्रकृतेपि समानम्। एवं सति धर्मिप्रतिषेधो न कुत्रचिदपि प्रतीयेतेति चेत् नोच्चयम्। किन्तु अनयोर्वैधर्म्यमपि तु प्रतियोगिताविरहतादात्म्यप्रतियोगिकाभावत्व-संसर्गप्रतियोगिकसदातनाभावत्वेऽस्ति इति चेन्न तयोरेवात्यन्ताभावान्योन्याभावातिव्यापकत्वात्। तादात्म्यसंसर्गौ प्रतियोगितावच्छेदकाविति चेन्न तदनिर्वचनात्। किन्तु गृहसंसर्गिघटभिन्नोऽयमित्यत्रात्यन्ताभावलक्षणमतिव्यापकम् स्यात्। प्रति-

अपि धर्माभावालम्बनत्वकल्पनमित्याह तदिति। विस्मरणशीलः शङ्कते एवं सतीति। उपहसन्प्रकृतम् स्मारयति नोच्चैरिति(१)। तन्निराकरण एव प्रवृत्तं प्रति तदभिधानानौचित्यमिति भावः। तयोरेवेति। तादात्म्यात्यन्ताभावेन्योन्याभावलक्षणस्य संसर्गान्योन्याभावे चात्यन्ताभावलक्षणस्येत्यर्थः। ननु तादात्म्यावच्छिन्न-प्रतियोगिकत्वम् संसर्गावच्छिन्नप्रतियोगिकत्वम् च तदर्थ इति न पूर्वातिव्याप्तिरिति शङ्कते तादात्म्येति। तदनिर्वचनादिति। तादात्म्यस्यावच्छेदकत्वस्य च वक्ष्यमाणरीत्यानिर्वचनादित्यर्थः। नन्वेकमात्रधर्मस्तादात्म्यम्, अवच्छेदकत्वम् च स्वरूपसम्बन्धविशेष इति

(१) मूलपाठानुरोधेन चोच्चयमिति युक्तम् प्रतिभाति।

योग्यवृत्तिसदातनाभावत्वमन्योन्याभावस्य प्रति-
योगिवृत्यभावत्वमत्यन्ताभावस्य लक्षणमिति चेत्
न घटपटौ नायं घट इति व्यासज्यवृत्तिप्रति-
योगिकान्योन्याभावे नित्यत्वात्यन्ताभावे चानयो-
रव्यापकत्वात्। स हि नित्यत्वात्यन्ताभावो नित्य-
त्वे न वर्तते तदाश्रयस्यानित्यतापातात्। एवं
प्रागभावप्रध्वंसावपि वैधर्म्याभावान्न भिन्नौ
तथाहि किं तत् प्रागभावत्वम्? प्रतियोगिपूर्वका-
लमात्रवृत्त्यभावत्वम् तदिति चेत् न अन्योन्याश्र-

---

निरुच्यतामत आह किञ्चेति। उक्तदोषोद्धाराय लक्ष-
णान्तरं शङ्कते प्रतियोग्यवृत्तीति। घटपटाविति।
अयं घटो नेत्यन्वयः। अत्यन्ताभावलक्षणस्य नित्यत्वा-
त्यन्ताभावेऽव्याप्तिं विवृणोति सहीति। तदाश्रयस्येति।
नित्यत्वात्यन्ताभावाश्रयस्येत्यर्थः। नित्यत्वाश्रयस्या
त्मादेरिति वा। नित्यत्वस्य नित्यत्वात्यन्ताभावाश्र-
यत्वेन नित्यत्वादिति भावः। प्रतियोगीति। पूर्वका-
लमात्रवृत्तित्वमप्रसिद्धं पूर्वस्यापि किञ्चिदुत्तरतानिय-
मादतः प्रतियोगीति। अत्यन्ताभावनिरस्यै मात्रेति।
असंभवनिरासाय पूर्वेति। ध्वंसरूपप्रतियोगिपूर्वकालमा-
त्रवृत्तौ घटादावतिव्याप्तिनिरासायाभावेति। न चासौ

यप्रसङ्गात् । ध्वंसप्रतियोग्यभावत्वं तदिति चेन्न अभावध्वंसस्यानङ्गीकारात् अङ्गीकारे च ध्वंसस्यापि प्रागभावनिर्वचनताधीननिर्वचनतयाऽन्योन्याश्रय एव। उत्पत्तिमदभावत्वम् ध्वंसत्वमिति चेत् काऽसावुत्पत्तिः ? आद्यसमयसबन्ध इति चेत् किमाद्यत्वम् ? समानकालीनपदार्थप्रति-

---

लक्ष्य एवेति वाच्यम् । अभावस्यैकस्वभावलक्ष्यत्वेन विवक्षितत्वात् । अन्योन्याश्रयप्रसङ्गादिति । पूर्वत्वस्य प्रागभावनिरूप्यत्वादिति भावः । अभावध्वंसस्येति । अभावप्रतियोगिकाभावस्यैवानङ्गीकारेण तद्विशेषस्य सुतरामनङ्गीकारात् इति भावः । ननु भावात्मा तद्ध्वंसः स्वीक्रियत एवेत्यत आह अङ्गीकारे वेति । ध्वंसस्येति । प्रागभावप्रतियोग्यभावस्यैव ध्वंसत्वात् इति भावः । उत्पत्तिमदभावत्वमिति । अभावैकस्वभावस्य लक्ष्यत्वाद्घटादावतिव्याप्तिनिरासाय भावत्वपदम् । अन्योन्याश्रये दत्तचित्तः पृच्छति कासाविति । अज्ञाताशयः परिहरति आद्येति । तन्मुखेनैवान्योन्याश्रयं स्पष्टयितुं पुनः पृच्छति । किमाद्यत्वमिति । किमाद्यसमयसबन्धत्वमित्यर्थः प्रधानावयवाक्षेपेण समुदायस्यैवाक्षेपात् । तेन समयसम्बन्धित्वान्तर्भावेनाद्यत्वमात्रनिर्वचने उत्पत्तिलक्षणे समयसंबंधिपदवैयर्थ्यमित्यपा-

योगिकध्वंसानाधारसमयसम्बन्ध इति चेन्न परस्पराश्रयप्रसङ्गात्। प्रतियोग्यवधिकसमयिकयावदपरत्वासमानकालीनाभावत्वम् प्रागभावत्वं त-

स्तत्। समानकालीनेति। यस्योत्पत्तिर्लक्ष्या तदधिकरणकालवृत्तेः कस्यचित्पदार्थस्य यो ध्वंसस्तदनाधारत्वमाद्यत्वं समयस्य तत्संबंधित्वमुत्पत्तिरित्यर्थः। द्वितीयादिलक्षणव्यावृत्त्यै अनाधारेत्यन्तम्। तस्य च पूर्वलक्षणोत्पन्नशब्दबुद्ध्यादिध्वंसाधारत्वान्निवृत्तिः। असिद्धिनिरासाय प्रतियोगिकेत्यन्तम्। अन्योन्याभावाधारतयाऽसंभवनिवृत्त्यै ध्वंसेति। परस्परेति। ध्वंसोत्पत्त्योरित्यर्थः। अत्र चरमध्वंसोत्पत्तावतिव्याप्तिश्च। तत्समानकालीनपदार्थप्रतियोगकध्वंसाप्रसिद्धिरित्यपि द्रष्टव्यम्। प्रतियोग्यवधिकेति। लक्ष्यप्रागभावप्रतियोगी घटादिस्तदपेक्षं यावत्कालकृतमपरत्वं तत्समानकालीनत्वरहिताभावत्वमित्यर्थः। ध्वंसात्यन्ताभावव्यावृत्त्यै कालीनान्तम्। तत्रासमानकालीनत्वमपरत्वासमानकालीनत्वं वाऽप्रसिद्धमिति प्रतियोग्यवधिकेत्यपरत्वविशेषणम्। ननु ध्वंसेऽतिव्याप्तिः। ध्वस्ते प्रतियोगिनि तदवधिकस्यापरत्वस्यानुत्पादादुत्पादे ध्वंसस्यैवाभावाद्ध्वस्ततदवधिकोत्पन्नस्य च जनकापेक्षाबुद्धिविनाश्यत्वेन ध्वंसे समानकालीनतानापादकतया तस्यापि प्रतियोग्यवधिकापर-

दवधिकसामयिकयावदपरत्वसमानकालीनाभाव-त्वम् ध्वंसत्वमिति चेत् न गुणकर्मप्रागभाव-ध्वंसाव्याप्तेः तयोः परत्वापरत्वप्रतियोगि-कत्वविरहात् । प्रतियोगिसमानकालीनयाव-

त्वासमानकालीनत्वादिति चेत् । न अपरत्वपदेन स्वा-श्रयविवक्षणात् । न च ध्वंसकाले तदाश्रयत्वस्याप्यभावा-द्योग्यतायाश्च प्रतियोग्युत्तरकालीनद्रव्यत्वरूपायास्तद नुपूर्वानुत्पन्नद्रव्यत्वरूपाया वा प्रागभावनिरूप्यत्वेनात्मा-श्रयाद्दोषतादवस्थ्यमिति वाच्यम् । योग्यताया एव तद-धिकाल्पतपनपरिस्पदान्तरितत्वरूपाया विवक्षणात् । प्रतियोगिपूर्वोत्पन्नेन तदवधिकदैशिकापरत्वाश्रयेण समानकालीनतयाऽसम्भववारणाय सामयिकेति । स्वाव-धिककिञ्चिदपरत्व आश्रयनाशोत्तरभाविनि ध्वंसेऽतिव्या-प्तिनिरासाय यावदिति । नचैवमपि तत्रैवातिव्याप्तिः । किञ्चिदपरत्वाश्रयसमानकालीनत्वेऽपि नष्टापरत्वाश्रयस-मानकालीनत्वाभावेन यावत्समानकालीनत्वाभावादिति वाच्यम् । सामान्याभावस्यैव भंग्यन्तरेणोक्तत्वात् । एतेन ध्वंसलक्षणं व्याख्यातम् । गुणेति । अद्रव्योपल-क्षणम् । तेन ध्वंसस्यापि संग्रहः । प्रतियोगित्वेति । अवधित्वविरहादित्यर्थः परत्वापरत्वयोः परस्पराश्रय-मवधीकृत्यैवोत्पत्तेर्गुणादीनां च तदनाश्रयत्वादिति

त्पदार्थावधिकत्वेन परत्वापरत्वे विशेषणीये इति चेन्न प्रलयसमयोत्पन्नपरमाणुक्रियाप्रागभावप्रध्वंसाव्यापनात् । तत्रापि ब्रह्माण्डान्तरवर्तिकार्यद्रव्याधिकरणकपरत्वापरत्वे स्त इति चेन्न तदा कार्यद्रव्यमात्रविरहात् । गन्धानाधारसमयानाधाराभावत्वं प्रागभावत्वमिति चेन्न चरमगन्धनाशोत्तरसमुत्पन्नभोगप्रागभावाव्यापनात् । तत्र प्रमाणाभाव इति चेन्न संशयेनापि

---

भावः । अव्याप्त्युद्धाराय शङ्कते प्रतियोगिसमानकालीनेति । प्रतियोग्यनतिरिक्तकालीनेत्यर्थः । तेन नानाघटसमवधानेऽन्त्यप्रतियोगिकालीनपूर्वावधिकापरत्वाश्रयमध्यसमानकालीनेऽन्त्यप्रागभावे नाव्याप्तिः । पूर्वस्य प्रतियोग्यतिरिक्तकालीनत्वात् । पदार्थेषु यावत्स्वविशेषणं परत्वापरत्वयोस्तद्विकल्पाभिप्रायेण । न च क्षणिकान्त्यशब्दप्रागभावेऽव्याप्तिः । तस्य क्षणिकत्वानभ्युपगमात् । प्रलयसमयेति । उपलक्षणमिदं महाप्रलयव्यवहितपूर्वकालीनपरमाणुक्रियाप्रागभावस्यापि । तदा कार्येति । "यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" इत्यनेन तत्स्वापस्य सर्वकार्यद्रव्यप्रलयहेतुत्वावधारणादिति भावः । गन्धानाधारेति । यद्यत्र वक्तव्यम् तदुक्तम् कारण

तु लक्षणनिर्वाहात् । किन्तु प्रवृत्तिनिमित्तम् भाव-विरोधित्वमिति चेन्न किं तद्विरोधित्वम् ? सहानवस्थानमिति चेत् अन्योन्याश्रयात् गोत्वाश्वत्वयोरपि परस्पराभावापातात् अन्योन्याभावप्रसङ्गा-

तात्प्रसङ्गाच्च इति तत एवावगन्तव्यम् । (१) अभावपदेति । नञादिपदप्रवृत्तिनिमित्तमित्यर्थः । अस्य वाक्यत्वात् । भावविरोधित्वमिति । घटादौ भावपदमौपचारिकमिति भावः । सहानवस्थानमिति । नन्वत्र भावसहानवस्थायित्वं सामान्यतोऽभावेऽसम्भवि आधारधर्मसहावस्थायित्वात् । स्वप्रतियोगिसहानवस्थायित्वं च नाभावपदप्रवृत्तिनिमित्तम् अननुगमादिति चेत् । न आदिपदाद्धस्तुनः स्वप्रतियोगिनोऽभावस्य भावत्वेन सामान्येनोपस्थितौ समभिव्याहृतपदान्तरवशाद्घटादिरूपस्वप्रतियोगिविरोधित्वप्रतीतावविरोधात् । यद्यप्येवं विरोधित्वमात्रं तथा वक्तुं युक्तं नञादेर्विरोधित्वमात्रोपस्थितौ पदान्तरसमभिव्याहाराद्घटादिभावविशेषविरोधित्वप्रतीतिसम्भवात्तथापि पर्युदासव्युत्पन्नादभावपदात्तथैव प्रतीतेर्भावान्तर्भावाभिधानमिति ध्येयम् । अत्र संयोगात्यन्ताभावेऽतिव्याप्तिः आकाशादाववृत्तौ चातिव्याप्तिरिति दोषे सत्येव दोषान्तर-

(१) अत्र मूलपाठे भ्रष्ट इति भाति ।

च्च । ननु सत्ताप्रकारकज्ञानाविषयत्वमभावत्व-मिति चेन्न ह्यभावे भ्रमरूपमपि सत्ताप्रकारकज्ञान-मुत्पद्यते तस्य तद्विरोधितयैवोपस्थितेरिति चेत् । नैवम् । सामान्येनान्येनापि तदुपस्थितेः संभवात् अन्यथाऽप्यधिकारे भावधर्मारोपो न स्यात् ।

माह परस्परेति । प्रतियोगिसहाबस्थायित्वात्तस्येति भावः । सत्ताप्रकारेति । न च सत्ताभाव एवाव्याप्ति-रिति वाच्यम् । आधाराधेयभावेन सम्बन्धेन सत्ताप्रका रकज्ञानाविषयत्वस्य विवक्षणादिति भावः । ननु ज्ञानं प्रमा भ्रमो वा ? नाद्यः । सामान्यादावतिव्याप्तेः । नापरः भ्रमस्याभावेपि सुलभत्वादतिव्याप्तेरित्याशंक्याह नही-ति । तद्विरोधितयैवेति । किं तदधिकरणतयैवोपस्थितेर्न तदारोप इति मतमुत तदनधिकरणतावच्छेदकधर्मवत्त-येति ? नाद्य इत्याह सामान्येनेति । अन्येनापि निषेध-त्वप्रमेयत्वादिनेत्यर्थः । भवतेः सत्तार्थकतयाऽभावपदस्य सद्भिन्नार्थकत्वादिति भावः । अभावपदादभावोप स्थितिः सत्ताविरोधित्वेनेति माभूत्तदा सत्तारोपः रूपान्तरेणापि तु तदवस्थितिः सम्भवत्येवेति कुतो न सत्तारोप इति भावः । अन्त्ये दोषान्तरमप्याह । अन्य-थेति । रूपगत्यानधिकरणतावच्छेदकाभावत्वम् प्रका-

घटाभाववद्बुद्धेश्चाक्षुषत्वापत्तेः । सत्तामात्रवत्त्वं तदिति चेन्न सामान्यादेरभावत्वापत्तेः । द्रव्यादिषडन्यतमत्वमभावत्वम् तदन्यत्वम् भावत्वमिति चेन्न अन्यतमाभावस्य निरूपणीयत्वात् तदनाकलनेऽपि भावप्रतीतेरनुभवसिद्धत्वात् सर्वमिदं समाकुलमिति ।

अत्रोच्यते घटाभाववद्भूतलमितिधीस्तावत्सकलजनसिद्धा तत्र भूतलमेव यदि घटाभावः स्यात् न तत्रैव तद्वृत्तेः आत्मनि वृत्तिविरो-

रक्षोपस्थितिविषये तमसि तदारोपानुपपत्तेरित्यर्थः । अचाक्षुषतेति । अभावत्वस्य ज्ञानगर्भत्वे तद्बुद्धिघटत्वांशेपि लौकिकचाक्षुषत्वानुपपत्तेरित्यर्थः । द्रव्यादीति । यद्यपि द्रव्यादिषडन्यतमत्वेनैवाभावनिर्वचनं सम्भवति तथाप्यभावपदस्य योगार्थमुपपादयितुमन्यतमत्वेन भावत्वनिर्वचनम् । यद्वा व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिकाभाववादी द्रव्यादावेवातिव्याप्तिं शङ्कतेति भिया तथाभिधानम् । सर्वमिदमिति । मेयान्तरत्वं चातुर्विध्यं चेत्यर्थः ।

आधाराधेयभावानुपपत्त्या भूतलघटाभावयोर्भेदं सिद्धान्तयिष्यंस्तदविद्धिं तावन्निरस्यति घटाभाववदिति । ननु प्रमेयत्वे प्रमेयत्ववृत्तिवद्विहापि स्यात्,

घात् एवं सति भूतलं घटाभावः स्यात् न तु तद्वदिति। किञ्च घटे स्मर्यमाणे यत्र दूराद्भूतलस्वरूपमाकलितम् तत्र किमपरमवशिष्यते यद्ग्रहविलम्बादभावव्यवहारो न भवति। कैवल्यग्रहविलम्बादिति चेत् किं तत्? ननूक्तमेव घटवद्भूतलान्यभूतलत्वम् तदिति। उक्तं न पुनर्युक्तम् तथाहि किं तदन्यत्वम् तदन्योन्याभावत्वम् वा स्वरूपमेव वा तदवृत्तिधर्मवत्त्वम् वा? नाद्योऽनङ्गीकारात्। नेतरः दूरादपि तस्य गृहीतत्वात्। तृतीये तु घटकुड्यां प्रभातम् न हि घटभूतलावृत्तिभूतले भावस्वरूपम् धर्ममूतलम् धर्ममीक्षामहे। पृथक्त्वस्याप्येकस्मिन् भावात्। एतेन सघटभूत-

---

तत्र केवलान्वयितावेदकप्रमाणस्यैवात्रापि लाघवसहकृतप्रत्ययस्यैव स्ववृत्तिवाधित्वादित्यरुचेराह किञ्च घट इति। निकटे घटस्मरणकालीनभूतलज्ञानेऽभावव्यवहार इष्ट इवेत्यत आह दूरादिति। किं तत्कैवल्यमित्यर्थः। घटेति। अभावस्यैव तादृशधर्मस्याङ्गीकारादिति भावः। नन्वस्ति स्वरूपभेदस्तत्राह न हि घटेति। स्वरूपभेदस्य निर्वक्तुमशक्यत्वादिति भावः। 'यदुक्तं सघटबुद्ध्यन्यभूतलबुद्धेरेवाभावव्यवहार' इति तत्र किं वस्तु-

लघुबुद्धेरन्यभूतलबुद्धिरभावस्य व्यवहारिकेति निर-स्तम् । अपि च आयुक्तघटे भूतलेऽन्या भूतलबुद्धि-र्भवति न च तत्राभावव्यवहारः । भवत्येव तत्रापि स इति चेत् भवतु तथापि घटदर्शने बाध्यते तावत् सा च बाधाविषयाविशेषे कथं स्यात् । न च तत्रापि प्रतिबन्दिर्निरस्ता तत्र हि संस्काररूप-कारणविशेषो नियामकः प्रकृते न कारणविशेषो-पीत्यलमतिपीडया । न चाभावाधिकरणतावच्छे-दकधर्मे वा भावखण्डनम् गोत्वादिधर्मखण्डनप्र-सङ्गात् । तत्रानुभूयमानत्वेन न खण्डनमिति यदि, तदेतत् प्रकृतेपि समानम् । न चाभावे घटो नास्ती-

---

तः सघटस्य बुद्धिर्विवक्षिता उत सघटत्वोल्लेखिनी? नाद्य इत्याह एतेनेति । भूतलपदं कादाचित्काधिकरणसंसर्गा-भावाभिप्रायेण । वस्तुतः प्रतियोगिमद्बुद्धिभिन्नाधिकर-णबुद्धिरेव विवक्षिता अवृत्तिरेव पदार्थो नास्त्येवेति भावः । न द्वितीय इत्याह अपिचेति । स इति । विसं-वादीति भावः । भूतलमात्रालम्बनाया धियोऽभावव्यव-हारहेतुत्वे घटदर्शनबाध्यतानुपपत्तेर्घटविरोधिविषया सा तया वाच्या, न च भूतलमात्रं तथेत्यतिरिक्ताभावसि-द्धिरित्याह भवत्विति । ननु स्मृत्यनुभवयोस्तुल्यविषय-

सिवद्गावेऽप्यभावबुद्धिसमर्थनम्, अभावस्य घटवि-
रोधित्वेनैव घटाभावव्यवहारार्थकत्वात् भूतला-
देस्तु घटविरोधित्वाभावात् ।

त्वेपि सोऽयमिति विविधव्यवहारजनकत्ववद्भूतलबु-
द्ध्योरपि स्यादित्यत आह न च तत्रेति । अभावस्येति ।
अधिकरणस्वरूपस्यानतिप्रसक्ततया तेनैव विरोधिव्यव-
हारोपपत्तेर्नातिरिक्ताभावकल्पनं, भूतलस्वरूपं तु न
तथा, घटवतोपि तस्य सम्भवादिति भावः । (१)नन्वेवं
वायौ रूपाभावो नातिरिक्तः सिद्ध्येत् अधिकरणद्रूप-
प्याभावेन तस्यैव रूपविरोधिव्यवहारहेतुत्वोपपत्तेः ।
आधाराधेयभावानुपपत्तेश्चाभाववदेव सुपरिहरत्वादि-
त्यस्वरसादाह अस्तुवेति । तस्य घटाद्यविरोधित्वा-
दिति । घटवत्तादशायामपि कारणान्तरसमवहिताधि-
करणस्वरूपसम्भवादित्यर्थः । न च पूर्वकालाविशेषा-
त्मकाकारसमवधानाभावान्न तथेति वाच्यम् । तथा
सति समयविशेषावच्छिन्ना कपालमालैव घटोऽस्तु
किमधिकेन तेनापीति भावः । तद्वत्तयेति । यत्पूर्वं
घटसमवाय्यासीत्तदेवेदं कपालमिति प्रत्यभिज्ञायमा-
नसमवायिनिबन्धन इति या तेनान्यथासिद्धिः सा न
घटवत्तादशायामपि तथा प्रत्यभिज्ञानसम्भवादित्यर्थः ।

(१) अतः परं मूलं नोपलब्धम् ।

न च मुद्गरप्रहारासादितपरस्परविभागकपालनिबन्धनतैवास्त्विति वाच्यम् । कुलालव्यापारासादितसंयोगविशेषकपालालम्बनतया घटव्यवहारस्याप्यन्यथासिद्धिप्रसङ्गात् अनुभवस्य चोभयत्र तुल्यत्वादिति भावः । धर्मान्तराभावप्रसक्ताविति । घटत्वगतस्य घटवृत्तित्वे सति घटेतरावृत्तित्वादेरेवायमभावो न घटत्वस्येत्यपि सुवचत्वादिति भावः । यद्यपि घटत्ववृत्तिधर्मात्यन्ताभावस्य घटेऽपि वर्तमानतया तत्रापि घटान्योन्याभावप्रतीतिप्रसङ्गान्न तेनास्यान्यथासिद्धिशङ्का तथाप्यप्रामाणिकत्वमात्रे तात्पर्यम् । तथाहि घटः पटो नेतिप्रतीतेः पटत्वात्यन्ताभावालम्बनत्वे प्रतियोगितावच्छेदकपटत्वमात्रवृत्तिधर्मप्रकारकतत्प्रतीतिजन्यता वाच्या न च ततः पूर्वं तत्प्रतीतौ प्रमाणमस्ति, अतः पटत्वेन प्रतीतः पट एव तदभावप्रतियोगी । अत एव यत्र नायं संयोगी रक्तोऽयं न श्याम इत्यादौ प्रतियोगितावच्छेदकत्वाभिमतस्य संयोगश्यामादेः स्ववृत्तिधर्मप्रकारकप्रतीतिसम्भवस्तत्र तत्संसर्गाभावालम्बनत्वमिष्यत एव । न च शुक्लप्रतीतौ नायं श्याम इति प्रतीतेरपि तथात्वापत्तिः । उभयसम्भवेऽप्यसति बाधके समानाधिकरणनिषेधप्रतीतेरन्योन्याभावविषयत्वादिति । विनिगमकप्रमाणाभावादपि नात्यन्ताभावेन प्रतीतेरन्यथासिद्धिरिति गूढाशय आह किञ्चेति । अन्योन्याभावेने

ति । भूतलादावत्यन्ताभावाधिकरणेऽन्योन्याभावस्यापि संनिहितत्वादिति भावः । आशयमविद्वान्विनिगमकं पृच्छते नन्वेवं घट इति । तत्र तदन्योन्याभावासत्त्वा-दिति भावः । सिद्धान्ती स्वाशयमुद्घाटयति तत्र तद्ध-र्मेति । घटत्वाद्यन्योन्याभाव इत्यर्थः । नन्वेवं घटवति भूतलेऽपि घटात्यन्ताभावव्यवहारापत्तिः घटत्वान्योन्या-भावस्य तत्र सत्त्वादित्यरुचेराह । वैलक्षण्यमेवोपपाद-यति इदमिह नास्तीति । संसर्गेणेति । यद्यप्येवं घट-त्वादिकमेव प्रतियोगितावच्छेदकं न संसर्ग इत्युक्तमाय प्रसक्तिप्रस्तावे तथाप्यवच्छेदकैक्येऽभाववैलक्षण्यानुपपत्तेः संसर्गोऽप्यवच्छेदककोटिप्रविष्ट इति ये मन्यते तदेकदेशिः मतेनेदं द्रष्टव्यम् । ननु घटः पटो नेत्यत्र न तादात्म्यं प्र-तियोगितावच्छेदकं घटपटोभयतादात्म्यस्याप्रसिद्धे-रित्यत आह न च तादात्म्यमिति । प्रतियोगिमात्रवृत्ति धर्मस्येत्यर्थः । नन्वेकमात्रवृत्तित्वं नाम तदन्यावृत्तित्वं तथा चान्योन्याश्रय इत्यत आह नचैकेति । समा-नाधिकरणेति । घटत्वसमानाधिकरणा धर्मा रूपपरि-माणविशेषादयस्तद्विरोधिनस्तत्त्वहानवस्थिता ये घट-त्वादयस्तदसामानाधिकरण्यं तदधिकरणावृत्तित्वं घ-टत्वस्यैव एवमन्यस्यापीत्यर्थः । स्वविरोधीत्येवो-क्तौ संयोगादावनेकवृत्तावतिव्याप्तिरिति समानाधिक

शेत्यादिक्रमोपादानम् । तस्य च स्वसमानाधिकरणद्रव्यत्वविरोधिवृत्तत्वसामानाधिकरण्यान्नातिव्याप्तिः । ननु स्वसमानाधिकरणकिञ्चिद्धर्मविरोधिधर्मसामानाधिकरण्यविवक्षायां गुणो न द्रव्यमित्यन्योन्याभावप्रतियोगितावच्छेदके द्रव्यतादात्म्येऽव्याप्तिः, तस्य स्वसमानाधिकरणघटत्वविरोधिपटत्वसमानाधिकरणत्वात् । यावद्धर्मविरोधित्वमात्रविवक्षायां च संयोगादावतिव्याप्तिरिति चेत् । न एतन्मते सामान्याभावाभावात् द्रव्यत्वस्यानेकवृत्तेः प्रतियोगितायामवच्छेदकत्वात् तत्तद्द्रव्याभावप्रतियोगितावच्छेदकस्य च किञ्चिद्विवक्षापक्षेपि संग्रहात् । विरोधित्वमसामानाधिकरण्यं चात्यन्ताभावगर्भमिति न पुनरन्योन्याश्रय इति भावः । नन्ववच्छेदकत्वं व्यावर्त्तकत्वं व्यावृत्तिश्चान्योन्याभाव एवेति पुनरन्योन्याश्रय इत्यत आह अवच्छेदकत्वमिति । विशिष्टप्रतीतिविशेषसाक्षिकस्वरूपसम्बन्धविशेष इत्यर्थः । ननु विलक्षणप्रतीतिमात्रेण विलक्षणान्योन्याभावस्वीकारे पाकरक्ते नायं श्याम इति प्रतीतेस्तत्रैव च तदन्योन्याभावप्रसङ्गः तद्वदेव चान्यत्रापि तदसिद्धिप्रसङ्ग इत्यत आह नायं श्याम इति । सविशेषणे हीति न्यायादिति भावः । विलक्षणाभावसिद्धौ तयोर्भेदकमाह एकवृत्तीति । सामान्यान्योन्याभावस्यानङ्गीकारान्न तदव्याप्तिः । संसर्गाभावे संसर्ग एव प्रतियोगितावच्छेदकत्वे

इदंघटत्वादेस्तदनवच्छेदकतया तत्प्रकारकज्ञानानपेक्षाप्रसङ्गात्संसृष्टेदंघटत्वादि तथा वाच्यम् तच्चैकतरस्ये वेत्यतिव्याप्तिरिति चेत् । न विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव तदपेक्षणात् । संसर्गावच्छिन्नेति । ननु प्रतियोगीतराधिकरणावृत्तेस्तदुभयसंसर्गस्यातिप्रसक्तस्य कथं प्रतियोगितावच्छेदकत्वं तथात्वे व्यासज्यप्रतियोगिकाभाव च दुर्वारत्वप्रसङ्गात् । तथाप्यतिप्रसक्तद्वित्वावच्छिन्नैकैकप्रतियोगितासम्भवात् । प्रत्येकपर्यवसितावच्छिन्नप्रतियोगिकाभावादेव प्रतीत्युपपत्तेर्न तत्कल्पनमिति यदि, प्रकृतेपि घटत्वावच्छिन्नप्रतियोगिकाभावकल्पनमिति तुल्यमिति चेत् । अत्राहुः । अधिकरणे प्रतियोगितावच्छेदकारोपहेतुकनिषेधाविषयोभावोन्योन्याभावः । अधिकरणे प्रतियोग्यारोपहेतुकनिषेधविषयः सदातनाभावोऽत्यन्ताभाव इति । अत्र विशेषान्तरमन्यत्र चिन्तितम् मत एवावधार्यं । प्रतियोगिवृत्तिसदातनाभावत्वरूपेऽत्यन्ताभावलक्षणे पूर्वोक्तामव्याप्तिम् निरस्यति नित्यत्व इति । तथा च प्रतियोभूतस्य नित्यताभावः प्रतियोगिवृत्तिरेवेति नाव्याप्तिरिति भावः । अन्योन्याभावविशेषेत्यन्ताभावान्योन्याभावलक्षणयोरतिव्याप्त्यव्याप्ती प्रकृते ननु गृहभूतेति । अतिव्यापकतेत्युपलक्षणमव्यापकताया अपि । अत एवात्योन्याभावलक्षणाव्याप्तिं विवृणोति । घटविशे-

षत्वस्यैकवृत्तेरेवाज्ञ. प्रतियोगितावच्छेदकत्वान्नोक्तदोष इत्याह एकवृत्तिरेव हीति । अयं घटो घटपटौ नेति—प्रतीतिसिद्धद्वित्वरूपानेकवृत्तिधर्मावच्छिन्नप्रतियोगिकेऽन्योन्याभावविशेषे तल्लक्षणाव्याप्तिं शङ्कते तथापि व्यासज्येति । किमपूर्वव्याप्तेरिति शेषः । नन्वेवमपि घटत्वसामान्यावच्छिन्नप्रतियोगिके घटसामान्यान्योन्याभावेऽव्याप्तिः तत्प्रतियोगितावच्छेदकसामान्यस्यैकवृत्तित्वाभावादित्याशङ्क्याह सोऽयं चतुर्विधोपीति । नतु मिलितेति । तस्य यावद्विशेषाभावव्याप्ततयाऽऽवश्यकैस्तैरेव व्यवहारोपपत्तावतिरिक्तसामान्याभावे मानाभावादिति भावः । मानमाशङ्कते ननु वायाविति । विशेषेति । विशेषाणां तत्तद्रूपाभावव्यक्तिविशेषाणां दर्शन इत्यर्थः । निश्चिते संशयायोगादिति भावः ।

येन रूपेण यत्र यन्निश्चयस्तेन रूपेण तत्र तत्संशयो न तु रूपान्तरेणापि । तत्तद्रूपत्वेन रूपविशेषानिश्चये रूपत्वेन रूपस्यापि संशयायोगप्रसङ्गात् । न हि सामान्याभाववत्सामान्यरूपमस्ति तथा च तद्वद्देन तत्तद्रूपाभावत्वेन रूपेण निश्चितानामेव विशेषाभावानां रूपाभावत्वेनानिश्चितेन रूपेण संशयविषयत्वसम्भवान्नातिरिक्ताभावकल्पनेत्याशयेन परिहरति नैवमित्यादिना । यदि च निश्चयप्रकारीभवतो रूपाद-

मैवम् प्रत्येकरूपप्रतियोगिकभावनयैव सामान्यतस्तन्निरासोपपत्तावतिरिक्तकल्पनस्य निर्बीजत्वात् कथमन्यथा पृथिव्यादिसमूहः वायौ नास्तीत्यवधार्य वायौ रूपम् नवेति सन्दिग्धे । किन्तु सर्वमेव रूपं वायौ नास्तीति शब्दादजानतो वायौ रूपसंशयनिवृत्तिर्न स्यात् मिलिताभावस्यानिश्चयात् । ततो न निवर्तत एव संशय इति चेत् न अभावविरोधात् । मिलिताभावोप्यग्रे निश्चीयत

---

न्येन रूपेण निश्चिते संशयो नेष्यते किन्तु मिलितप्रतियोगिकाभावव्यक्त्यन्तरे एव तदा पृथिवीजलतेजोरूपाणि प्रत्येकसमदायाभ्यां न वायाविति ज्ञाने संशयो न स्यात् मिलिताभावस्यापि निश्चितत्वेन संशयाविषयत्वादित्याह कथमन्यथेति । ननु नायं मिलिताभावप्रत्ययः किन्तु तत्तत्पृथिवीरूपत्वाद्यवच्छिन्नप्रतियोगिकविशेषाभावनिश्चयस्य विशेषाभावसंशय एव विरोधित्वं न सामान्याभावसंशये अतो निश्चितं तमादाय संशयोपपत्तिरिति भवदभिमतमयुक्तम् विशेषाभावनिश्चयस्यापि वायू रूपवान्नवेति संशयविरोधितायास्त्वयापि वाच्यत्वात् । अन्यथा शाब्दे विशेषाभावनिश्चये सामान्यसंशयो न निवर्त्ततेत्यर्थः । अनिश्चयादिति । तदुपस्थापकाभावादिति भावः । प्रमाणाभावा-

इति चेत् न प्रमाणाभावात् । एतावदेवमिति नि-
श्चयस्तत्र प्रतिबन्धक इति चेत् तदेतत्प्रकृतेपि

दिति । तदतद्व्याप्यत्वाभिमतस्य विशेषाभावकूटस्या-
प्युपस्थापकाभावादिति भावः । ननु प्रतीतविशेषाभा-
वप्रतियोगिरूपातिरिक्तं रूपत्वं नास्तीति निश्चये वि-
शेषाभावनिश्चयेनापि संशयप्रतिबन्धो न सामान्याभा-
वनिश्चयेनैव प्रतिबन्धकाननुगमस्यादोषत्वादिति श-
ङ्कते एतावदेवेति । तर्ह्येतावन्त्येव रूपाणीति ज्ञाना-
भावदशायां विशेषाभावनिश्चयेऽपि तदतिरिक्तरूपस-
म्भावनया तदादाय वायू रूपवानन्वेति संशयः तद्दशायां
चासंशय उपपन्न इति किं सामान्याभावातिरेकस्वी-
कारेणेत्याह तदेतत्प्रकृतेपीति । अत एव पृथिवीज-
लतेजोरूपाणि न वायाविति विशेषाभावनिश्चयेपि यदै-
तावन्त्येव रूपाणीति निश्चयस्तदा न संशयः । अन्यथा
सामान्याभावस्यानिश्चयात्तत्संशयो दुर्वार इति भावः ।
ननु प्रत्येकरूपाभावानां पृथिवीरूपाभावत्वादिना
निश्चितानां रूपाभावत्वेनानिश्चितेन सामान्येन रूपेण
संशयविषयत्वमित्युक्तम् तावदयुक्तं रूपाभावत्वं हि रूप-
त्वोपहितप्रतियोगिकाभावत्वं रूपत्वावच्छिन्नप्रतियो-
गिकाभावत्वं वा ? नाद्यः । विशेषाभावप्रतियोगिसमूहे
रूपत्वस्य निश्चितत्वेन सन्देहानुपपत्तेः । न द्वितीयः ।

समानमित्यलमतिविस्तरेण ।

सामान्याभावानङ्गीकारे रूपत्वस्य प्रतियोगितावच्छेद-कत्वासम्भवेन तदवच्छिन्नप्रतियोगिकाभावाप्रसिद्ध्यैव तत्कोटिकसंशयानुपपत्तेः । न च विशेषाभावप्रतियो-गितैव तदवच्छेद्या । प्रत्येकवृत्तेस्तस्या अतिप्रसक्तसा-मान्यावच्छेद्यत्वासम्भवात् । यदप्युक्तमतिरिक्तरूपस-म्भावनया तदादाय संशयोपपत्तिरिति । तदपि न । त-द्विरहदशायामपि संशयस्यानुभवसिद्धत्वादित्याशंक्याह इत्यलमतिविस्तरेणेति । अयमाशयः । रूपत्वेपि हि तत्प्रतियोगिकयावदभावकूटस्यैव संशयकोटित्वम् । न च वायौ रूपं न वेत्यत्र यावत्त्वस्य कोटित्वेनानुल्लेखाद्रूपा-भावमात्रस्यैव कोटित्वेनानुभवाच्च नैवमिति वाच्यम् सर्वकिञ्चिद्रूपाभाववति वायुघटादौ रूपं नास्तीति व्यवहारस्य दर्शनादर्शनाभ्यां यावदर्थगर्भत्वकल्पनात् । अत एव पृथिव्यादिप्रत्येकरूपाभावकूटेऽवधारितेऽति-रिक्तरूपसम्भावनायां यावदर्थगर्भकोट्यनिश्चयात्संशयो विपर्ययेऽसंशय उपपन्नः । यत्त्वेनादृशसम्भावनाभावेपि संशयोऽनुभवसिद्ध इति, तन्न । एतावन्त्येव रूपाणीति-निश्चयेपि संशयप्रसङ्गात् । किञ्च घटे रूपमस्तीत्यत्र यथा रूपत्वजातिमत्सत्त्वमात्रं प्रतीयते तथा नास्ती-त्यत्रापि तज्जातीयस्य नास्तिता प्रतीयतां सामा-न्यावच्छिन्नप्रतियोगिताकनास्तिताप्रतीतिस्तु कुतः ?

प्रतियोगितान्यूनानतिरिक्तवृत्तित्वस्यावच्छेदकत्वस्योपस्थापकाभावात्। भावे वा यावदभावप्रतियोगिवृत्तित्वभावस्यावर्जनीयत्वाद्रूपत्ववद्यावदभावभानं वृत्तमेवेति वृथा कलकलः। वस्तुतस्तत्तद्रूपाभावप्रतियोगितानां रूपत्वोपहिताभावप्रतियोगित्वेनानुगतीकृतानां रूपत्वमवच्छेदकमिति रूपत्वावच्छिन्नप्रतियोगिकाभावभानमस्मत्पक्षेऽप्यविरुद्धम्। तदेकत्वानेकत्वयोरेव परं विवाद इति न किञ्चिदेतत्। अपि च वायौ रूपं नास्तीति सामान्याभावनिश्चयेपि वायौ रूपमस्ति नवेति वा पृथिवीरूपमस्ति नवेति वा कुतो न कदाचिदपि संशयः विशेषाभावानां त्वन्मतेऽनिश्चयात्। न च सामान्याभावस्य यावद्विशेषाभावनियतत्वात्ततस्तन्निश्चयः। नियमग्रहस्यासार्वदिकत्वात्, संशयाभावस्य च विपर्ययात्। न च तवापि कुतो संशयः। रूपाभावत्वप्रकारकतन्निश्चयस्य तद्भिन्नपृथिवीरूपाभावत्वप्रकारकसंशयाविरोधित्वादिति वाच्यम्। यत्र हि यद्धर्मपुरस्कारेण यत्प्रतीतिस्तद्धर्मवत्तया भासमाने तत्र तद्विरोध्यप्रतीतेः। रूपवत्त्वपुरस्कारेण रूपविशेषाणां वायुवृत्त्यभावप्रतियोगिताप्रतीतौ पृथिवीरूपत्वेन वायुवृत्तित्वकोट्यनुपस्थानात्। किञ्च प्रतियोगितावच्छेदकप्रकारकतज्ज्ञानस्याभावज्ञानहेतुत्वात्तदभावप्रतियोगितावच्छेदकतत्तद्रूपत्वप्रकारकज्ञानासम्भवादसर्वज्ञस्य यावद्विशेषाभाव-

ज्ञानमेव न स्यात् । न च प्रत्येकाभावप्रतियोगिता-नामेकरूपेणानुगतीकृतानां सामान्यमेवावच्छेदकमिति वाच्यम् । प्रतियोगितावच्छेदकभेदस्याभावभेदनियमभ-ङ्गप्रसङ्गादिति प्रतिभाति ।

अन्ये तु आद्यक्षणे घटे रूपं नास्तीतिधीरनु-भवसिद्धा न सामान्याभावं विषयीकरोति । अत्य-न्ताभावान्योन्याभावयोरेव तथात्वात्तयोश्च तत्रासम्भ-वात्किन्तु कस्यचित्प्रागभावं कस्यचिदत्यन्ताभावं या-वद्रूपसंसर्गाभावत्वेनेति वाच्यम् । तथा च वायावपि तथैवोपपत्तेर्न सामान्याभावकल्पना । एतेनैकत्वोल्ले-खानुपपत्त्या सामान्यावच्छिन्नप्रतियोगिकैकाभावसि-द्धिरित्यपास्तम् । तत्राप्येकत्वोल्लेखबलेन तदापत्ते-रित्याहुः ।

यत्तु प्रतियोगितावच्छेदकभेदादप्यभावो भिद्यते अन्यथा विशिष्टाभावस्यातिरेकासिद्धिप्रसङ्गात् एक-प्रतियोगिकाभावचतुष्टयाभावप्रसङ्गाच्च । एवं च दे-शकालविशेषसंसर्गतादात्म्यरूपप्रतियोगितावच्छेदकभे-देन घटाभावचतुष्टयसिद्धिवत्सामान्याभावसिद्धिरप्रत्यू-हैवेति । तन्न । विशिष्टाभावातिरेकपक्षस्य शक्तिवाद-सिद्धान्तावसरे निरस्तत्वादेकदेशिमतत्वात् । प्राग-भावादिभेदश्चानन्यथासिद्धविलक्षणप्रतीतिवशादेवाभ्यु-पगम्यते नावच्छेदकभेदात् । घटो भविष्यतीत्यादौ

अन्ये तु संसर्गेण यस्य प्रतियोगितावच्छिद्यते स संसर्गाभावः तद्विपरीतप्रतियोगिकस्तादात्म्याभाव इत्याहुः ।

यत्पुनरुक्तम्—प्रलयसमयोत्पन्नविनष्टपरमाणुक्रियाप्रागभावध्वंसाव्यापकत्वं प्रागभावध्वंसयोस्तदपि मन्दम् परत्वापरत्वे प्रति समवायिकारणत्वम् गुणकर्मणोर्नास्ति तत्र द्रव्यत्वस्य तन्त्रत्वात् अवधित्वे तु तयोर्न विरोधः । ननु तथापि किं प्रागभावत्वम् प्रध्वंसत्वम् वा ? ननूक्तमेव प्रतियोग्यवधिकसामयिकपरत्वसमानकालाभावत्वम् प्रागभावत्वम् एवंभूतपरत्वासमानकालाभावत्वम् प्रध्वंसत्वमिति । मैवम् चरमोत्पन्नपदार्थप्रागभावाव्यापनात् तदवधिकपरत्वासिद्धेः प्रतियोगिविनाशोत्तरोत्पन्नतदवधिकपरत्वसमानकालिकध्वंसस्याप्यनुपपत्तेः । अत एव प्रतियोग्यवधिकयावत्परत्वासमानकालाभावत्वम् ध्वंसत्वमिति निरस्तम् प्रा-

कालविशेषसंसर्गस्य प्रतियोगितावच्छेदकत्वे तत्प्रकारकज्ञानाभावे प्रागभावाद्यप्रतीतिप्रसङ्गात् ।

गभावस्यापि तादृशत्वात् । प्रतियोगिसमानकालिकं सदातनसकलपदार्थावधिकसमवायिकपरत्वसमानकालिकासदातनाभावत्वम् प्रागभावत्वम् विपरीतम् ध्वंसत्वमिति चेन्न साकल्यम् पदार्थविशेषणम् परत्वविशेषणम् वा ? नाद्यः तदधिकपरत्वासिद्धेः नेतरः स्वरूपासिद्धेः ॥

अत्राभिधीयते । प्रतियोगिसमानाकालासदातनकिञ्चित्पदार्थावधिसामयिकपरत्वासमानकालिकत्वशून्यतादृक्पदार्थावधिकपरत्वसमानकालीनासदातनाभावत्वम् प्रागभावत्वम् । अदृष्टानाधारकालानाधाराभावत्वम् तत्त्वमिति कश्चित वैपरीत्येन ध्वंसनिर्वचनमिति सर्वं समञ्जसम् ।

अभावपदप्रवृत्तिनिमित्तम् चिन्त्यते । भावाभावव्यवहृतिस्तावत् सकलजनसिद्धा सा च परस्परविलक्षणधर्मनियम्या । स च विलक्षणो धर्मो भावाभावयोः कल्प्यमानो भावरूपो वा अभावरूपो वा क्वचिद्भावरूपः क्वचिदभावरूपो क्वचिद्भावाभावरूपो वा । तत्राद्यन्तयोः गौरवापत्तेः तृतीयः परिशिष्यते सोऽपि भावरूपो नाभावे कल्पते सप्तमाभावकल्पनापत्तेः तथा च